23-6-1999

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीवेदपुरुषाय नमः ॥
गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ॥ पंचैतान् संस्मरन्नित्यं
वेदवाणीं प्रवर्तयेत् ॥ अथानुवाकसूत्रम् ॥ इषेत्त्वैका, वसोः
पवित्रंतिस्रोऽग्नेव्रतपते सप्त, पवित्रेस्थो द्वे, शर्म्मासितिस्रो,
धृष्टिरसिशर्म्मासिद्विकौ, देवस्यत्त्वा तिस्रो, देवस्यत्त्वा पंच,
प्रत्युष्टꣳरक्षस्तिस्रो, दशैकत्रिꣳशत् ॥ हरिः ॐ ॥ इषेत्त्वा ॥
इषेत्त्वोर्ज्जेत्त्वावायवस्त्थदेवोवः सविताप्प्रार्प्पयतु श्रेष्ठतमाय

संहि. कर्म्मणऽआप्प्यायद्ध्वमग्घ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवा पृ. अ.
॥ १ ॥ ऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोद्ध्रुवाऽअस्मिन्गोपतौ
स्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ [ १-१ ] व्वसोꣳ
पवित्रम् ॥ व्वसोꣳपवित्रमसिद्द्यौरसिपृथिव्व्यसिमातरिश्श्वनो
घर्म्मोसिव्विश्श्वधाऽअसि ॥ परमेणधाम्नाद्दꣳहस्वमाह्वार्म्माते
यज्ञपतिर्ह्वार्षीत् ॥ २ ॥ व्वसोꣳपवित्रम् ॥ व्वसोꣳपवित्रमसि ॥ १ ॥
शतधारंव्वसोꣳपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातु

व्वसोँ॑पवित्रेणशतधारेणसुप्प्वाकामधुक्षः ॥ ३ ॥ साव्विश्श्वा

युः ॥ साव्विश्श्वायुःसाव्विश्श्वकर्म्मासाव्विश्श्वधायाः ॥ इन्द्रस्य

त्त्वाभागꣳसोमेनातनच्मिव्विष्णोर्हव्यꣳरक्ष ॥४॥ [ ३-२ ]

अग्ग्नेव्व्रतपते । व्व्रतञ्चरिष्ष्यामितच्छकेयन्तन्मेराद्ध्यताम् ॥ इद

महमनृतात्सत्त्यमुपैमि॥५॥ कस्त्त्वा। युनक्तिसत्त्वायुनक्तिक

स्म्मैत्त्वायुनक्तितस्म्मैत्त्वायुनक्ति ॥ कर्म्मणेवांव्वेषायवाम् ॥६॥

प्रत्त्युष्टꣳरक्षः ॥ प्रत्त्युष्टꣳरक्षःप्रत्त्युष्टाऽअरातयोनिष्टप्तꣳरक्षो

संहि. निष्टप्ताऽअरातयः ॥ उर्व्वन्तरिक्षमन्न्वेमि ॥ ७ ॥ धूरसि ॥ धूर्व पू. अ.
॥ २ ॥ सिधूर्व्वधूर्व्वन्तन्धूर्व्वतँय्योस्म्मान्धूर्व्वतितन्धूर्व्वयंव्वयन्धूर्व्वामः ॥
देवानामसिव्वह्नितमꣳसस्स्नितमम्पप्प्रितमञ्जुष्टतमन्देवहूतमम्
॥ ८ ॥ अह्रुतमसि । हविर्द्धानन्दृꣳहस्वमाह्वार्म्मातेयज्ञपति
र्ह्वार्षीत् ॥ व्विष्णुस्त्वाक्क्रमतामुरुव्वातायापहतꣳरक्षोयच्छन्ता
म्पञ्च ॥ ९ ॥ देवस्यत्त्वा । सवितुश्प्प्रसवेश्श्विनोर्ब्बाहुब्भ्यां ॥ २ ॥
म्पूष्णोहस्ताब्भ्याम् ॥ अग्ग्नयेजुष्टङ्गृह्णाम्यग्ग्नीषोमाब्भ्या

ञ्छुट्टँङ्गृह्णामि ॥ १० ॥ भुतायँत्त्वा ॥ भुतायँत्त्वानारातयेस्स्वर
भिविक्ख्यैषन्दृँहन्तान्दुर्य्याँ२पृथिव्यामुर्व्वन्तरिँक्षमन्वेमि
पृथिव्यास्त्वानाभौसादयाम्म्यदित्त्याऽउपस्त्थेग्ग्नेहव्यँ२रँक्ष
॥ ११ ॥ [ ७-३ ] पवित्त्रेँस्त्थऽ ॥ पवित्त्रेँस्त्थोव्वैष्णव्व्यौ
सवितुर्व्वः प्प्रसवऽउत्त्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभि
भिः ॥ देवीरापोऽअग्ग्रेगुवोऽअग्ग्रेपुवोग्ग्रऽइममद्ययज्ञन्न
यताग्ग्रेयज्ञपतिँसुधातुँय्यज्ञपतिन्देवयुवम् ॥ १२ ॥ युष्म्मा

संहि. इन्द्रः ॥ युष्म्माऽइन्द्रोवृणीतवृत्रतूर्य्येयूयमिन्द्रमवृणीद्ध्वं पू. अ.
॥ ३ ॥ वृत्रतूर्य्येप्प्रोक्षितास्त्थ ॥ अग्नयेत्त्वाजुष्टम्प्रोक्षाम्म्यग्नीषोमा
भ्यान्त्वाजुष्टम्प्रोक्षामि ॥ दैव्यायकर्म्मणेशुन्धद्ध्वन्देवयज्ज्या
यैयद्वोशुद्धाःपराजग्घ्नुरिदंव्वस्तच्छुन्धामि ॥ १२ ॥ [ २-४ ]
शर्म्मासि ॥ शर्म्मास्यवधूतःरक्षोवधूताऽअरातयोदित्त्यास्त्व
गसिप्प्रतित्त्वादितिर्व्वेत्तु ॥ अद्रिरसिव्वानस्प्पत्त्योग्रावासिपृथु ॥ ३ ॥
र्बुध्नःप्प्रतित्त्वादित्त्यास्त्वग्व्वेत्तु ॥ १४ ॥ अग्नेस्तनूः ॥ अग्ने

स्तनूरसिव्वाचोव्विसर्ज्जनन्देववीतयेत्त्वागृह्णामिबृहद्ग्रावासिव्वान
स्प्पत्त्यश्सऽइदन्देवेब्भ्योहविश्शमीष्वसुशमिशमीष्व ॥ हवि
ष्कृदेहिहविष्कृदेहि ॥ १५ ॥ कुक्कुटोसि ॥ कुक्कुटोसिमधु
जिह्वऽइषमूर्ज्जम।वदुत्त्वयाव्वयꣳसङ्घातꣳसङ्घातञ्जेष्मव्वर्षवृद्ध
मसिप्प्रतित्त्वाव्वर्षवृद्धंव्वेत्तुपरापूतꣳरक्षःपरापूताऽअरातयोप
हतꣳरक्षोव्वायुर्व्वोव्विविनक्तुदेवोवःसविताहिरण्ण्यपाणिःप्प्रति
गृभ्णात्त्वच्छिद्रेणपाणिना ॥ १६ ॥ [३-५] धृष्टिरसि ॥

॥ ४ ॥ धृष्टिरस्यपाग्ग्नेऽअग्निमामादञ्जहिनिष्क्रव्यादꣳ सेधादेवयजं

वह ॥ ध्रुवमसिपृथिवीन्दृꣳह ब्रह्मवनित्वाक्षत्रवनिसजातव

न्युपदधामिभ्रातृव्यस्यवधाय ॥ १७ ॥ अग्नेब्रह्म । गृभ्णी

ष्वधरुणमस्यन्तरिक्षन्दृꣳह ब्रह्मवनित्वाक्षत्रवनिसजातवन्यु

पदधामिभ्रातृव्यस्यवधाय ॥ धर्त्रमसिदिवन्दृꣳह ब्रह्मवनि

त्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय ॥ विश्वा ॥ ४ ॥

भ्यस्त्वाशाभ्यऽउपदधामिचितस्स्थोर्ध्वचितोभृगूणामङ्गिर

सान्तपंसातष्प्यद्धम् ॥ १८॥ [ २-६ ] शर्म्मासि॥ शर्म्मास्यवंधूतꣳ
रक्षोवंधूताऽअरांतयोदिंत्त्यास्त्वगंसिप्प्रतिंत्त्वादिंतिर्व्वेत्तु ॥ धिष
णांसिपर्व्वंतीप्प्रतिंत्त्वादिंत्त्यास्त्वग्वेंत्तुदिवस्कंम्भनीरंसिधिष
णांसिपार्व्वतेयीप्प्रतिंत्त्वापर्व्वतीर्व्वेत्तुधान्न्यमसि ॥ १९ ॥ धान्न्य
मसि । धिनुहिदेवान्प्राणायंत्त्वोदानायंत्त्वाव्यानायंत्त्वा ॥
दीर्ग्घामनुप्प्रसिंतिमायुंषेधान्देवोवंः सविताहिरंण्ण्यपाणिꣳ
प्प्रतिंगृब्भ्णात्त्वच्छिंद्द्रेणपाणिनाचक्षुंषेत्त्वामहीनाम्पयोंसि

॥ ५ ॥ ॥ २० ॥ [ २-७ ] देवस्यत्त्वा ॥ सवितुश्प्प्रंसवेश्विनोर्ब्बाहुभ्यां
म्पूष्णोहस्ताभ्याम् ॥ संव्वंपामिसमापऽओषधीभिःसमोष
धयोरसेन ॥ सꣳरेवतीर्ज्जगतीभिःपृच्यन्ताꣳसम्मधुमतीर्म्म
धुमतीभिःपृच्यन्ताम् ॥ २१ ॥ जनयत्त्यैत्त्वा ॥ जनयत्त्यै
त्त्वासँय्यौमीदमग्नेरिदमग्नीषोमयोरिषेत्त्वाघर्म्मोसिव्विश्वा
युरुरुप्प्रथाऽउरुप्प्रथस्वोरुतेयज्ञपतिःप्प्रथतामग्निष्टेत्त्वचम्मा ॥ ५ ॥
हिꣳसीद्देवस्त्वासविताश्श्रपयतुव्वर्षिष्ठेधिनाके ॥ २२ ॥ माभेः ॥

माभेर्म्मासंविक्क्थाऽअतमेरुर्य्यज्ञोतमेरुर्य्यजमानस्यप्प्रजाभू
यात्त्रितायंत्त्वाद्वितायंत्त्वैकतायंत्त्वा॥२३॥[३-८]देवस्यंत्त्वा।
सवितुःप्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम्॥ आददेऽद्ध्व
रकृतंन्देवेब्भ्यऽइन्द्द्रस्यबाहुरसिदक्षिणःसहस्रभृष्टिःशततेजा
व्वायुरसितिग्ग्मतेजाद्विषतोव्वधः॥२४॥ पृथिविदेवयजनि॥ पृ
थिविदेवयजन्न्योषध्यास्तेमूलम्माहिंसिषंव्व्रजङ्गच्छगोष्ठानंव्व
र्षतुतेद्यौर्ब्बधानदेवसवितःपरमस्याम्पृथिव्व्याँशतेनपाशैर्य्यो

संहि. स्म्मान्द्वेष्ट्टियञ्चंव्वयन्द्विष्म्मस्तमतोमामौक् ॥२५॥ अपाररुम् ॥
॥ ६ ॥ अपाररुम्पृथिव्यैदेवयजंनाद्वध्यासंव्व्रजङ्गच्छगोष्ठानंव्वर्षंतुतेद्यौ
र्ब्बधानदेवसवितःपरमस्यांम्पृथिव्याᳪशतेनपाशैर्य्योस्म्मान्द्वे
ष्ट्टियञ्चंव्वयन्द्विष्म्मस्तमतोमामौक् ॥ अररोदिवम्मापप्तोद्द्र
प्स्सस्तेद्याम्मास्कंव्व्रजङ्गच्छगोष्ठानंव्वर्षंतुतेद्यौर्ब्बधानदेवसवि
तःपरमस्यांम्पृथिव्याᳪशतेनपाशैर्य्योस्म्मान्द्वेष्ट्टियञ्चंव्वयन्द्वि ॥ ६ ॥
ष्म्मस्तमतोमामौक् ॥ २६ ॥ गायत्रेणंत्त्वा ॥ गायत्रेणंत्त्वाच्छ

न्दंसापरिंगृह्णामित्रैष्टुंभेनत्वाच्छन्दंसापरिंगृह्णामिजागतेन
त्वाच्छन्दंसापरिंगृह्णामि ॥ सुक्ष्माचासिंशिवाचासिस्योनाचा
सिंसुषदाचास्यूर्ज्जस्वतीचासिपयंस्वतीच ॥ २७ ॥ पुराक्रूरस्यं
विसृपोविरप्शिन्नुदादायंपृथिवीञ्जीवदानुम् ॥ यामैरयँश्चन्द्रमं
सिस्वधाभिस्तामुधीरासोऽअनुदिश्ययजन्ते ॥ प्रोक्षंणीरासांद
यद्विषतोवधोसि ॥ २८ ॥ [५-९] प्रत्युष्टुंरक्षः ॥ प्रत्युष्टुंरक्षः
प्रत्युष्टाऽअरातयोनिष्टप्तुंरक्षोनिष्टप्ताऽअरातयः ॥ अनिशि

तोसिसपत्क्नक्षिद्वाजिनन्त्वावाजेध्ध्यायैसम्मार्ज्मि॥ प्रत्त्युष्टꣳर
॥७॥ क्षः प्रत्त्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः॥ अनि
शितासिसपत्क्नक्षिद्वाजिनीन्त्वावाजेध्ध्यायैसम्मार्ज्मि॥ २९॥
अदित्त्यैरास्नासिविष्णोर्वेष्प्पोस्यूर्ज्जेत्त्वादब्धेनत्त्वाचक्षुषावप
श्श्यामि॥ अग्नेर्ज्जिह्वासिसुहूर्द्देवेब्भ्योधाम्म्नेधाम्म्नेमेभवयजुषे
यजुषे॥ ३०॥ सवितुस्त्वा। प्प्रसवऽउत्त्पुनाम्म्यच्छिद्रेणपवित्रेँ ॥७॥

१ वेष्पोसि इति काण्वानां पाठः । तत्संहिताभाष्ये छांदसः पकारादेश इति सायणाचार्योक्तिः । माध्यंदिनीयानां तु वेष्पोसि इति पाठः । अत्र उवटमहीधरादिभाष्यकारैः पकारादेशस्यानुक्तेः ।

णसूर्य्यस्यरश्म्मिभिः ॥ सवितुर्व्वःप्प्रसवऽउत्त्पुनाम्म्यच्छिद्द्रे
णपवित्त्रेणसूर्य्यस्यरश्म्मिभिः ॥ तेजोसिशुक्रमस्यमृतमसि
धामनामासिप्प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१ ॥
[३-१०] इतिश्रीवाजसनेयसंहितायां प्रथमोध्यायः ॥ १ ॥
श्रीवेदपुरुषाय नमः । अनुवाकसूत्रम् ॥ कृष्णोसिषड, ग्नेवाज
जित्तिस्रो, मयीद, मग्नीषोमयोः पंचका, वक्षेदध्धायोचतस्रः,
संवर्चसापंचा, ग्नयेकव्यवाहनायषट् सप्तचतुस्त्रिंशत् ॥ हरिः

संहि. ॥ ८ ॥

ॐ ॥ कृष्णोऽसि ॥ कृष्णोस्याखरेष्ठोग्नयेत्त्वाजुष्टम्प्रोक्षामिवे
दिरसि बर्हिषेत्त्वाजुष्टाम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रो
क्षाम्म्यदित्त्यैव्युन्दनम् ॥ १ ॥ अदित्त्यैव्यु न्दनमसिव्विष्णो
स्तुपोस्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्थान्देवेभ्योभुवपतये
स्वाहाभुवनपतयेस्वाहाभूतानाम्पतयेस्वाहा ॥ २ ॥ गन्धर्व्वस्त्वा ।
व्विश्वावसुः परिदधातुव्विश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्नि
रिडऽईडितः ॥ इन्द्रस्यबाहुरसिदक्षिणोव्विश्वस्यारिष्ट्यैयजमान

पू. अ. ॥ ८ ॥

स्यपरिधिरंस्यग्निरिडऽईंडितः ॥ मित्रावरुंणौत्त्वोत्तरतःपरिध

त्तान्ध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजंमानस्यपरिधिरंस्यग्निरि

डऽईंडितः ॥ ३ ॥ वीतिहोत्रन्त्वा । कवेद्युमन्तꣳसमिंधीमहि ॥

अग्नेबृहन्तंमध्वरे ॥ ४ ॥ समिदंसि ॥ समिदंसिसूर्य्यंस्त्वापुर

स्तांत्पातुकस्यांश्चिदभिशंस्त्यै ॥ सवितुर्बाहूस्त्थऽऊर्णम्म्रद

सन्त्वास्तृणामिस्वासस्त्थन्देवेभ्यऽआत्त्वावसंवोरुद्राऽआंदि

त्याःसंदन्तु ॥५॥ घृताच्यंसि । जुहूर्न्नाम्नासेदम्प्रियेणधाम्नां

॥ ९ ॥ ष्प्रियꣳसदऽआसीदघृताच्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्ना
ष्प्रियꣳसदऽआसीदघृताच्यसिध्रुवानाम्नासेदम्प्रियेणधाम्ना
ष्प्रियꣳसदऽआसीदष्प्रियेणधाम्नाष्प्रियꣳसदऽआसीद ॥ ध्रुवा
ऽअसदन्नृतस्ययोनौताव्विष्ण्णोपाहिपाहियज्ञम्पाहियज्ञपतिम्पा
हिमाँय्यज्ञन्न्यम् ॥ ६ ॥ [६-१] अग्ग्नेव्वाजजित ॥ अग्ग्नेव्वाज
जिह्वाजन्त्वासरिष्ष्यन्तंव्वाजजितꣳसम्म्मार्ज्मि ॥ नमोदेवे ॥ ९ ॥
भ्यःस्वधापितृभ्यःसुयमेमेभूयास्तमस्कन्नमद्य ॥ ७ ॥ अस्कं

न्नमद्य । देवेभ्युऽआज्ज्युᳬं सम्भ्रियासमङ्घ्रिणाव्विष्ण्णोमात्त्वाव
क्क्रमिषंव्वसुमतीमग्ग्नेतेच्छायामुपस्त्थेषंव्विष्ण्णोस्त्थानमसीतऽ
इन्द्रोव्वीर्य्यमकृणोदूर्द्ध्वोध्वरऽआस्त्थात् ॥८॥ अग्ग्नेव्वेः ॥ अग्ग्ने
व्वेर्होत्त्रंव्वेर्दूत्त्यमवतान्त्वान्द्यावापृथिवीऽअवत्त्वन्द्यावापृथिवी
स्विष्टकृद्देवेभ्युऽइन्द्रऽआज्ज्येनहविषाभूत्त्स्वाहासञ्ज्योतिषा
ज्ज्योतिः ॥९॥ [३-२] मयीदम ॥ मयीदमिन्द्रऽइन्द्रियन्दधा
त्त्वस्म्मान्रायोमघवानःसचन्ताम् ॥ अस्म्माकᳬंसन्त्वाशिषः

सत्त्यानः॑सन्त्वाशिषऽउप॑हूतापृथिवीमातोप॒मा॑म्पृथिवी मा॒
॥ १० ॥ ताह्वयतामग्निराग्नीध्रात्स्वाहा॥१०॥ उप॑हूतो॒द्यौः ॥ उप॑हूतो
द्यौष्पितोपमान्द्यौष्पिताह्वयतामग्निराग्नीध्रात्स्वाहा ॥ देव
स्यत्त्वासवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥
प्रतिगृह्णाम्म्यग्नेष्ट्वास्येनप्प्राश्नामि ॥११॥ एतन्ते। देवसवित
र्य्यज्ञम्प्राहुर्बृहस्प्पतयेब्रह्मणे ॥ तेनयज्ञमवतेनयज्ञपतिन्तेन ॥ १० ॥
मामव ॥१२॥ मनोजूतिः ॥ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्प्प

तिर्य्यं ज्ञमिमन्तंनोत्त्वारिंष्टॅं य्युज्ञᳬसमिमन्दंधातु ॥ व्विश्वेदेवास

इहमांदयन्तामो ॥ ॐम्प्रतिष्ठ ॥१३॥ एषाते ॥ एषातेऽअग्नेस

मित्तयाव्वर्द्धस्वचाचंप्प्यायस्व ॥ व्वर्द्धिषीमहिंचव्वयमाचंप्प्यासि

षीमहि ॥ अग्नेव्वाजजिद्वाजंन्त्वाससृवाᳬंसंव्वाजजितᳬसम्मा

र्ज्जिम ॥१४॥ [५-३] अग्नीषोमयोरुज्जितिम् ॥ अग्नीषोमंयोरु

ज्जितिमनूज्जेषंव्वाजंस्यमाप्प्रसवेनप्प्रोहांमि॥अग्नीषोमौतमपनु

दतांय्योस्म्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मोव्वाजंस्यैनम्प्रसवेनापोहा

संहि. मि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषंव्वाजंस्यमाप्प्रसवेनप्प्रोहामि ॥ पृ. अ.
॥११॥ इन्द्राग्नीतमपंनुदतांय्योस्म्मान्द्वेष्ट्टियञ्चव्वयन्द्विष्म्मोव्वाजंस्यै
नम्प्रसवेनापोहामि ॥ १५ ॥ व्वसुंब्भ्यस्त्वा । रुद्देब्भ्यंस्त्वादि
त्त्येब्भ्यंस्त्वासञ्ज्ञांनाथान्द्यावापृथिवीमित्रावरुंणौत्त्वाव्वृष्ट्यां
वताम् ॥ व्यन्तुव्वयोक्क्तꣳरिहाणामरुताम्पृषंतीर्गच्छव्वशापृश्नि
र्ब्भूत्त्वादिवङ्गच्छततोनोव्वृष्टिमावह ॥ चक्षुष्प्पाऽअंग्नेसिचक्षु ॥११॥
र्म्मेपाहि ॥ १६ ॥ यम्परिधिम ॥ यम्परिधिम्पर्य्यधत्थाऽअग्नेदेव

पणिभिर्ग्गुह्यमानꣳ॥ तन्त्वाऽएतमनुजोषम्भराम्म्येषनेत्त्वदपचे
तयाताऽअग्नेश्प्प्रियम्पाथोपीतम् ॥ १७॥ सꣳस्स्रवभागास्त्थे
षाबृहन्तः प्प्रस्तरेष्ठाः परिधेयाश्च्चदेवाः॥ इमांव्वाचमभिविश्श्वे
गृणन्तऽआसद्यास्स्मिन्बर्हिषिमादयद्ध्वꣳस्वाहाव्वाट् ॥ १८ ॥
घृताचीस्त्थꣳ॥ घृताचीस्त्थोधुर्य्यौपातꣳ सुम्न्नेस्त्थः सुम्न्नेमा
धत्तम् ॥ यज्ञनमश्च्चतऽउपचयज्ञस्यशिवेसन्तिष्ठस्वस्विष्टेमेस
न्तिष्ठस्व ॥१९॥[५-४]अग्नेदब्धायो ॥ शीतमपाहिमादिद्योः
१०५

पाहिप्प्रसित्त्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्न्याऽअविषन्नः पितुङ्कृ
णुसुषदायोनौस्वाहावाडग्नयेसंवेशपतयेस्वाहासरस्वत्त्यैयशो
भगिन्न्यैस्वाहा ॥ २० ॥ वेदोसि ॥ वेदोसियेनत्त्वन्देववेददेवे
भ्योवेदोभवस्तेनमह्यंवेदोभूयाः ॥ देवागातुविदोगातुंवित्त्वा
गातुमित ॥ मनसस्पतऽइमन्देवयज्ञᳪंस्वाहावातेधाः ॥२१॥
सम्बर्हिः ॥ सम्बर्हिरङ्क्ताᳪंहविषाघृतेनसमादित्त्यैर्वसुभिः सम्म
रुद्भिः ॥ समिन्द्रोविश्श्वदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा

॥ २२ ॥ कस्त्त्वा ॥ कस्त्त्वाव्विमुंञ्चतिसत्त्वाव्विमुंञ्चतिकस्म्मै
त्त्वाव्विमुंञ्चतितस्म्मैत्त्वाव्विमुंञ्चति ॥ पोषांयरक्षंसाम्भागोसि
॥ २३ ॥ [४] संव्वर्च्चसा ॥ संव्व[1]र्च्चसापयंसासन्तनूभिरगंन्म
हिमनंसासꣳशिवेनं ॥ [2]त्वष्ष्टांसुदत्रोव्विदंधातुरायोनुंमार्ष्टुतन्न्वो
यद्विलिंष्टम् ॥२४॥ दिविव्विष्णुः ॥ दिविव्विष्ष्णुर्व्यंक्रꣳस्तजा
गंतेनच्छन्दंसाततोनिर्भक्क्तोयोस्म्मान्द्वेष्टियञ्चंव्वयन्द्विष्म्मो

१ संव्वर्चसा । अत्र "परं तु रेफहकाराभ्याम्" (शु. य. प्रा. ४ अ. १०१ सू.) इत्यनेन रकारात्परस्य चकारस्य द्वित्वम् । २ त्वष्टा । अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२-सू.) इत्यनेन टकारस्य द्वित्वम् । एवं दिवि विष्णुः । द्विष्मः । योस्मान् । इत्येतादृशेषु बोध्यम् ।

सं. २

संहि. न्तरिक्षेव्विष्णुर्व्यक्रꣳस्तत्रैष्टुभेनच्छन्दसाततोनिर्भक्तोयो पृ. अ.
॥१२॥ स्मान्द्वेष्टियञ्चव्वयन्द्विष्मः पृथिव्यांव्विष्णुर्व्यक्रꣳस्तगाय ॥२॥
त्रेणच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मो
स्मादन्नादस्यैप्प्रतिष्ठायाऽअगन्मस्वः सञ्ज्योतिषाभूम ॥२५॥
स्वयम्भूरसि ॥ स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्च्चोदाऽअसिवर्च्चोमे
देहि ॥ सूर्य्यस्यावृतमन्वावर्त्ते ॥ २६ ॥ अग्नेगृहपते । सुगृ ॥१३॥
हपतिस्त्वयाग्नेहङ्गृहपतिनाभूयासꣳ सुगृहपतिस्त्वम्मयाग्ने

गृहपतिनाभूयाꣳ ॥ अस्थूरिणौगार्हपत्त्यानिसन्तुशतꣳहिमाꣳ

सूर्यंस्यावृतमन्न्वावर्त्ते ॥ २७ ॥ अग्नेव्व्रतपते । व्व्रतमचारिषु

न्तदशकन्तन्मेराधीदमहँय्यऽएवास्मिसोस्मि ॥ २८ ॥

[ ५ ] अग्नयेकव्यवाहनाय । स्वाहासोमायपितृमतेस्वाहा ॥

अपहताऽअसुरारक्षाꣳसिव्वेदिषदः ॥ २९ ॥ येरूपाणि ।

प्रतिमुञ्चमानाऽअसुराꣳसन्तःस्वधयाचरन्ति ॥ परापुरोनि

पुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥ अत्र

१०९

संहि. पितरः ॥ अत्र॑पितरोमादयद्ध्वँय्यथाभागमावृ॑षायद्ध्वम् ॥ पू. अ.
॥ १४ ॥ अमीमदन्तपितरोयथाभागमावृ॑षायिषत ॥ ३१ ॥ नमोवः ॥ २ ॥
पितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमो
वःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरोमन्यवेन
मोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदे
ष्मैतद्वःपितरोवासआधत्त ॥ ३२ ॥ आधत्त । पितरो ॥ १४ ॥
गर्भङ्कुमारम्पुष्करस्रजम् ॥ यथेहपुरुषोसत् ॥ ३३ ॥ ऊर्ज्जं

वहन्तीꣳ॥ ऊर्ज्जंवहन्तीरमृतंघृतम्पयः कीलालम्परिस्रुतम् ॥
स्वधास्त्थतर्प्पयतमेपितॄन् ॥ ३४ ॥ [ ६ ] इतिश्रीवाजसनेय
संहितायांद्वितीयोऽध्यायः ॥ २ ॥ श्रीवेदपुरुषायनमः ॥ अनुवा
कसूत्रम् । समिधाग्निं, भूर्भुवःस्वश्चतुष्का, वग्निर्ज्योतिर्द्वे, उपप्र
यन्तोऽअध्वरꣳषड्विꣳशतिः, भूर्भुवःस्वश्चतस्रो, गृहामातिस्रः,
प्रघासिनोहवामहे पञ्च, पूर्णादर्विंद्वे, ऽअक्षन्नमीमदन्तषडे, षते

१ ऊर्जम् । अत्र "परं तु रेफहकाराभ्याम्" ( शु. य. प्रा. ४ अ. १०१ सू. ) रेफहकाराभ्यां परं व्यञ्जनं द्विरुच्यते । तेन रकारात्परस्य जकारस्य द्विर्भावः

संहि. सप्त, दश ॥ १० ॥ त्रिषष्टिः ॥ ६३ ॥ हरिः ॐ ॥ समिधा पू. अ.
॥ १५ ॥ ग्निम् ॥ समिधाग्ग्निन्दुवस्यतघृतैर्ब्बोधयतातिथिम् ॥ आस्मिन् ॥ २ ॥
न्हव्याजुंहोतन ॥ १ ॥ सुसमिद्धायशोचिषे । घृतन्तीव्रञ्जुहोतन ॥
अग्नयेजातवेदसे ॥ २ ॥ तन्त्वा । समिद्भिरङ्गिरोघृतेनवर्द्ध
यामसि ॥ बृहच्छोचायविष्ठ्य ॥ ३ ॥ उपत्त्वा । ग्नेहविष्मतीर्घृ
ताचीर्य्यन्तुहर्य्यत ॥ जुषस्वसमिधोमम ॥ ४ ॥ [४-१] भूर्भुवः ॥ ॥ १५ ॥



१ घृतैर्ब्बोधयता । अत्र परं तु रेफहकाराभ्याम् ( शु. य. प्रा. ४ अ. १०१ सू. ) इत्यनेन रकारात्परस्य बकारस्यअनस्य द्वित्वम् । २ सुसमिद्धाय । अत्र भाविभ्यः सः षं समानपदे ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन सुकारात्परस्य सकारस्य षकारे प्राप्ते अनुसन्तनोतु बृहस्पतिसुतस्यसुसमिद्धाय० ( शु. य. प्रा. ३ अ. ८२ क. ) इत्यनेन सकारस्य प्रकृतिभावः न षत्वम् ।

भूर्भुवःस्स्वर्द्यौरिवभूम्नापृथिवीवव्वरिम्म्णा ॥ तस्यास्त्तेपृथिविदे

वयजनिपृष्ठेग्ग्निमन्नादमन्नाद्यायादधे ॥५॥ आयम् । आयङ्गौः

पृश्श्निरक्क्रमीदसदन्मातरम्पुरः ॥ पितरञ्च प्प्रयन्त्स्वः ॥ ६ ॥

अन्तश्चरति । रोचनास्यप्प्राणादपानती ॥ व्यक्ख्यन्महिषोदि

वम् ॥ ७ ॥ त्रिंशद्धाम । त्रिंशद्धामव्विराजतिव्वाक्पतङ्गायधी

यते ॥ प्रतिवस्त्तोरहद्युभिः ॥८॥ [४-२] अग्निर्ज्योतिः ॥ अ

---

१ वाक्पतिः । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु. य. प्रा. ४ अ. १०० सू. ) इत्यनेन ककारस्य द्वित्वम्, तत्र पूर्वः ककारो द्विरुक्तिजः पकारः संयोगः ।

॥१६॥ ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः

स्वाहा ॥ अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः

स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ ९ ॥ सजूर्दे

वेन । सवित्रा सजूरात्र्येन्द्रवत्या ॥ जुषाणोऽअग्निर्वेतु स्वाहा ॥

सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या ॥ जुषाणः सूर्य्यो वेतु स्वाहा

॥ १० ॥ [ २-३ ] उपप्रयन्तोऽअध्वरम् ॥ उपप्रयन्तोऽअध्वुर ॥१६॥

१ उपप्रयन्तोऽअद्ध्वरम् अत्र एदोद्भ्यां पूर्वमकारः ( शु. य. प्रा. ४ अ. ६१ सू. ) इत्यनेन सर्वत्र पूर्वरूपे प्राप्ते प्रकृतिभाव ऋक्षु ( शु. य. प्रा. ४ अ. ८१ सू. ) इत्यनेन गाहमानादिभिः सूत्रैरभिनिहितेभ्योऽन्यत्र ऋक्षु प्रकृतिभावविधानसामर्थ्यात्र पूर्वरूपम् ।

म्मन्त्रंव्वोचेमाग्नयें ॥ आरेऽअस्म्मेचेशृण्णवुते ॥ ११ ॥ अग्नि
र्म्मूर्द्धा । दिवेश्ककुत्त्पतिं÷पृथिव्याऽअयम् ॥ अपाॐरेताॐसि
जिन्वति ॥ १२ ॥ उभावाम् ॥ उभावामिन्द्राग्नीऽआहुवध्यां
ऽउभाराधंसक्ष्सहमादुयध्यै ॥ उभादातारांविषाॐरयीणामुभा
व्वाजस्यसातयैहुवेवाम् ॥ १३ ॥ अयन्तैं ॥ अयन्तेयोनिर्क्र्क्तृत्त्वि
योयतौजातोऽअरोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोव्वर्द्धया

१ दिवःककुत्पतिः । अत्र दिवोऽककुत्पृथिव्योः ( शु. य. प्रा. ३ अ. २४ सू. ) इत्यनेन अककुत्पृथिव्योर्विसर्जनीयस्य सकारविधानादत्र सकारः ककुत्परत्वात् ।

संहि. ॥१७॥ रयिम् ॥ १४ ॥ अयमिह । प्रथमोधायिधातृभिर्होतायजिष्ठो पू॰ अ.
ऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंवि ॥ ३ ॥
भ्वंविशेविशे ॥ १५ ॥ अस्यप्रत्नाम् ॥ अस्यप्रत्नामनुद्युतꣳ
शुक्रन्दुदुह्रेऽअह्रयः ॥ पयःसहस्रसामृषिम् ॥ १६ ॥ तनूपाऽ
अग्ने।सितन्वम्मेपाह्यायुर्दाऽअग्नेस्यायुर्म्मेदेहिवर्च्चोदाऽअग्ने
सिवर्च्चोमेदेहि ॥ अग्नेयन्मेतन्वाऽऊनन्तन्मऽआपृण ॥ १७ ॥ ॥१७॥
इन्धानास्त्वा । शतꣳहिमाद्युमन्तꣳसमिधीमहि ॥ वयस्वन्तो

व्वयस्कृतुँसहस्वन्तँसहस्कृतम् ॥ अग्नेसपत्नदम्भंनमदब्धा

सोऽअदाभ्यम् ॥ चित्रावसोस्वस्तितेपारमशीय ॥ १८ ॥

सन्त्वम् ॥ सन्त्वमग्नेसूर्य्यस्यवर्च्चसागथाः समृषीणाँस्तुते

न ॥ सम्प्रियेणधाम्नासमहमायुषासंवर्च्चसासम्प्रजयासँराय

स्पोषेणग्मिषीय ॥ १९ ॥ अन्धस्त्थ ॥ अन्धस्त्थान्धोवो

भक्षीयमहस्त्थमहोवोभक्षीयोर्ज्जस्त्थोर्ज्जंवोभक्षीयरायस्पोषं

---

१ अन्धसःस्थ इतिपदे प्रत्ययसवर्णम्मुदि शाकटायनः (३ अ. ९ क.) इत्यनेन शषसेषु मुरसंज्ञकेषु परेषु विसर्गस्य परसवर्णं भवति तने सकारे मुदि परसवर्णं प्राप्तं परन्तु जित्परे मुदि तु लुप्यन्मुदि जित्परे (३ अ. १३ क.) इत्यनेन स्थे जित्परे मुदि सति विसर्गस्य लोपः। तत ऊष्मान्तस्थान्यश्च स्पर्शः (४ अ. १०२ क.) इत्यनेन द्वित्वे पश्च चर्त्वे अन्धस्त्थ इति ॥

संहि. स्त्थरायस्पोषँवोभक्षीय ॥ २० ॥ रेवंतीरमद्ध्वम् ॥ रेवंतीरम पू. अ.
॥१८॥ द्ध्वमस्मिन्न्योनावस्मिन्न्गोष्ठेस्मिँल्लोकेस्मिन्न्क्षये ॥ इहैव ॥३॥
स्त्तमापंगात ॥ २१ ॥ संहितासि । व्विश्वरूप्यूर्ज्जामाविंश
गौपत्त्येनं ॥ उपंत्त्वाग्ग्नेदिवेदिवेदोषावस्त्तर्द्धियाव्वयम् ॥ नमोभ
रन्तुऽएमंसि ॥ २२ ॥ राजंन्तमद्ध्वराणाम् ॥ राजन्तमद्ध्वराणाङ्गो
पामृतस्यदीदिविम् ॥ व्वर्द्धमानँस्वेदमें ॥ २३ ॥ सनंः ॥ सनंः ॥१८॥
पितेवंसूनवेग्ग्नेसूपायनोभंव ॥ सचंस्वानःस्वस्त्तये ॥ २४ ॥

अग्नेत्त्वम् ॥ अग्नेत्त्वन्नोऽअन्तमऽउतत्त्राताशिवोभवावरू
त्थ्यः ॥ व्वसुरग्ग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमᳪरयिन्दाᳪ
॥ २५ ॥ तन्त्वा ॥ तन्त्वाशोचिष्ठदीदिवᳪसुम्नायनूनमीमहे
सखिब्भ्यः ॥ सनोबोधि[1]श्श्रुधीहवमुरुष्ष्याणो[2]ऽअघायतस्सम
स्म्मात् ॥ २६ ॥ इडऽएहि ॥ इडे[3]ऽएह्यदितऽएहिकाम्म्याऽएत ॥

१ सः नो बोधिः । अत्र व्यञ्जने च ( शु. य. प्रा. ४ अ. १६ सू. ) इत्यनेन सः इति पदस्य विसर्जनीयस्य लोपे सनोबोधिः इति सिध्यति ।
२ उरुष्याणः । अत्र उरुष्यानः इति पदम् । अत्र निपषणावरधत्राहणमिन्द्र० ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन नकारस्य णकारे, स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु. य. प्रा. ४ अ. १०० सू. ) इत्यनेन षस्य द्वित्वम् । ३ इडेऽएहि इतिपदम् । अत्र सन्ध्यक्षरमयवायावम् ( शु. य. प्रा. ४-अ-४७ सू. ) इत्यनेन इडे इति एकारस्य अयादेशे यवयोः पदान्तयोः स्वरमध्ये लोपः ( ४ अ. १२५ सू. ) इत्यनेन यकारस्य लोपे पुनः स्वरसन्धिप्राप्तौ "न परकालः" ( शु. य. प्रा. ३ अ. ४ सू. ) इति निषेधः ।

मयिवर्त्कामुधरणम्भूयात् ॥ २७ ॥ सोमानुंस्वरणं । कृणु
हिब्र्र्ह्मणस्पते ॥ कक्षीवन्तँय्यऽऔशिजः ॥ २८ ॥ योरेवान् ॥
योरेवान्यो ऽअमीवहाव्वसुवित्त्पुष्टिवर्द्धनः ॥ सनःसिषक्तु य
स्तुरः ॥ २९ ॥ मानः ॥ मानुःशंसोऽअररुषोधूर्तिः प्प्रण
ङ्मत्त्यस्य ॥ रक्षाणोब्र्ह्मणस्पते ॥ ३० ॥ महित्रीणाम् ॥

---

१ "पुष्टिवर्द्धनः" अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. अ. सू. १०२ ) इति सूत्रेण पुष्टिपदे शषसहानां चतुर्णां वर्णानाम् ऊष्मसंज्ञत्वात् षकारोष्मणः परस्य स्पर्शसंज्ञकस्य टकारस्य द्वित्वं जातम् । तेनैकषकारो द्वौ टकारौ च संयोगः । तत्र प्रथमष्टकारः क्रमजो ज्ञेयः । अन्येष्वप्येतादृशेषु स्थलेषु द्वित्वं बोध्यम् । तथैव पुष्टिवर्द्धनः इत्यत्र वर्द्धनः इति पदे परं तु रेफहकाराभ्याम् ( ४-१०१ ) इत्यनेन रकारोत्तरवर्तिनः धव्यञ्जनस्य द्वित्वे जश्त्वे धकारस्य दकारः । २ रक्षाणः । रक्षा नः इतिपदम् । अत्र निषण्णाय रथवाहणम् ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन नकारस्य णकारो निपात्यते । ॥ १९ ॥

महिंत्रीणामवोऽस्तुद्युक्षम्मित्रस्यार्य्यम्मणः ॥ दुराधर्षंव्वरुणस्य
॥ ३१ ॥ नहितेषाम ॥ नहितेषाममाचननाद्ध्वंसुव्वारणेषु ॥ ईशे
रिपुरघशंꣳसः ॥ ३२ ॥ तेहि । पुत्रासोऽअदितेःप्प्रजीवसेम
र्त्त्याय ॥ ज्योतिर्य्यच्छन्त्यजंस्रम् ॥ ३३ ॥ कदाचन । स्तरीर
सिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्य
पृच्यते ॥ ३४ ॥ तत्सवितुः ॥ तत्सवितुर्व्वरेण्ण्यम्भर्गोदेवस्य
धीमहि ॥ धियोयोनः प्प्रचोदयात् ॥ ३५ ॥ शतम ॥ १०० ॥
१२१

संहि. परिते । दूडभोरथोस्म्माँ२ ॥ ऽअंश्नोतुव्विश्वतं÷ ॥ येनुरक्ष पू. अ.

॥२०॥ सिदाशुषं÷ ॥ ३६ ॥ [२६-४] भूर्ब्भुवं÷ ॥ भूर्ब्भुवंस्व÷ ॥ ३ ॥

सुप्प्रजाः प्प्रजाभिं÷स्याᳬसुवीरोव्वीरैंः सुपोषंपोषैं ॥ नर्य्यं

प्प्रजाम्मेंपाहिशᳬस्यंपशून्म्मेंपाह्यथंर्य्यपितुम्म्मेंपाहि ॥३७॥

आगंन्म । व्विश्ववेंदसमस्म्मब्भ्यंव्वसुवित्तंमम् ॥ अग्ग्नेंसम्म्राड

भिद्युम्म्नमभिसहऽआयंच्छस्व ॥ ३८ ॥ अयमग्ग्निः ॥ अय ॥ २० ॥

१ दूडभो रथः । दुःदभः इतिपदम् अत्र "उकारं दुर्दे (शु. य. प्रा. ३ अ. ४२ सू.)" इत्यनेन दुरित्यस्य विसर्गस्य उकारो दकारे परे दन्त्यश्च मूर्धन्यत्वमापद्यते । तेन दकारस्य उकारे दस्य मूर्धन्ये दुडडभः । सवर्णयोरुकारयोः सवर्णदीर्घः । २ सुप्प्रजाः अत्र "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (४ अ. १०० सू.)" इत्यने प्रजाशब्दघटितप्रकारे परे पकारस्य द्वित्वम् । एवं वरेण्यम् । पुत्रासः । द्युम्म्नम् एतादृशेषु स्थलेषु ज्ञेयम् ।

मुग्निर्गृहपंतिर्ग्गार्हंपत्त्यꣳप्प्रजायांव्वसुवित्तंमः ॥ अग्ग्नेगृहपते
भिद्युम्म्नमुभिसहुऽआयंच्छस्व ॥ ३९ ॥ अयमुग्निः ॥ अय
मुग्निश्पुरीष्ष्योरयिमान्त्पुष्टिवर्द्धनः ॥ अग्ग्नेपुरीष्ष्याभिद्युम्म्न
मुभिसहुऽआयंच्छस्व ॥ ४० ॥ [४-५] गृहामा । विभीतमा
वैपद्धमूर्ज्जम्बिब्भ्रंतऽएमंसि ॥ ऊर्ज्जम्बिब्भ्रद्वꣳसुमनाः सुमेधा
गृहानैमिमनंसामोदंमानः ॥ ४१ ॥ येषांमुद्धेति । प्प्रवसंन्न्येषु

१ "प्रवसन्न्येषु" इत्यत्र "स्वरात्संयोगादेर्द्विरुच्यते सर्वत्र ( १०० शु. य. प्रा. ४ अ. सू. )" इत्यनेन नकारस्य द्वित्वम् ।

संहि. ॥२१॥

सौमनसोबहुः ॥ गृहानुपंह्वयामहेतेनोंजानन्तुजानतः ॥४२॥
उपंहूताऽइह । गावंऽउपंहूताऽअजावयंः ॥ अथोऽअन्नंस्य
कीलालऽउपंहूतोगृहेषुंनः ॥ क्षेमांयवःशान्त्यैप्पपंद्येशिवꣳ
शग्मꣳशंय्योःशंय्योः ॥ ४३ ॥ [ ३-६ ] प्रघासिनोंहवाम
हे । मरुतंश्चरिशादंसः ॥ करम्भेणंसजोषंसः ॥ ४४ ॥
यद्ग्रामे ॥ यद्ग्रामेयदरंण्येयत्सभायांय्यदिंन्द्रिये ॥ यदेनं
श्चकृमाव्वयमिदन्तदवंयजामहेस्वाहां ॥ ४५ ॥ मोषूणः ॥
१२४

पृ. अ ॥ ३ ॥ ॥२१॥

मो[1]षूणऽइन्द्रात्रपृत्सुदेवैरस्त्तिहि[2]ष्म्मातेशुष्मिन्नवयाः ॥ मह
श्चिद्यस्यमीढुषोयव्याहविष्म्मतोमरुतोवन्दतेगीः॥४६॥ अक्र
न्कर्म्म । कर्म्मकृतꣳसहवाचामयोभुवा ॥ देवेभ्यᳵकर्म्मकृ
त्वास्तम्प्रेतसचाभुवः ॥ ४७ ॥ अवभृथनिचुम्पुण । निचेरुर
सिनिचुम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्त्यैर्म्मर्त्त्यकृ
तम्पुरुराव्णोदेवरि[3]षस्पाहि ॥ ४८ ॥ [५-७] पूर्णादर्वि ॥

१ मो षूणः । अत्र मो षूनः इतिपदम् । "निपण्णाय रथवाहणम् ( ३ अ. ८७ सू. )" इत्यनेन णकारस्य निपातः । २ हिष्म्माते । अत्र हेर्मिंधोदयः ( ३ अ. ६८ सू. ) इत्यनेन मकारोदये हिशब्दात्परस्य सकारस्य षकारः । तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति द्वित्वम् । ३ देवरिषस्पाहि । अत्र "अध्वनो रजसो रिपः स्पृशस्पातौ ( ३ अ. २८ सू. )" इत्यस्मिन् पातौ इति धातुग्रहणात् पाधातो रूपे परेऽपि रिपः विसर्गस्य सकारः । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः ( ४ अ. १०२ सू. ) इत्यनेन षकारस्य द्वित्वम् ।

संहि. पूण्णार्दर्व्विपरांपतसुपूंण्णापुनरापंत । व्वस्नेवव्विक्रींणावहाऽइषु पू. अ.
॥२२॥ मूर्ज्जंᳵशतक्रतो ॥ ४९ ॥ देहिमे ॥ देहिमेददामितेनिमेंधेहि ॥ ३ ॥
नितेंदधे ॥ निहारंज्रुहरांसिमेनिहारान्निहंराणितेस्वाहा ॥ ५० ॥
[२-८] अक्षन्नमीमदन्त ॥ अक्षन्नमीमदन्तह्य्यवंप्प्रियाऽअं
धूषत ॥ अस्त्तोंषतस्वभांनवोव्विप्प्रानविंष्ठयामतीयोजान्विन्द्र
तेहरी ॥ ५१ ॥ सुसन्दृशंन्त्वा ॥ सुसन्दृशंन्त्वाव्वयम्मघंवन्व ॥२२॥

१ सुसन्दृशम् । अत्र ''भाविभ्यः सः षं समानपदे ( ३ अ. ५९ सू. )'' इत्यनेन षत्वापत्तौ ''अनुसन्तमोतु बृहस्पतिसुतस्वसुसमिद्धायसुसन्दृशम्'' ( शु. य. प्रा. ३ अ. ८२ सू. ) इत्यनेन प्रकृतिभावः न षत्वम् ।

न्दिषीमहिं ॥ प्रनूनम्पूर्णवन्धुरस्त्तुतोयासिवशाँ २ ॥ ऽअनु
योजान्विन्द्रतेहरीं ॥ ५२ ॥ मनोनु ॥ मनोन्वाह्वामहेनारा
शᳬसेनस्त्तोमेन ॥ पितॄणाञ्चमन्मभिः ॥ ५३ ॥ आनः ॥
आनंऽएतुमनःपुनःक्रत्त्वेदक्षायजीवसे ॥ ज्योक्कसूर्यन्दृशे
॥ ५४ ॥ पुनर्नः । पितरोमनोददातुदैव्योजनः ॥ जीवंत्रा
तᳬसचेमहि ॥ ५५ ॥ वयᳬसोम । व्रतेतवमनस्त्तनूषुबिभ्र
तः ॥ प्रजावन्तःसचेमहि ॥ ५६ ॥ [६-९] एषते । रुद्र

॥२३॥ भागःस्सहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्ते[1]
पशुः ॥ ५७ ॥ अवंरुद्रम् ॥ अवंरुद्रमदीमह्यवंदेवन्त्र्यम्बकम् ॥
यथानोव्वस्यसस्करद्यथानुः[2] श्रेयसस्करद्यथानोव्यवसाययात्[3]
॥ ५८ ॥ भेषुजमंसि । भेषुजङ्गवेश्वायपुरुषायभेषुजम् ॥
सुखम्मेषायमेष्यै ॥ ५९ ॥ त्र्यम्बकँय्यजामहे । सुगन्धिम्पु

१ आखुःते। अत्र "तथयोः सम् ( ३ अ. ८ सू. )" इत्यनेन तकारे परे सत्वे आखुस्ते इति रूपम्। २ वस्यसस्करत् अत्र "समानपदे च ( ३ अ. ३० क. )" इत्यप्राप्तौ "कविष्करत्कृधिषु ( ३ अ. ३२ सू. )" इत्यनेन करत्परे विसर्जनीयस्य सकारः। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति ककारस्य द्वित्वम्। ३ श्रेयसस्करत् अत्र "समानपदे च ( ३ अ. ३० सू. )" इत्यनेन समानपदे विसर्गस्य ककारे परे सकारः। तत "ऊष्मान्तस्थाभ्यश्च-स्पर्शः ( ४ अ. १०२ सू. )" इत्यनेन ककारस्य द्वित्वम्। ॥२३॥

ष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥
त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिवबन्धं
नादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्ते । रुद्रावसन्तेनं
परोमूजवतोतीहि ॥ अवततधन्न्वापिनाकावसः कृत्तिवासाऽ
अहिंᳬसन्नः शिवोतीहि ॥ ६१ ॥ त्र्यायुषञ्जमदग्ग्नेः कश्श्य
पस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥
शिवोनाम ॥ शिवोनामासिस्वधितिस्त्तेपितानमस्त्तेऽअस्तुमा

संहि. माँहि॑ꣳसीः ॥ निर्वर्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायरायस्प्पो पू. अ.
॥२४॥ षायसुप्प्रजास्त्वायंसुवीर्य्याय ॥ ६३ ॥ १० ॥ [७-१०] ॥४॥
इतिश्रीवाजसनेयसंहितायांतृतीयोऽध्यायः ॥ ३ ॥ श्रीवेदपुरु
षायनमः ॥ अनुवाकसूत्रम् ॥ एदंद्वे, महीनाम्पयश्चतस्र, आकू
त्याऽऋक्सामयोर्द्विकौ, व्रतंकृणुतषडे,षाते चतस्रो, वस्व्य
सितिस्र, एषतेद्वे, शुक्रंत्वाचतस्रो,ऽऽदित्यास्त्वगष्टौ, दश सप्त ॥२४॥
त्रिꣳशत् ॥ १० ॥ ३७ ॥ ४ ॥ हरिःॐ ॥ एदम् ॥ ऐदमगन्म

१ एदमगन् । अत्र आ इदम् अत्र ''कण्ठ्यादिवर्ण एकारम् (४ अ. ५३ सू.)'' इत्यनेन कण्ठ्यात्परः इवर्णः पूर्वस्वरः परश्च एकारमापद्यते । तेन एदमगन् ।

देवयजंनम्पृथिव्यायत्रैदेवासोऽअजुंषन्तविश्वे ॥ ऋक्सामा
भ्यांꣳसन्तरंन्तोयजुंर्भीरायस्पोषेणसमिषामंदेम ॥ इमाऽ
आपꣳशमुमेसन्तुदेवीरोषधेत्रायंस्वस्वधितेमैनꣳहिꣳसीः[1] ॥ १ ॥
आपोऽअस्मान् ॥ आपोऽअस्मान्मातरः[2]शुन्धयन्तुघृतेन
नोघृतप्प्वः पुनन्तु ॥ विश्वꣳहिरिप्रम्प्रवहंन्तिदेवीरुदिदांभ्यः

---

१ हिंसीः । ( हिꣳसीः ) अत्र अनुस्वाराच्च तत्पूर्वात् (शु. य. प्रा. ३ अ. ५७ सू.) इत्यनेन षकारापत्तौ अनुस्वन्तनोतु (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे अथानुस्वारस्य गूमित्यादेशः शषसहरेफेषु (शु. य. प्रा. परिशिष्ट सू.) इत्यनेन अनुस्वारस्य दीर्घगूंत्वम् । २ शुन्धयन्तु । अत्र स्वरात्० इति सूत्रेण द्वित्वे प्राप्तेऽपि स्ववर्गीये चानुत्तमे (शु. य. प्रा. ४ अ. ११५ सू.) इत्यनेन स्ववर्गीये द्वित्वनिषेधादत्र नकारात्परे स्ववर्गीये धकारे नकारस्य न द्वित्वम् । एवमेवैतादृशेषु स्थलेषु ज्ञेयम् । यथा पुनन्तु । शान्तिः । मान्छन्दः । सन्तु । अन्तरिक्षात् । अजुषन्त । सन्तरन्तः ।

सं. ५

संहि. शुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरसितान्त्वांशिवाꣳश पू. अ.
॥२५॥ ग्मामपरिदधेभद्रंव्वर्ण्णम्पुष्ष्यन्[1] ॥२॥ [२-१] महीनाम्पयः ॥ ॥४॥
महीनाम्पयोसिवर्च्चोदाऽअसिवर्च्चोमेदेहि ॥ वृत्रस्यासिकनीनं
कश्चक्षुर्दाऽअसिचक्षुर्म्मेदेहि ॥ ३ ॥ चित्पतिर्म्मा ॥ चित्पतिं
र्म्मापुनातुवाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणप
वित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत् ॥ २५ ॥
त्कामंपुनेतच्छकेयम् ॥४॥ आवः ॥ आवोदेवासऽईमहेव्वामम्प्र

१ पुष्ष्यन् । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. अ. १०० सू.) इत्यनेन षकारस्य द्वित्वम् ।

यत्त्यद्धरे ॥ आवोदेवासऽआशिषोयज्ञियांसोहवामहे ॥ ५ ॥
स्वाहायज्ञम् ॥ स्वाहायज्ञम्मनसःस्वाहोरोरन्तरिक्षात्स्वाहा
द्यावापृथिवीभ्याᳬस्वाहाव्वातादारभेस्वाहा ॥ ६ ॥ [४-२]
आकूत्त्यैप्प्रयुजे ॥ आकूत्त्यैप्प्रयुजेग्नयेस्वाहामेधायैमनसेग्न
येस्वाहादीक्षायैतपसेग्नयेस्वाहासरस्वत्त्यैपूष्णेग्नयेस्वाहा ॥
आपोदेवीर्ब्बृहतीर्व्विश्वशम्भुवोद्यावापृथिवीऽउरोऽअन्तरिक्ष ॥
बृहस्प्पतयेहविषाव्विधेमस्वाहा ॥ ७ ॥ व्विश्वोदेवस्य ॥ व्विश्वो

संहि.

देवस्यनेतुर्म्मर्त्तोवुरीतसख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृ
॥२६॥ णीतपुष्यसेस्वाहा ॥८॥ [२-३] ऋक्सामयोःशिल्पे ॥ ऋक्सा
मयोःशिल्पेस्त्थस्तेवामारभेतेमापातमास्ययज्ञस्योदृचः ॥ श
र्म्मासिशर्म्ममेयच्छनमस्तेऽअस्तुमामाहिᳬसीः ॥ ९ ॥ ऊर्ग्गे
सि ॥ ऊर्ग्गस्याङ्गिरस्यूर्ण्णम्म्रदाऽऊर्ज्जम्मयिधेहि ॥ सोमस्यनी
विरसिविष्णोःशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुस ॥२६॥
स्याःकृषीस्कृधि ॥ उच्छ्रयस्ववनस्पतऽऊर्ध्वोमापाह्यᳬहसऽ

आस्ययज्ञस्योदृचः ॥ १० ॥ [२-४] व्रतङ्कृणुत । व्रतङ्कृणुता
ग्निर्ब्रह्माग्निर्यज्ञोव्वनस्पतिर्यज्ञियः ॥ दैवीन्धियम्मनाम
हेसुमृडीकामभिष्टयेवर्चोधाँय्यज्ञवाहसꣳसुतीर्थानोऽअसद्व
शे॥येदेवामनोजातामनोयुजोदक्षक्रतवस्तेनोवन्तुतेनःपान्तु
तेभ्यःस्वाहा ॥ ११ ॥ श्वात्राःपीताः ॥ श्वात्राःपीताभवतयूय
मापोऽअस्माकमन्तरुदरेसुशेवाः ॥ ताऽअस्मभ्यमयक्ष्मा

---

१ अत्र व्रतम् कृणुत इति पदम् । स्पर्शे परपञ्चमस्य (शु. य. प्रा. ४ अ. १२ सू.) इत्यनेन मकारस्य स्पर्शवर्णपरे स्पर्शवर्णस्य पञ्चमाक्षरो भवति तेन ङकारः । एवमन्ते तत्र नकारः ।

ऽअंनमीवाऽअनांगसुᳬस्वदन्तुदेवीरमृताऽऋतावृधंः ॥ १२ ॥
इयन्तैं । यज्ञियातनूरपोमुञ्चामिनप्प्रजाम् ॥ अᳬहोमुचᳬ
स्वाहाकृताᳬपृथिवीमाविंशतपृथिव्यासम्भंव ॥ १३ ॥ अग्ने
त्त्वम् ॥ अग्नेत्त्वᳬसुजांगृहिव्वयᳬसुमंन्दिषीमहि ॥ रक्षांणोऽ
अप्प्रंयुच्छन्प्रबुधेनᳬपुनंस्कृधि॥ १४॥पुनर्म्मनंः ॥ पुनर्म्मनᳬपु
नरायुंर्म्मऽआगन्पुनंःप्प्राणᳬपुनंरात्मामाऽआगन्पुनश्चक्षुᳬ ॥ २७ ॥

---

१ पुनस्कृधि । अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन ककारस्य द्वित्वे प्राप्ते ऋवर्णे ( शु. य. प्रा. ४ अ. १११ सू. ) इत्यनेन ऋवर्णपरे स्पर्शे निषेधान्न ककारस्य द्वित्वम् । यत्र यत्र ऊष्मभ्योऽन्तःस्थेभ्यश्च परः स्पर्शवर्णः ऋविशिष्टश्चेत्तत्र तत्र द्वित्वाभावो ज्ञेयः । यथा-कृधीस्कृधि ।

पुनः॒श्रोत्र॑म्म॒ऽआग॑न् ॥ वै॒श्वा॒न॒रोऽअद॑ब्धस्त॒नू॒पाऽअ॒ग्निर्नः॑
पातु दुरि॒ताद॑व॒द्यात् ॥ १५ ॥ त्वम॑ग्ने । व्रत॒पाऽअ॑सि दे॒वऽ
आ मर्त्ये॒ष्वा ॥ त्वं य॒ज्ञेष्वीड्यः॑ ॥ रास्वेय॑त्सो॒मा भूयो॑
भर दे॒वो नः॑ सवि॒ता वसो॑र्दा॒ता वस्व॑दात् ॥ १६ ॥ [६-५]
ए॒षा ते॑ । शु॒क्र त॒नूरे॒तद्वर्च॒स्तया॒ सम्भ॑व॒ भ्राजं॑ गच्छ ॥ जूर॑सि
धृ॒ता मन॑सा॒ जुष्टा॒ विष्ण॑वे ॥ १७ ॥ तस्या॑स्ते । स॒त्यस॑वसः
प्रस॒वे त॒न्वो॒ य॒न्त्रम॑शीय॒ स्वाहा॑ ॥ शु॒क्रम॑सि च॒न्द्रम॑स्य॒मृत॑मसि वै॒

संहि. श्वदेवमसि ॥ १८ ॥ चिदसि । मनासिधीरसिदक्षिणासिक्ष पू. अ.
।२८।। त्रियासियज्ञियास्यदितिरस्युभयतꣳशीर्ष्णी ॥ सानꣳसुप्राची ॥ ४ ॥
सुप्रतीच्येधिमित्रस्त्वापदिबध्नीतांपूषाध्वनस्पात्विन्द्राया
ध्यक्षाय ॥ १९ ॥ अनुत्वा । मातामन्यतामनुपितानुभ्राता
सगर्भ्योनुसखासयूथ्यꣳ ॥ सादेविदेवमच्छेहीन्द्रायसोमꣳरु
द्रस्त्वावर्तयतुस्वस्तिसोमसखापुनरेहि ॥ २० ॥ [४-६] ॥२८॥
वस्व्यसि ॥ वस्व्यस्यदितिरस्यादित्यासिरुद्रासिचन्द्रासि ॥

बृहस्प्पतिष्ट्वासुम्म्नेरम्म्णातुरुद्रोव्वसुभिराचंके ॥ २१ ॥ अदि
त्त्यास्त्वा । मूर्द्धन्नाजिघर्म्मिदेवयजनेपृथिव्व्याऽइडायास्प्पद
मंसिघृतवत्त्स्वाहा ॥ अस्म्मेरमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायो
माव्वयᳬरायस्प्पोषेणव्वियौष्म्मतोतोरायः ॥ २२ ॥ समक्ख्ये[1] ।
देव्व्याधियासन्दक्षिणयोरुचंक्षसा ॥ मामऽआयुᳬप्प्रमोषीम्मोऽ
अहन्तवव्वीरंव्विंदेयतवदेविसन्दृशि ॥ २३ ॥ [ ३-७ ] एषते ।

१ समक्ख्ये । अत्र स्वरात्संयोगा० ( शु. य. प्रा. ४ अ. १०० सू. ) इत्यनेन खकारस्य द्वित्वे जाते प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ( शु. य. प्रा. ४ अ. १०८ सू. ) इत्यनेन खस्थाने ककारो विहितः ।

गायत्त्रोभागऽइतिमेसोमायब्रूतादेषतेत्रैष्टुंभोभागऽइतिमेसो
मायब्रूतादेषतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामा
नाꣳसाम्म्राज्ज्यङ्गच्छेतिमेसोमायब्रूतादास्म्माकोसिशुक्क्रस्ते
ग्ग्रह्योविचितस्त्वाविचिन्वन्तु ॥ २४ ॥ अभित्त्यम् ॥ अभि
त्त्यन्देवꣳसवितारमोण्ण्योः कविक्क्रतुमर्च्चामिसत्त्यसवꣳरत्नधा
मभिप्प्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वायस्यामतिर्ब्भाऽअदिद्युतत्त्सवी ॥२९॥

१ देवꣳसवितारमोण्ण्योः । अत्र देवम् इत्यस्य मकारस्य अनुस्वारं रोफसु मकारः ( शु. य. प्रा. ४ अ-१ सू. ) इत्यनेन उष्मणि सकारे परे अनुस्वारे अथानुस्वारस्य गूंमित्यादेशः शषसहरेफेषु ( का. प. १ सू. ) इत्यनेन ( गूंकारे ) कृते गूंविशिष्टं रूपम् । एवम् उरुꣳहिराजा । अꣳहोमुचः । इत्यादिस्थलेषु गूंकारोऽनेन ज्ञेयः । वयꣳसुम. । अग्ने त्वꣳसुजा. । सोमꣳरुद्रस्त्वा. ।

मनिर्हिरण्यपाणिरमिमीतसुक्रतुः कृपास्वः ॥ प्रजाभ्यस्त्वा
प्प्रजास्त्वानुप्प्राणन्तुप्प्रजास्त्वमनुप्प्राणिहि ॥२५॥ [२-८]
शुक्रन्त्वा । शुक्रेणक्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन ॥ सग्ग्मे
तेगोरस्म्मेतेचन्द्राणितपसस्तनूरसिप्प्रजापतेर्व्वर्ण्णः परमेणप
शुनाक्रीयसेसहस्रपोषम्पुषेयम् ॥२६॥ मित्रोनः ॥ मित्रोनऽए
हिसुमित्रधऽइन्द्रस्योरुमाविशदक्षिणमुशन्नुशन्तंᳫस्योनःस्यो
नम् ॥ स्वानभ्राजाङ्घारेबम्भारेहस्तसुहस्तकृशानवेतेवःसोम

ऽर्यणास्त्वाक्षद्धम्मावोदभन् ॥ २७॥ परिमा । ग्मेदुश्चंरिता १ ३
॥३०॥ ह्वाधुस्वामासुचंरितेभज ॥ उदायुंषास्वायुषोदंस्त्थामम्मृताँ२ ॥ ॥ ५॥
ऽअनु ॥ २८ ॥ प्रतिपन्थांम् ॥ प्रतिपन्त्थांमपद्महिस्वस्त्तिगा
मंनेहसंम् ॥ येनविश्वाःपरिद्विषोवृणक्तिविन्दतेवसु ॥ २९ ॥
[ ४-९ ] अदिंत्त्यास्त्वक् ॥ अदिंत्त्यास्त्वगस्यदिंत्त्यैसदुऽआ
सींद ॥ अस्त्तंब्भ्नाद्यांवृषभोऽअन्तारिंक्षममिमीतवरिमाणंम्पृ ॥३०॥
थिव्याः ॥ आसींदुद्विश्वाभुवंनानिसम्म्राड्विश्वेत्तानिवरुंणस्य

व्रतानि ॥ ३० ॥ व्वनेषुवि ॥ व्वनेषुव्यन्तरिक्षन्ततानव्वाजम
र्व्वत्सुपयऽउस्रियासु ॥ हृत्सुक्रतुंव्वरुणोव्विक्क्ष्वग्निन्दिवि
सूर्य्यमदधात्सोममद्रौ ॥ ३१ ॥ सूर्य्यस्यचक्षुः ॥ सूर्य्यस्य
चक्षुरारोहाग्नेरक्ष्णःकनीनकम् ॥ यत्रैतशेभिरीयसेभ्राजमा
नोव्विपश्चिता ॥ ३२ ॥ उस्रावेतम् ॥ उस्रावेतन्धूर्षाहौयुज्ये
थामनश्रूऽअवीरहणौब्रह्मचोदनौ ॥ स्वस्तियजमानस्यगृहा

१ अत्र स्वरात्संयोगा० (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन द्वित्वे प्राप्ते न क्षत्रवृत्रचित्रमित्रवक्षस्त्रत्रयेष्वयत्रैकम् (शु. य. प्रा. ६ अ. २७ सू.) इत्यनेनैतेभ्यः परस्य त्रशब्दस्य द्वित्वं न भवति तेन क्षत्र, वृत्र, चित्रम् । मित्रम्, सत्रस्य । तत्र गच्छ, यत्र पूर्वे । इत्येतेषु द्वित्वाभावो ज्ञेयः ।

माध्य. ग्गच्छतम् ॥ ३३ ॥ भुद्रोमे । सिप्रच्च्यवस्वभुवस्प्पतेव्विश्वा पू. अ.
॥२१॥ न्न्यभिधामानि ॥ मात्त्वापरिपरिणोव्विदन्मात्त्वापरिपन्थिनो ॥ ४ ॥
व्विदन्मात्त्वाव्वृकाऽअघायवोव्विदन् ॥ श्येनोभूत्त्वापरापतयज
मानस्यगृहान्गच्छतन्नौसँस्कृतम् ॥ ३४ ॥ नमोमित्रस्य ॥ नमो
मित्रस्यव्वरुणस्यचक्षसेमहोदेवायतदृतꣳसपर्य्यत ॥ दूरेदृशेदेव
जातायकेतवेदिवस्प्पुत्त्रायसूर्य्यायशꣳसत ॥ ३५ ॥ व्वरुणस्यो ॥ २१ ॥
त्तम्भनम् ॥ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्त्थो

व्वरुणस्यऽऋतसदंन्यसिव्वरुणस्यऽऋतसदंनमासिव्वरुणस्यऽऋत
सदंनमासीद ॥ ३६ ॥ याते ॥ यातेधामानिहविषायजन्ति
तातेव्विश्वापरिभूरस्तुयज्ञम् ॥ गयस्फानंः प्प्रतरणः सुवीरो
वीरहाप्प्रचरासोमदुर्य्यान् ॥ ३७॥ [८-१०] इतिश्रीवाज
सनेयसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम्–अग्नेस्तनू, रापतयेत्वाचतुष्कौ, तसायनीमेद्वे,
इन्द्रघोषस्त्वास्तिस्रो, युंजतेमनाष्टौ, देवस्यत्वाचतस्रो, देव

॥३२॥ स्यत्वापंच, विभूरसिचतस्रो, ज्योतिरंसिष, डुरुविष्णोतिस्रो, ॥ ५ ॥
दश त्रिचत्वारिꣳशत् ॥ [अ. ५ मं. ४३-अनु० १०] हरिःॐ॥

अग्नेस्तनूः ॥ अग्नेस्तनूरंसिविष्णंवेत्त्वासोमंस्यतनूरंसिवि
ष्णंवेत्त्वातिथेरातित्थ्यमंसिविष्णंवेत्त्वाऽश्येनायंत्त्वासोम
भृतेविष्णंवेत्त्वाग्नयेत्त्वारायस्पोषदेविष्णंवेत्त्वा ॥ १ ॥
अग्नेर्जनित्रंम् ॥ अग्नेर्जनित्रंमसिवृषणौस्त्थऽउर्वश्यंस्या ॥ २२ ॥
युरंसिपुरूरवांऽअसि ॥ गायत्रेणंत्त्वाच्छन्दंसामन्थामित्रैष्टुंभे

नत्त्वाच्छन्दंसामन्थामिजागतेनत्त्वाच्छन्दंसामन्थामि ॥ २ ॥
भवंतन्नः ॥ भवंतन्नःसमंनसौसचैतसावरेपसौ ॥ मायज्ञꣳ
हिꣳसिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ३ ॥
अग्नावग्निश् ॥ अग्नावग्निश्चरतिप्प्रविष्टऽऋषीणाम्पुत्रोऽअ
भिशस्तिपावा ॥ सनःस्योनःसुयजायजेहदेवेभ्योहव्यꣳ
सदमप्प्रयुच्छन्त्स्वाहा ॥ ४ ॥ [ ४-१ ] आपतयेत्त्वा ॥ आ
पतयेत्त्वापरिपतयेगृह्णामितनूनप्त्रेशाक्करायशक्कनऽओजि

संहि· ष्ठाय ॥ अना॑धृष्टमस्यनाधृष्ष्यन्देवाना॒मोजो॑नभिशस्त्त्यभि पू. अ.
॥ २२॥ शस्त्तिपाऽअ॑नभिशस्त्तेन्न्यमञ्जसासत्त्यमुप॑गेषꣳस्वितेमा॑धाः ॥ ५ ॥
॥ ५ ॥ अग्ग्नै॑व्व्रतपाः ॥ अग्ग्नै॑व्व्रतपास्त्वे॑व्व्रतपायातव॑तनूरियꣳ
सामयियोम॑म॑तनूरेषासात्त्वयि॑ ॥ सहनौ॑व्व्रतपतेव्व्रतान्न्यनु॑मे
दीक्षान्दीक्षाप॑तिर्म्मन्न्य॑तामनुतपस्त्तप॑स्पतिः ॥ ६ ॥ अꣳ
शुरꣳशुष्टे । देवसोमाप्प्या॑यतामिन्द्रा॑यैकधनविदे॑ ॥ आतुब्भ्य ॥ २२ ॥
मिन्द्रःप्प्याय॑तामात्त्वमिन्द्रा॑यप्प्यायस्व ॥ आप्प्या॑ययास्म्मा

न्त्सखीन्त्सन्न्यामेधयास्वस्तितेदेवसोमसुत्त्यामशीय ॥ एष्टा
रायꣳप्प्रेषेभगायऽऋतमृतवादिभ्योनमोद्यावापृथिवीभ्याम्
॥ ७॥ यातें ॥ यातेऽअग्नेयꣳशयातनूर्व्वर्षिष्ठागह्वरेष्ठा ॥ उग्ग्रं
व्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा ॥ यातेऽअग्नेरजꣳ
शयातनूर्व्वर्षिष्ठागह्वरेष्ठा ॥ उग्ग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽ
अपावधीत्स्वाहा ॥ यातेऽअग्नेहरिशयातनूर्व्वर्षिष्ठागह्वरेष्ठा ॥
उग्ग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा ॥ ८॥ [४-२]

संहि. तप्तायनीमे ॥ तप्तायनीमेसिविन्नायनीमेस्यवंतान्मानाथितात् पू. अ.
।२४॥ द्वंतान्माव्यथितात् ॥ विदेदुग्निर्नभोनामाग्नेऽअङ्गिरऽआयुं ॥५॥
नानाम्नेहियोस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेन
त्वादधेविदेदुग्निर्नभोनामाग्नेऽअङ्गिरऽआयुंनानाम्नेहियो
द्वितीयस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधे
विदेदुग्निर्नभोनामाग्नेऽअङ्गिरऽआयुंनानाम्नेहियस्तृतीयं ॥२४॥
स्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधे ॥ अनुं

त्वा देववीतये ॥ ९ ॥ सिंहयसि । सपत्नसाहीदेवेभ्यः कल्प
स्वासिंहयसिसपत्नसाहीदेवेभ्यःशुन्धस्वासिंहयसिसपत्न
साहीदेवेभ्यःशुम्भस्व ॥ १० ॥ [२-३] इन्द्रघोषस्त्वा ॥ इन्द्र
घोषस्त्वावसुभिःपुरस्तात्पातुप्रचेतास्त्वारुद्रैःपश्चात्पातुम
नोजवास्त्वापितृभिर्दक्षिणतःपातुविश्वकर्म्मात्वादित्यैरुत्तर
तःपात्विदमहन्तप्तंवार्बहिर्धायज्ञान्निःसृजामि ॥ ११ ॥

१ अत्र अनुस्वारं रोष्मसु मकारः (शु. य. प्रा. ४ अ० १ सू.) इत्यनेन मकारस्यानुस्वारे कृते अथानुस्वारस्य गुमित्यादेशः शषसहरेफेषु (शु. य. प्रा. परिशि. सू.) इत्यनेन दीर्घगुंकारे प्राप्ते नानुस्वारः (शु. य. प्रा. ४ अ. १०९ सू.) इत्यनेन स्वोन इति संयोगे परे सकारे न दीर्घगुंकारः किन्तु ह्रस्वः ।

संहि. पू. अ.

॥२५॥ ॥५॥

सिꣳह्यसि ॥ सिꣳह्यसिस्वाहासिꣳह्यस्यादित्यवनिꣳस्वाहा
सिꣳह्यसिब्रह्मवनिः क्षत्रवनिꣳस्वाहासिꣳह्यसिसुप्रजाव
नीरायस्पोषवनिꣳस्वाहासिꣳह्यस्यावहदेवान्यजमानायस्वा
हाभूतेभ्यस्त्वा ॥ १२ ॥ ध्रुवोसि । पृथिवीन्दृꣳहध्रुवक्षिदस्य
न्तरिक्षन्दृꣳहाच्युतक्षिदसिदिवन्दृꣳहाग्नेः पुरीषमसि ॥ १३ ॥
[ ३-४ ] युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्र ॥२५॥
प्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकऽइन्मही

देवस्यंसवितुश्परिष्टुतिंस्वाहा ॥ १४ ॥ इदंविष्णुः ॥ इदं
विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरेस्वाहा
॥१५॥ इरावतीधेनुमती ॥ इरावतीधेनुमतीहिभूतᳬसूयवसिनी
मनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीम
भितोमयूखैःस्वाहा ॥ १६ ॥ देवश्रुतौदेवेषु ॥ देवश्रुतौदेवेष्वा
घोषतम्प्राचीप्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंयज्ञन्नयतम्माजिह्व
रतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्येऽआयुर्म्मानिर्वादिष्टम्प्रजा

१ अत्र रकारात्परस्य वकारस्य परंतु रेफहकाराभ्याम् (शु. य. प्रा. ४ अ. १०१ सू.) इत्यनेन द्वित्वम् ।

ष्मानिव्विंदिहृमत्रंरमेथांव्वर्ष्मँन्पृथिव्याः ॥ १७ ॥ व्विष्ण्णोर्न्नु ।
कंव्वीर्य्याणिप्प्रवोचँय्यःपार्त्थिवानिव्विममेरजाᳬसि ॥ योऽ
अस्कंभायदुत्तरᳬसधस्त्थंव्विचक्रमाणस्त्रेधोरुगायोव्विष्ण्णवे
त्त्वा ॥ १८ ॥ दिवोवा । व्विष्ण्णऽउतवापृथिव्यामहोवाव्वि
ष्ण्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्त्ताव्वसुनापृणस्वाप्प्रयच्छद
क्षिणादोतसव्याद्विष्ण्णवेत्त्वा ॥ १९ ॥ प्रतत् ॥ प्रतद्विष्ण्णु ॥ ३६ ॥

१ अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन द्वित्वम् ॥ यथा-विष्णणाऽउत वा । विष्ण्णऽ उरोर० । द्विष्ण्णवे त्वा । प्रतद्विष्ण्णुः । विष्ण्णोरराटम् । इत्यादिषु बोध्यम् ।

स्त्तवतेव्वीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषु
व्विक्रमणेष्वधिक्षियन्तिभुवनानिव्विश्वा ॥ २० ॥ व्विष्णोररा
टम् ॥ व्विष्णोरराटमसिव्विष्णोः श्नप्त्रेस्त्थोव्विष्णोः स्यूर
सिव्विष्णोर्ध्रुवोसि ॥ व्वैष्णवमसिव्विष्णवेत्त्वा ॥ २१ ॥ [८-५]
देवस्यत्त्वा । सवितुः प्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्त्ता
ब्भ्याम् ॥ आददेनार्य्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥
बृहन्नसिबृहद्रवाबृहतीमिन्द्रायव्वाचंव्वद ॥ २२ ॥ रक्षोहणंव्व

शु. य. संहि. लगहनम् ॥ रक्षोहणंव्वलगहनंव्वैष्णवीमिदमहन्तंव्वलगमुत्किं पू. अ.
॥३७॥ रामियम्मेनिष्ट्यो यममात्त्यौनिचखानेदमहन्तंव्वलगमुत्किरा ॥५८॥
मियम्मैसमानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्किरा
मियम्मेसबन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तंव्वलगमुत्किरा
मियम्मैसजातोयमसजातोनिचखानोत्कृत्त्याङ्किरामि ॥२३॥
स्वराडसि । सपत्नहासत्त्रराडस्यभिमातिहाजनराडसिरक्षोहा ॥ ३७ ॥
सर्व्वराडस्यमित्रहा ॥ २४ ॥ रक्षोहणोवः ॥ रक्षोहणोवोव्व

लगहनं प्प्रोक्षामिव्वैष्णवान्रक्षोहणोव्वोव्वलगहनोवनयामिव्वै
ष्णवान्रक्षोहणोव्वोव्वलगहनोवस्तृणामिव्वैष्णवान्रक्षोहणौव्वां
व्वलगहनाऽउपदधामिव्वैष्णवीरक्षोहणौव्वांव्वलगहनौपर्य्यूहा
मिव्वैष्णवीव्वैष्णवमसिव्वैष्णवास्थ ॥ २५॥ [४-६] देवस्य
त्त्वा । सवितुः प्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥
आददेनार्य्यसीदमहंरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ यवोसि
यवयास्म्मद्द्वेषोयवयारातीर्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वा

शुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि ॥ २६ ॥ उद्दि
॥ २८ ॥ वम् ॥ उद्दिवꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्यान्द्युतान ॥ ५ ॥
स्त्वामारुतोमिनोतुमित्रावरुणौध्रुवेणधर्म्मणा ॥ ब्रह्मवनि
त्वाक्षत्रवनिरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृꣳहक्षत्रन्दृꣳ
हायुर्दृꣳहप्रजान्दृꣳह ॥ २७ ॥ ध्रुवासि । ध्रुवोयंय्यजमानो
स्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवी ॥ २८ ॥
पूर्य्येथामिन्द्रस्यच्छदिरसिविश्वजनस्यच्छाया ॥ २८ ॥ परि

त्त्वा । गिर्व्वणोगिरऽइमाभंवन्तुव्विश्श्वतं÷ ॥ व्वृद्धायुमनुव्वृद्धंयो
जुष्ट्टांभवन्तुजुष्ट्टंयः ॥ २९ ॥ इन्द्रंस्यस्यूः ॥ इन्द्रंस्यस्यूरसी
न्द्रंस्यद्ध्रुवोसि ॥ ऐन्द्रमंसिव्वैश्श्वदेवमंसि ॥ ३० ॥ [ ५-७ ]
व्विभूरंसि । प्प्रवाहंणोव्वह्निंरसिहव्यवाहंनः ॥ श्वात्त्रोसिप्प्रचे
तास्तुथोसिव्विश्श्ववेदाऽउशिगंसि ॥ ३१ ॥ उशिगंसि । कवि
रङ्घांरिरसिबम्भांरिरवस्यूरंसिदुवंस्वाञ्छुन्ध्यूरंसिमार्ज्जालीयं÷
सम्म्राडंसिकृशानुं÷परिषद्द्योंसिपवंमानोनभोंसिप्प्रतक्कामृष्ट्टो

 सिहव्यसूदनऽऋतधामासिस्वर्ज्योतिःसमुद्रोसि ॥ ३२ ॥ 
॥२९॥ समुद्रोसि। विश्वव्यचाऽअजोस्येकपादहिरसिबुध्न्योवागस्यैन्द्र
मसिसदोस्यृतस्यद्वारौमामासन्ताप्ममध्वनामध्वपतेप्प्रमातिर
स्वस्तिमेस्मिन्पथिदेवयानेभूयान्मित्रस्यमा ॥ ३३ ॥ मित्र
स्यमा ॥ मित्रस्यमा चक्षुषेक्षध्वमग्नयःसगराःसगरास्थ
सगरेणनाम्नारौद्रेणानीकेनपातमाग्नयःपिपृतमाग्नयोगोपा ॥२९॥
यतमानमोवोस्तुमामाहिꣳसिष्ट ॥ ३४ ॥ [ ४-८ ] ज्योतिं

रसि । व्विश्वरूपंव्विश्वेषान्देवानांᳬसमित् ॥ त्वᳬसोमतनू
कृद्ध्योद्द्वेषोभ्योन्न्यकृतेभ्यऽउरुयन्तासिव्वरूथᳬस्वाहाजुषा
णोऽअप्तुराज्ज्यस्यव्वेतुस्वाहा ॥ ३५॥ शतम् ॥ २०० ॥
अग्नेनयं । सुपथारायेऽअस्म्मान्विश्वानिदेवव्वयुनानिविद्वि
द्वान्॥ युयोद्ध्यस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंव्विधेम
॥ ३६ ॥ अयन्नः ॥ अयन्नोऽअग्निर्व्वरिवस्कृणोत्त्वयम्मृधः

१६१

शु. य. संहि. पुरऽएतुप्प्रभिन्दन् ॥ अयंव्वाजाञ्जयतुव्वाजसातावयᳪशत्रू पू. अ.
ञ्जयतुजर्हृषाणꣳस्वाहा ॥ ३७ ॥ उरुव्विष्ण्णो ॥ उरुव्विष्ण्णो ॥५॥
॥४०॥ विक्क्रमस्वोरुक्क्षयायनस्क्कृधि ॥ घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञपंति
न्तिरस्वाहा ॥ ३८ ॥ देवसवितꣳ ॥ देवसवितरेषतेसोमस्तᳪ
रक्षस्वमात्वादभन् ॥ एतत्त्वन्देवसोमदेवोदेवाँ २ ॥ ऽउपा
गाऽइदमहम्म्मनुष्ष्यान्त्सहरायस्प्पोषेणस्वाहानिर्व्वरुणस्यपा ॥४०॥

१ अत्र वाजान् जयतु इति पदे तकारवर्गश्चकारवर्गे चकारवर्गम् । (शु. य. प्रा. ४ अ. ९५ सू.) इत्यनेन वाजान् पदघटिततवर्गस्य नकारस्य जयतुपदघटिते चकारवर्गे परे चवर्गत्वं जातम् । तेन वाजाञ्जयतु । एवं शत्रूञ्जयतु ।

शान्मुञ्च्ये ॥ ३९ ॥ अग्नेव्रतपाः ॥ अग्नेव्रतपास्त्वेव्रतपाया
तवतनूर्म्मय्यभूदेषासात्त्वयियोममतनूस्त्वय्यभूदियꣳसाम
यि ॥ यथायथन्नोव्रतपतेव्रतान्यनुमेदीक्षान्दीक्षापतिरमꣳ
स्तानुतपस्तपस्पतिः ॥ ४० ॥ [६-९] उरुविष्णो ॥ उरुवि
ष्णोविक्रमस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्रप्रयज्ञ
पतिन्तिरस्वाहा ॥ ४१॥ अत्त्यन्न्यान् ॥ अत्त्यन्न्याँ २ ॥
ऽअगान्नान्न्याँ २ ॥ ऽउपागामर्वाक्त्वापरेभ्योविदम्परोवरे

ब्भ्यः ॥ तन्त्वाजुषामहेदेवव्वनस्प्पतेदेवयुज्ज्यायैदेवास्त्वादेव ॥ ५ ॥
॥४१॥ युज्ज्यायैजुषन्तांव्विष्ण्णवेत्त्वा ॥ ओषधेत्रायस्वस्वधितेमैनꣳ
हिꣳसीः ॥ ४२ ॥ द्याम्मा ॥ द्याम्मालेखीरन्तरिक्षम्माहिꣳ
सीःपृथिव्व्यासम्भव ॥ अयꣳहित्वास्वधितिस्तेतिजानःप्प्रणि
नायमहतेसौभगाय ॥ अतस्त्वन्देवव्वनस्प्पतेशतवल्शोव्वि
रोहसहस्रवल्शाव्वियꣳरुहेम ॥ ४३ ॥ [ ३-१०१ ] ॥ ॥४१॥
इति श्रीवाजसनेयसंहितायां पंचमोऽध्यायः ॥ ५ ॥ ॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ देवस्यत्त्वाषड्, पावी
रसिपंच, माहिःषट्, संतेतिस्रः, समुद्रंगच्छ, हविष्मतीरिमा
द्विकौ, हृदेत्वापंच, देवस्यत्वाष्टौ, अष्टौ सप्तत्रिꣳशत् ॥
[अ. ६ मं. ३७ अनु. ८] हरिः ॐ॥ देवस्यंत्त्वा। सवितुश्प्प्रसवे
श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ आददेनार्य्यसीदम
हꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ यवोसियवयास्म्मद्द्वेषोयव
यारांतीर्द्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्व्यैत्त्वाशुन्धन्ताँल्लोकाꣳ

शु. य. पितृषदनाꣳ पितृषदनमसि ॥ १ ॥ अग्ग्रेणीरसि । स्वावेशऽ पू. अ.
संहि. उन्नेतृणामेतस्यव्वित्तादधित्त्वास्त्थास्यतिदेवस्त्त्वासवितामद्ध्वा ॥ ६ ॥
॥४२॥ नक्तुसुपिप्पलाब्भ्यस्त्त्वौषधीब्भ्यꣳ ॥ द्यामग्ग्रेणास्पृक्षऽआ
न्तरिक्षम्मद्ध्येनाप्प्राꣳ पृथिवीमुपरेणादृꣳहीꣳ ॥ २ ॥ यातें ॥
यातेधामान्न्युश्मसिगमद्ध्येयत्रगावोभूरिशृङ्गाऽअयासः ॥
अत्राहतदुरुगायस्यव्विष्णोꣳ परमम्पदमवभारिभूरि ॥ ब्रह्म ॥४२॥
वनित्त्वाक्षत्रवनिरायस्प्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृꣳहक्ष

१ अत्र देवः स्वा इति पदम्। तयोः सम् ( शु. य. प्रा. ३ अ. ८ सू. ) इत्यनेन स्वाघटिते तकारे परे विसर्जनीयस्य सत्वे देवस्त्वेति।

त्रन्दृꣳहायुर्दृꣳहप्प्रजान्दृꣳह ॥ ३ ॥ व्विष्णोꣳकर्म्माणि ।
पश्श्यतयतोव्व्रतानिपस्प्पशे ॥ इन्द्रस्स्ययुज्ज्यꣳसखा ॥ ४ ॥
तद्विष्ण्णोꣳ । परमम्पदꣳसदापश्श्यन्तिसूरयः ॥ दिवीवचक्षु
राततम् ॥ ५ ॥ परिवीरसि ॥ परिवीरसिपरित्त्वादैवीर्व्विशो
व्व्ययन्तामपरीमँय्यजमानꣳरायोमनुष्ष्याणाम् ॥ दिवस्सूनु
रस्येषतेपृथिव्व्याँल्लोकऽआरण्ण्यस्तेपशुः ॥ ६ ॥ [ ६-१ ] उपा
स. ८ वीरसि ॥ उपावीरस्युपदेवान्दैवीर्व्विशꣳप्प्रागुरुशिजोव्वह्नित

मान् ॥ देवंत्त्वष्ट्टर्व्वसुंरमहुव्यातेंस्वदन्ताम् ॥ ७ ॥ रेवंतीर
मंद्धम् ॥ रेवंतीरमंद्धम्ब्बृहंस्पते[1]धारयाव्वसूंनि ॥ ऋतस्यंत्त्वा
देवहविंःपाशेंनप्प्रतिमुञ्चामि[2]धर्षामानुंषःं ॥ ८ ॥ देवस्यंत्त्वा ।
सवितुःप्प्रंसवेश्श्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्त्ताब्भ्याम् ॥ अग्नी
षोमाब्भ्यांञ्जुष्टन्नियुंनज्मि ॥ अद्भ्यस्त्त्वौषंधीब्भ्योनुंत्त्वा
मातामंन्न्यतामनुंपितानुब्भ्रातासगंब्भ्योंनुसखासयूंत्थ्यः ॥ ॥ ४२ ।

१ धारय वसूनि पदम् । अत्र अधरद्मिमतिसुमतिश्रुतधारयघृणिसेदिमेन्द्रियधारय० ( शु. य. प्रा. ३ अ. ९८ सू. ) इत्यनेन वकारे परे धारयपदिताकारस्य दीर्घत्वं विधीयते । तेन धारयावसूनि । २ अत्र पिबासोमम् ( शु. य. प्रा. ३ अ. १२९ सू. ) इत्यनेन धर्षे इत्यकारस्य दीर्घः ।

अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥ ९ ॥ अपाम्पेरुः ॥
अपाम्पेरुरस्यापोदेवीःस्वदन्तुस्वात्तञ्चित्सद्देवहविः ॥ सन्ते
प्प्राणोव्वातेनगच्छताᳫंसमङ्गानियजत्रैःसँय्यज्ञपतिराशिषा
॥ १० ॥ घृतेनाक्तौ । पशूँस्त्त्रायेथाᳫंरेवतियजमानेप्प्रिय
न्धाऽआविश ॥ उरोरन्तरिक्षात्सजूर्द्देवेनव्वातेनास्यहविष
स्त्मनायजसमस्यतन्न्वाभव॥ व्वर्षोव्वर्षीयसियज्ञेयज्ञपतिन्धाᳫं
स्वाहादेवेभ्योदेवेभ्यःस्वाहा ॥ ११ ॥ [ ५-२ ] माहिः ॥

शु. य. संहि. ॥४४॥ पू. अ. ॥ ६ ॥

माहिँर्भूर्म्मापृदाकुर्न्नमस्त्तऽआतानानर्व्वाप्प्रेहि ॥ घृतस्यकु
ल्याऽउपऽऋतस्यपत्थ्याऽअनु ॥ १२ ॥ देवीरापꣳ । शुद्धाव्वो
ढ्वꣳसुपरिविष्टादेवेषुसुपरिविष्टाव्वयम्परिवेष्टारोभूयास्म ॥१३॥
व्वाचंन्ते ॥ व्वाचंन्तेशुन्धामिप्प्राणन्तेशुन्धामिचक्षुस्त्तेशुन्धा
मिश्श्रोत्रंन्तेशुन्धामिनाभिंन्तेशुन्धामिमेढ्रंन्तेशुन्धामिपायु
न्तेशुन्धामिचरित्राँस्त्तेशुन्धामि ॥ १४ ॥ मनस्त्ते ॥ ॥४४।
मनस्त्तऽआप्प्यायतांव्वाक्तऽआप्प्यायताम्प्राणस्त्तऽआप्प्याय

ताञ्चक्षुस्त्तऽआप्प्यायताᳬंश्रोत्रन्तऽआप्प्यायताम् ॥ यत्तेक्क्रू
रँय्यदास्त्थितन्तत्तऽआप्प्यायतान्निष्ट्यायतान्तत्तेशुद्ध्यतुशम
होब्भ्यः ॥ ओषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ १५ ॥ रक्ष
साम्भागः ॥ रक्षसाम्भागोऽसिनिरस्त्तꣳरक्षऽइदमहꣳरक्षोऽभि
तिष्ठामीदमहꣳरक्षोवबाधऽइदमहꣳरक्षोऽधमन्तमोनयामि ॥ घृ
तेनद्यावापृथिवीप्प्रोर्णुवाथांवायोवेस्त्तोकानामग्निराज्ज्यंस्यवे

१ निष्ट्यायताम् । अत्र निःस्त्यायताम् इति पदम् । अत्र नेःस्त्यात्तनोः ( शु. य. प्रा. ३ अ. ७० सू. ) इत्यनेन नेरुपसर्गात्परयोः स्त्यात्तन्योर्धात्वोः सकारस्य षकारो भवति संहितायाम् । इति षत्वे षाचयौ मूर्धन्यम् इति ष्टुत्वे ( शु. य. प्रा. ३ अ. ८० सू. ) ऊष्मान्तस्थाभ्यश्च स्पर्शे इत्यनेन टकारस्य द्वित्वम् ।

॥ ४५ ॥

तुस्वाहास्वाहांकृतेऽऊर्द्ध्वंनभसम्मारुतङ्गच्छतम् ॥ १६ ॥
इदमांपः ॥ इदमांपुःप्प्रवंहतावद्यञ्चमलंञ्चयत् ॥ यच्चांभिदु
द्द्रोहानृंतुंय्यच्चंशेपेऽअंभीरुणंम् ॥ आपोंमातम्मादेनंसुःपवं
मानश्चमुञ्चतु ॥ १७ ॥ [ ६-३ ] सन्तें ॥ सन्तेमनोमनं
सासम्प्राणःप्प्राणेनंगच्छताम् ॥ रेडंस्यग्ग्निष्ट्वांश्श्रीणात्वाप
स्त्वासमंरिणन्वातंस्यत्वाद्ध्राज्यैपूष्णोरःंहयाऽऊष्मणोव्य ॥ ४५ ॥
थिपत्प्रयुंतन्द्वेषंः ॥ १८ ॥ घृतङ्घृंतपावानः ॥ घृतङ्घृंतपा

वानꣳपिबतुव्वसांव्वसापावानꣳपिबतान्तरिक्षस्यहुविरसिस्वाहा ॥
दिशः॒प्प्रदिशंऽआदिशोव्विदिशंऽउद्दिशोदिग्ग्भ्यः॒ स्वाहा ।१९।
ऐन्द्रः॒प्प्राणः॒ ॥ ऐन्द्रः॒प्प्राणोऽअङ्गेऽअङ्गेनिदीध्यदैन्द्रऽउदानो
ऽअङ्गेऽअङ्गेनिधीतꣳ ॥ देवंत्त्वष्टुर्भूरितेसꣳसंमेतुसलक्ष्मायद्वि
पुरूपम्भवाति ॥ देवत्रायन्तमवसेसखायोनुत्त्वामातापितरो
मदन्तु ॥ २० ॥ [३-४] समुद्रङ्गच्छ ॥ समुद्रङ्गच्छस्वाहा
न्तरिक्षङ्गच्छस्वाहादेवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छ

स्वाहाहोरात्रेगंच्छस्वाहाच्छन्दांᳬसिगच्छस्वाहाद्यावापृथिवी
गंच्छस्वाहायज्ञङ्गच्छस्वाहासोमंङ्गच्छस्वाहादिव्यन्नभोगच्छ
स्वाहाग्निंवैश्वानरङ्गच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमो
गंच्छतुस्वुर्ज्योतिंःपृथिवीम्भस्मनापृणस्वाहा॥२१॥मापश्॥
मापोमौषधीर्हिᳬसीर्द्धाम्म्नोधाम्म्नोराजँस्ततोवरुणनोमुञ्च ॥
यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च ॥ सुमि ॥४६॥
त्रियानऽआपऽओषधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयो

स्म्मान्द्वेष्टियञ्च्वुयन्द्विष्म्मः ॥ २२ ॥ [ २-५ ] हुविष्म्मती
रिमाः ॥ हुविष्म्मतीरिमाऽआपोहुविष्म्माँ २ ॥ ऽआविवा
सति ॥ हुविष्म्मान्देुवोऽअध्वुरोहुविष्म्माँ २ ॥ ऽअस्त्तुसूर्य्यँ÷
॥ २३ ॥ अुग्नेर्व्वँ÷ ॥ अुग्नेर्व्वोपन्नगृहस्युसदसिसादयामीन्द्रा
ग्न्योर्भागुधेयीस्त्थमित्रावरुणयोर्भागुधेयीस्त्थविश्श्वेषान्दे
वानांम्भागुधेयीस्त्थ ॥ अमूर्य्याऽउपुसूर्य्येयाभिर्व्वासूर्य्यँ÷
सह ॥ तानोहिन्न्वन्त्वध्वुरम् ॥ २४ ॥ [ २-६ ] हुदेत्त्वा ॥

हृदेत्त्वामनंसेत्त्वादिवेत्त्वासूर्य्यायत्त्वा ॥ ऊर्द्ध्वमिमम्ध्वरन्दिवि
विदेवेषुहोत्राॅयच्छ ॥ २५ ॥ सोमराजन् ॥ सोमराजन्विश्वे
[1]श्वास्त्त्वम्प्रजाऽउपावरोहविश्वास्त्त्वाँम्प्रजाऽउपावरोहन्तु ॥
शृणोत्त्वग्निः समिधाहवंम्मेशृण्वन्त्वापोधिषणाश्चदेवीः ॥
[2]श्रोताग्ग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवः सविताहवंम्मेस्वाहा
॥ २६ ॥ देवीरापः ॥ देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्य

॥४७॥

१ अत्र विश्वाऽऊष्मान्तं परिहृपिस्त्वं त्वाम् (शु. य. प्रा. ४ अ. २७ सू.) इत्यनेन विश्वापदम् ऊष्मान्तं (सान्तम्) जाते विश्वास्त्वम् विश्वास्त्वाम् ।
२ श्रोताग्ग्रावाणः । पिबासोमम् (शु. य. प्रा. ३ अ. १२९ सू.) इत्यनेन श्रोत इति क्रियापदस्थह्रस्वाकारस्य दीर्घः ।

ष्व्युऽइन्द्रियावान्मुदिन्तमᳬं ॥ तन्देवेभ्योदेवत्रादत्तशुक्रपे
भ्योयेषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसि ॥ कार्षिरसि
समुद्रस्यत्त्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमो
षधीभिरोषधीᳬं ॥ २८ ॥ यमग्ग्ने ॥ यमग्ग्नेपृत्सुमर्त्त्यमवा
व्वाजेषुयञ्जुनाᳬ ॥ सयन्ताशश्वतीरिषᳬंस्वाहा ॥ २९ ॥ [५-७]
देवस्यत्त्वा ॥ देवस्यत्त्वासवितुᳬप्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णो
हस्त्ताभ्याम् ॥ आददेरावासिगभीरमिमम्मध्वरङ्कृधीन्द्रायसु

पूतमम् ॥ उत्तमेनंपविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तंनिग्ग्रा
ब्भ्यास्त्थदेवश्श्रुतस्त्तर्प्पयंतमामनोमे ॥ ३० ॥ मनोमे । तर्प्प
यतव्वाचम्मेतर्प्पयतप्प्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मे
तर्प्पयतात्त्मानम्मेतर्प्पयतप्प्रजाम्मेतर्प्पयतपशून्मेतर्प्पयतग
णान्मेतर्प्पयतगणामेमाव्वितृषन् ॥ ३१ ॥ इन्द्रायत्त्वा ॥ इन्द्रा
यत्त्वाव्वसुमतेरुद्द्रवंतऽइन्द्रायत्त्वादित्त्यवंतऽइन्द्रायत्त्वाभिमा ॥ ४८ ॥
तिग्घ्ने ॥ श्येनायत्त्वासोमभृतेग्ग्नयेत्त्वारायस्प्पोषदे ॥ ३२ ॥

यत्ते । सोमदिविज्ज्योतिर्यत्पृथिव्याँय्यदुरावन्तरिक्षे ॥ तेना

स्मैयजमानायोरुरायेकृद्ध्यधिदात्रेवोचः ॥ ३३ ॥ श्वात्रास्त्थ ॥

श्वात्रास्त्थवृत्रतुरोराधोगूर्त्ताऽअमृतस्यपत्नीः ॥ तादेवीर्देवत्रे

मँय्यज्ञन्नयतोपहूताः सोमस्यपिबत ॥ ३४ ॥ माभेः ॥

माभेर्म्मासंविक्थाऽऊर्ज्जन्धत्स्वधिषणेवीड्वीसतीवीडयेथामू

र्ज्जन्दधाथाम् ॥ पाप्माहतोनसोमः ॥ ३५ ॥ प्रागपा

सं. ९ क् ॥ प्रागपागुदगधराक्सर्वतस्त्वादिशऽआधावन्तु ॥ अम्ब

शु. य. संहि. निष्प्परसमुरीर्व्विदाम् ॥ ३६ ॥ त्वमङ्ग ॥ त्वमुङ्गप्प्रशᳲ पु. अ.
सिषोदेवश्शविष्ठमर्त्त्यम् ॥ नत्त्वदुन्न्योमघवन्नस्त्तिमर्ड्डितेन्द्र ॥ ७ ॥
॥ ४९ ॥ ब्ब्रवीमितेव्वचः ॥ ३७ ॥ [ ८-८ ] इति श्रीवाजसनेयसंहिता-
यां षष्ठोऽध्यायः ॥ ६ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसू-
त्रम् ॥ व्वाचस्पतयेत्रिको, पयामगृहीतोसित्रिका, वायोद्विका,
यंव्वांद्विको, यावामेका, तंप्रत्क्कथाचतस्रो,ऽयंव्वेनस्त्रिका, ॥ ४९ ॥

१ निष्पर अत्र निः इति विसर्गस्य आविर्निरिड इडाया वसतिर्वरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन यथायोगं ककारपकारपरयोः विसर्जनीयस्य षकारः क्रियते इति षकारे कृते निष्परः । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

येदेवासस्त्रिका, इन्द्राय मूर्द्धानंद्विकौ, यस्तएका, प्राणायमे तिस्रो, मघवऽएकेन्द्राग्नीऽआगतमेका, घैको, मासऽएका, विश्वेदेवासऽआगतऽएके, न्द्रमरुत्वऽएका, मरुत्वन्तंवृषभमेका, मरुतान्त्वा, सजोषाऽइन्द्रऽएका, मरुत्वाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएको, दुत्यमष्टौ पंचविꣳशतिरष्टाचत्वारिꣳशत् [अ. ७ मं. ४८ अनु. २५]

१ इति शतपथब्राह्मणपाठः ।

हरिः ॐ ॥ वाचस्प्पतये[1] पवस्व वृष्णोऽअंशुभ्याङ्गभस्तिपूतः ॥
देवो देवेभ्यः पवस्व येषाम्भागोसि ॥ १ ॥ मधुमतीर्न्नः ॥ मधुम
तीर्न्नऽइषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सो
माय स्वाहा स्वाहोर्व्वन्तरिक्षमन्वेमि स्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृ
तोसि । विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्त्थिवेभ्यो मन
स्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेभ्यस्त्वामरीचिपेभ्योदे ॥५०॥

१ वाचस्प्पतये अत्र प्रकृत्या कखयोः पफयोश्च (शु. य. प्रा. ३ अ. ११ सू.) इत्यनेन विसर्गस्य प्रकृतिभावे प्राप्ते पतितालव्यस्वरोदये (शु. य. प्रा. ३ अ. ३५ सू.) इत्यनेन पतिशब्दे परे विसर्जनीयस्य सकारे कृते ऊष्मान्तस्थाम्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

वा॒ꣳशो॒यस्मै॒त्वेडे॒तत्स॒त्यमु॑परि॒प्रुता॑भ॒ङ्गेन॑ह॒तो॒ऽसौफट्प्रा
णाय॑त्वाव्या॒नाय॑त्वा ॥ ३ ॥ [३-१] उ॒प॒या॒मगृ॑हीतोऽसि ॥
उ॒प॒या॒मगृ॑हीतो॒ऽस्य॒न्तर्य॑च्छमघवन्पा॒हिसोम॑म् ॥ उ॒रु॒ष्यरा॒य
ऽए॒षोय॑जस्व ॥ ४ ॥ अ॒न्तस्ते॑[1] ॥ अ॒न्तस्ते॒द्यावा॑पृथि॒वीद॑धा
म्य॒न्तर्द॑धाम्यु॒र्व॑न्तरि॑क्षम् ॥ स॒जूर्दे॒वेभि॒रव॑रैः॒परै॑श्चान्तर्या॒
मेम॑घवन्मादयस्व ॥ ५ ॥ स्वाङ्कृ॑तोऽसि ॥ स्वाङ्कृ॑तोऽसि॒विश्वे॑भ्य॒ऽ

१ अन्तस्ते । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन नकारस्य द्वित्वे प्राप्ते सवर्गीये चानुत्तमे (शु. य. प्रा. ४ अ. ११५ सू.) इत्यनेन सवर्गीये तकारे परे द्वित्वनिषेधान्न द्वित्वम् ।

शु. य. संहि.

॥५१॥ इन्द्रियेभ्योदिव्येभ्यꣳपार्त्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासु पू. अ.

भवसूर्य्यायदेवेभ्यस्त्वामरीचिपेभ्यऽउदानायत्त्वा ॥ ६ ॥ ॥ ७ ॥

[ ३-२ ] आवायो ॥ आवायो भूषशुचिपाऽउपनꣳसहस्रन्तेनि

युतोविश्ववार ॥ उपोतेऽअन्धोमद्यमयामियस्यदेवदधिषेपूर्व्व

पेयंव्वायवेत्त्वा ॥ ७॥ इन्द्रवायूऽइमे । सुताऽउपप्प्रयोभिरागे

तम् ॥ इन्द्रवोवामुशन्तिहि ॥ उपयामगृहीतोसिव्वायवऽइन्द्र ॥५१॥

---

१ इन्द्रवायुभ्याम्। अत्र पूर्वो द्वन्द्वेऽथवायुषु (शु. य. प्रा. ३ अ. १२८ सू.) इत्यनेन अवायौ द्वन्द्वसमासे पूर्वस्य पदान्तस्थाकारस्य दीर्घविधानाभावेन्द्रशब्दाकारस्य दीर्घाकारो वायुशब्दपरत्वात्।

वायुभ्यान्त्वैषतेयोनिः सजोषोभ्यान्त्वा ॥ ८ ॥ [ २-३ ]
अयंवाम् ॥ अयंवाम्मित्रावरुणासुतः सोमऽऋतावृधा ॥ म
मेदिहश्रुतहवम् ॥ उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा
॥ ९ ॥ रायावयम् ॥ रायावयᳬससवाᳬसोमदेमहव्येनदेवा
यवसेनगावः ॥ तान्धेनुम्मित्रावरुणायुवन्नोविश्वाहाधत्तमन
पस्फुरन्तीमेषतेयोनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ [ २-४ ]
यावाम् ॥ यावाङ्कशामधुमत्त्यश्विनासुनृतावती ॥ तया

यज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्श्विब्भ्यान्त्वैषतेयोनि
र्म्माद्ध्वीब्भ्यान्त्वा ॥ ११ ॥ [१-५] तम्प्प्रत्नथा । पूर्व्व
थाव्विश्श्वथेमथाज्ज्येष्ठतातिम्बर्हिषदꣳस्वर्व्विदम् ॥ प्रतीचीनं
व्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे ॥ उपयामगृ
हीतोसिशण्डायत्त्वैषतेयोनिर्व्वीरताम्पाह्यपमृष्टꣳशण्डोदेवा
स्त्वाशुक्रपाꣳप्प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरोव्वीरान् ॥ ॥५२॥
सुवीरोव्वीरान्प्प्रजनयन्परीह्यभिरायस्पोषेणयजमानम् ॥

सञ्ज्ग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषानिरस्त्तःशण्डः
शुक्रस्याधिष्ठानमसि ॥१३॥ अच्छिन्नस्यते । देवसोमसुवीर्य्यँ
स्यरायस्प्पोषस्यददितारःस्याम ॥ साप्प्रथमासँस्कृतिर्व्विश्ववा
रासप्प्रथमोव्वरुणोमित्रोऽअग्निः ॥१४॥ सप्प्रथमः ॥ सप्प्रथमो
बृहस्प्पतिश्चिकित्त्वाँस्त्तस्म्माऽइन्द्रायसुतमाजुहोतस्वाहा ॥
तृम्पन्तुहोत्रामध्वोयाःस्विष्टायाःसुप्प्रीताःसुहुतायत्स्वाहाया

१ तयोः सम् ( शु. य. प्रा. ३ अ. १३६ सू. ) इत्यनेन नकारस्य सकारे अनुनासिकमुपधा प्रागन्तस्थायाः ( शु. य. प्रा. ३ अ. १३१ सू. ) इत्यनेन चोपधायामनुनासिके कृते रूपम् । नात्र धामच्छत्रन्. ( शु. य. प्रा. ३ अ. १४६ सू. ) इति निषेधस्तस्य परत्वाभावात् ॥ २ तृम्पन्तु होत्राः । अत्र ऋषरेभ्यः ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन समानपदे विधीयमानं णत्वं प्राप्तं परत्र तवर्गे च ( शु. य. प्रा. ३ अ. ९४ सू. ) इत्यनेन निषेधान्न णत्वम् ।

शु. य. संहि. ॥५२॥

डुग्ग्रीत् ॥ १५ ॥ [ ४-६ ] अयंव्वेनः ॥ अयंव्वेनश्चोदय
त्पृश्श्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥ इममपाठंसङ्गमे
सूर्य्यस्यशिशुन्नव्विप्प्रामतिभीरिहन्ति ॥ उपयामगृहीतोसिम
र्कायत्त्वा ॥ १६ ॥ मनोन । येषुहवनेषुतिग्ग्मंव्विपःशच्यावनु
थोद्द्रवन्ता ॥ आयःशर्य्याभिस्तुविनृम्णोऽअस्याश्श्रीणीता
दिशङ्गभस्तावेषतेयोनिःप्प्रजाःपाह्यपमृष्टोमर्कोदेवास्त्वांम
न्थिपाःप्प्रणयन्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाः । प्प्रजाः

पू. अ. ॥७॥ ॥५३॥

म्भं जनयन्त्परीह्याभिरायस्पोषेणयजमानम् ॥ सञ्जग्गमानो
दिवापृथिव्यामन्थीमन्थिशोचिषानिरस्तोमर्कोमन्थिनोधि
ष्ठानमसि ॥ १८ ॥ [३-७] येदेवासः ॥ येदेवासोदिव्येका
दशस्त्थपृथिव्यामध्येकादशस्त्थ ॥ अप्सुक्षितोमहिनैकादश
स्त्थतेदेवासोयज्ञमिमञ्जुषध्वम् ॥ १९ ॥ उपयामगृहीतोसि ॥
उपयामगृहीतोस्याग्रयणोसिस्वाग्रयणःपाहियज्ञम्पाहियज्ञ
पतिंविष्णुस्त्वामिन्द्रियेणपातुविष्णुन्त्वम्पाह्यभिसवना

निपाहि ॥ २० ॥ सोमः पवते ॥ सोमः पवते सोमः पवतेऽस्मै
ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवतऽइषऽऊर्ज्जे प
वतेऽद्भ्यऽओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय
पवते विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्व्विश्वेभ्यस्त्वा देवे
भ्यः ॥ २१ ॥ [ ३-८ ] उपयामगृहीतोसीन्द्राय त्वा बृहद्व
ते वयस्वतऽउक्थाव्यङ्गृह्णामि ॥ यत्तऽइन्द्र बृहद्वयस्तस्मै
त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यँ

ऽयज्ञस्यायुषेगृह्णामिमित्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्रा
वरुणाभ्यान्त्वा । देवाव्यँऽयज्ञस्यायुषेगृह्णामीन्द्रायत्वादेवा
व्यँऽयज्ञस्यायुषेगृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यँऽयज्ञस्यायु
षेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्यँऽयज्ञस्यायुषेगृह्णामी
न्द्राबृहस्पतिभ्यान्त्वादेवाव्यँऽयज्ञस्यायुषेगृह्णामीन्द्रावि
ष्णुभ्यान्त्वादेवाव्यँऽयज्ञस्यायुषेगृह्णामि ॥ २३ ॥ [२-९]
सं. १० मूर्द्धानन्दिवः ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽ

आजातमग्निम् ॥ कविᳬसम्राजमतिथिञ्जनानामासन्नापा
त्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि । ध्रुवोसिध्रुव
क्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएषतेयोनिर्वै
श्वानरायत्त्वा ॥ ध्रुवन्ध्रुवेणमनसावाचासोममवनयामि ॥ अथानि
नऽइन्द्रऽइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥ [२-१०] यस्ते
द्रप्सस्कन्दतियस्तेऽअᳬशुर्ग्रावच्युतोधिषणयोरुपस्त्थात् ॥
अद्ध्वर्योर्वापरिवायःपवित्रात्तन्तेजुहोमिमनसावषट्कृतᳬस्वा

हांदेवानांमुत्क्रमणमसि ॥ २६ ॥ [ १-११ ] प्राणायमे । वर्च्चो
दावर्च्चसेपवस्वव्यानायमेवर्च्चोदावर्च्चसेपवस्वोदानायमेवर्च्चोदा
वर्च्चसेपवस्ववाचेमेवर्च्चोदावर्च्चसेपवस्वक्रतूदक्षाभ्याम्मेवर्च्चो
दावर्च्चसेपवस्वश्रोत्रायमेवर्च्चोदावर्च्चसेपवस्वचक्षुर्भ्याम्मेव
र्च्चोदसौवर्च्चसेपवेथमात्मनेमे ॥ २७ ॥ आत्मनेमे । वर्च्चोदा
वर्च्चसेपवस्वौजसेमेवर्च्चोदावर्च्चसेपवस्वायुषेमेवर्च्चोदावर्च्चसेपव
स्वविश्वाभ्योमेप्रजाभ्योवर्च्चोदसौवर्च्चसेपवेथाम् ॥ २८ ॥

कोसि । कतमोसिकस्यासिकोनामासि ॥ यस्यतेनामामन्म
॥५६॥ हियन्त्वासोमेनातीतृपाम ॥ भूर्भुवःस्वःसुप्रजाःप्रजाभिः ॥७॥
स्याꣳसुवीरोव्वीरैःसुपोषःपोषैः ॥ २९ ॥ [३-१२] उपया
मगृहीतोसिमधवेत्त्वोपयामगृहीतोसिमाधवायत्त्वोपयामगृ
हीतोसिशुक्रायत्त्वोपयामगृहीतोसिशुचयेत्त्वोपयामगृहीतो
सिनभसेत्त्वोपयामगृहीतोसिनभस्यायत्त्वोपयामगृहीतोसीषे ॥५६॥
त्त्वोपयामगृहीतोस्यूर्जेत्त्वोपयामगृहीतोसिसहसेत्त्वोपयामगृ

हीतोसिसहुस्यायत्त्वोपयामगृंहीतोसितपंसेत्त्वोपयामगृंहीतो
सितपुस्यायत्त्वोपयामगृंहीतोस्यꣳहसस्पतयेत्त्वा ॥ ३० ॥
[ १-१३ ] इन्द्रांग्नीऽआगंतम् ॥ इन्द्रांग्नीऽआगंतꣳसुतङ्गी
र्भिर्न्नभोव्वरेंण्ण्यम् ॥ अस्यपांतन्धियेषिता ॥ उपयामगृंहीतो
सीन्द्राग्निभ्यांन्त्वैपतेयोनिरिन्द्राग्निभ्यांन्त्वा ॥ ३१ ॥
[ १-१४ ] आघं ॥ ओघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानु

१ आघाये। अत्र अथोदारिपशोचपनयसादयर्ज्जुरुपसगुसलहमाघाघारास्पृभवत यकारे (शु. य. प्रा. ३ अ. ११२ सू.) यकारे परे एते दीर्घा भवन्ति। तेन घ इत्यस्याकारस्य दीर्घः। एवम् अघायतः इत्यत्रापि दीर्घः।

षक् ॥ येषामिन्द्रोयुवासखा ॥ उपयामगृहीतोस्यग्नीन्द्रा
ब्भ्यान्त्वैषतेयोनिरग्नीन्द्राब्भ्यान्त्वा ॥ ३२ ॥ [ १-१५ ]
ओमासश्चर्षणीधृतः ॥ ओमासश्चर्षणीधृतोविश्वेदेवासऽआ
गत ॥ दाश्वाᳬंसोदाशुषः सुतम् ॥ उपयामगृहीतोसिविश्वे
ब्भ्यस्त्वादेवेब्भ्यऽएषतेयोनिर्विश्वेब्भ्यस्त्वादेवेब्भ्यः ॥ ३३ ॥
[ १-१६ ] विश्वेदेवासः ॥ विश्वेदेवासऽआगतशृणुतामऽइमम्

१ अत्र पिबासोमम् । ( शु. य. प्रा. ३ अ. १२९ सू. ) इत्यनेन चर्षणिशब्दस्येकारस्य दीर्घे चर्षणीधृतः । २ शृणुत मऽइमम् । अत्र शृणुतत्विपि-भ्रजिभवतपिबतस्यातिष्ठरक्षा मकारे ( शु. य. प्रा. ३ अ. ११७ सू. ) इत्यनेन मकारे परे एते दीर्घा भवन्ति । इति तकारस्य दीर्घे शृणुतामऽइमम् ।



॥ ५७ ॥

हवम् ॥ एदम्बर्हिर्निषीदत ॥ उपयामगृहीतोसिविश्वेभ्य
स्त्वादेवेभ्यंऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ३४ ॥
[१-१७] इन्द्रमरुत्वꣳ ॥ इन्द्रमरुत्वऽइहपाहिसोमँय्यथा
शार्य्यातेऽअपिबꣳसुतस्य ॥ तवप्प्रणीतीतवशूरशर्म्मन्नाविवा
सन्तिकवयःसुयज्ञाः ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्व
तऽएषतेयोनिरिन्द्रायत्त्वामरुत्वते ॥ ३५ ॥ [१-१८] मरु
त्वन्तंव्वृषभं । व्वावृधानमकवारिन्दिव्यꣳशासमिन्द्रम् ॥

१ बर्हिर्निषीदत अत्र निःसीदत इति पदम् । अत्र नेः सीदतेः ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन नेः परस्य सीदतेरित्यत्रस्थसकारस्य षकारः ।

[1]विश्वासाहमवसेनूतनायोग्रꣳसहोदामिहतꣳहुवेम ॥ उप
यामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरु
त्त्वते ॥ [2] [१-१९] उपयामगृहीतोसिमरुतान्त्वौजसे ॥३६॥
[१-२०] सजोषाऽइन्द्र ॥ सजोषाऽइन्द्रसगणोमरुद्भिꣳ
सोमम्पिबवृत्रहाशूरविद्वान् ॥ [3]जहिशत्रूँ १ ॥ रपमृधोनुद
स्वाथाभयङ्कृणुहिविश्वतोनꣳ ॥ उपयामगृहीतोसीन्द्रायत्त्वा ॥५८॥

१ विश्वासाहम् । अत्र विश्वशब्दाकारस्य विश्वसहभुवपुपवसुषु (शु. य. प्रा. ३ अ. १०१ सू.) इत्यनेन सहपरे दीर्घाकारः । २ (इति शतपथे) ।
३ शत्रूँ १ ॥ रपमृधः । अत्र स्वर औपशविः (शु. य. प्रा. ३ अ. १३२ सू.) इत्यनेन नकारस्य स्वरे परे अनुस्वारे उपधायामनुनासिक्ये च रूपम् ।

मुरुत्त्वंतऽएषतेयोनिरिन्द्रायत्त्वामुरुत्त्वंते ॥ ३७ ॥ [ १-२१ ]
मुरुत्त्वाँ २ ॥ ऽइन्द्र । वृषभोरणायपिबासोममनुष्ष्वधम्म
दाय ॥ आसिञ्चस्वजुठरेमद्ध्वऽऊर्म्मिन्त्वꣳराजासिप्प्रतिपत्त्सु
तानाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वामुरुत्त्वंतऽएषतेयोनि
रिन्द्रायत्त्वामरुत्त्वंते ॥३८॥ [१-२२] मुहाँ २ ॥ ऽइन्द्रं÷ ॥
मुहाँ २ ॥ ऽइन्द्रोनृवदाचर्षणिप्प्राऽउतद्विबर्हाऽअमिनश्सहो

१ मरुत्वान् इन्द्रः । अत्राकारोपधो यकारम् (शु. य. प्रा. ३ अ. १४३ सू.) इत्यनेन स्वरे परे नकारस्य यकारे कृते उपधायामनुनासिक्ये च यवयोः पदान्तयोः स्वरमध्ये लोपः (शु. य. प्रा. ४ अ. १२५ सू.) इत्यनेन यकारलोपे न परकाल० (शु. य. प्रा. ३ अ. ४ सू.) इत्यनेन सन्धेर्निषेधः । तथैव महाँ २ इन्द्रः ।

शु. य. संहि. भिः ॥ अस्म्मद्र्यग्ग्वावृधेव्वीर्य्यायोरुश्पृथुश्सुकृतङ्कर्त्तृभि[१] पृ. अ.
॥५९॥ र्भूत् ॥ उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्राय ॥७॥
त्त्वा ॥३९॥ [१-२३] महाँ २ ॥ ऽइन्द्रः ॥ महाँ २ ॥ ऽइन्द्रो
यऽओजसापर्ज्जन्न्योवृष्टिमाँ २ ॥ ऽइव ॥ स्तोमैर्व्वत्सस्यव्वावृधे ॥
उपयामगृहीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥४०
[१-२४] उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवव्वहन्तिकेतवः ॥ ॥५९॥

१ कर्तृभिः । अत्र परंतु रेफहकाराभ्याम् (शु. य. प्रा. ४ अ. १०१ सू.) इत्यस्यापवादभूतेन ऊष्मान्त. (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन तकारस्य द्वित्वे प्राप्ते ऋवर्णे च (शु. य. प्रा. ४ अ. १११ सू.) इत्यनेन ऋवर्णे परे व्यञ्जनस्य द्विर्भावनिषेधान्न द्वित्वम् । एतादृशेऽन्यत्रापि बोध्यम् ।

द्दृशेव्विश्श्वांयसूर्य्यंस्वाहा॥४१॥ चित्रन्देवानाम्॥ चित्रन्देवा
नामुदंगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः ॥ आप्प्राद्यावा
पृथिवीऽअन्तरिक्षहंसूर्य्यंऽआत्क्माजगतस्त्तस्त्थुषश्श्चस्वाहा
॥ ४२ ॥ अग्ग्नेनय । सुपथारायेऽअस्म्मान्विश्श्वानिदेवव्वयुना
निव्विद्धान् ॥ युयोद्ध्युस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमंऽउ
क्तिंव्विधेमस्वाहा ॥ ४३॥ अयन्नः ॥ अयन्नोऽअग्ग्निर्व्वरि
वस्कृणोत्त्वयम्मृधःपुरऽएतुप्प्रभिन्दन् ॥ अयंव्वाजाञ्जयतुव्वा

जꣳसातावयꣳशत्रूञ्जयतुजर्हृषाणꣳस्वाहा ॥ ४४ ॥ रूपेणवꣳ ॥
॥६०॥ रूपेणवोरूपमभ्यागांन्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्य ॥ ७ ॥
पथाप्प्रेतंचन्द्रदक्षिणाविस्वःपश्श्यव्यन्तरिक्षꣳय्यतस्वसदस्यैꣳ
॥ ४५ ॥ ब्राह्मणमद्य । व्विदेयम्पितृमन्तम्पैतृमत्त्यमृषिमा
र्षेयꣳसुधातुदक्षिणम् ॥ अस्म्मद्राता देवत्राग्गच्छतप्प्रदातार
माविशत ॥ ४६ ॥ अग्ग्नयेत्त्वा ॥ अग्ग्नयेत्त्वामह्यंव्वरुणोददातु ॥ ३० ॥

१ विस्वः । अत्र वेर्युदयः (शु. य. प्रा. ३ अ. ६० सू.) इत्यनेन वेः उपसर्गात्परस्य सकारस्य षकारोदये षकारो भवति । अतो नात्र षकारात्परस्य षकारोदयस्य वेरुपसर्गस्य सकारस्य षकारः ।

सोमृतत्त्वमंशीयायुर्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेरुद्रायं
त्त्वामह्यँव्वरुणोददातुसोमृतत्त्वमंशीयप्प्राणोदात्रऽएधिव्वयो
मह्यम्प्रतिग्ग्रहीत्रेबृहस्प्पतयेत्त्वामह्यंव्वरुणोददातुसोमृतत्त्व
मंशीयत्त्वग्ग्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेयमायत्त्वामह्यं
व्वरुणोददातुसोमृतत्त्वमंशीयहयोदात्रऽएधिव्वयोमह्यम्प्रति
ग्ग्रहीत्रे ॥ ४७ ॥ कौदात् ॥ कौदात्कस्म्माऽअदात्कामौदा
सं. ११ त्कामायादात् ॥ कामौदाताकामं॑ प्प्रतिग्ग्रहीताकामैतत्ते

॥ ४८ ॥ [ ८-२५ ] इतिश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः ॥ ८ ॥
॥ ६१ ॥ ॥ ७ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ उपयामगृ-
हीतोस्यादित्येभ्यः पंच, वाममद्यद्वे, सुशर्मास्येका, बृहस्प-
तिसुतस्यद्वे, हरिरसिचतस्रः, समिन्द्रेऽष्टौ, माहिः पंच,
ऽएजतुदशमास्यः पंचा, तिष्ठैका, सुक्ष्वाह्येके, न्द्राग्निदेका,
यस्मान्नद्वे, ऽग्नेपवस्वो, त्तिष्ठन्न, दृश्रमु, दुत्यमेकैका, जिघ्र ॥ ६१ ॥
द्वे, विनइन्द्र, वाचस्पतिं, ध्विश्वकर्मन्नेकैका, ग्नयेत्वाचतस्र,

इहरतिस्तिस्रः, परमेष्ठीदश, त्रयोविꣳशतिस्त्रिषष्टिः ॥ [अ. ८ मं. ६३ अनु. २३] हरिः ॐ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्यादित्त्येभ्यंस्त्वा ॥ विष्ण्णऽउरुगायैषतेसोमस्तꣳरेक्षस्वमात्त्वांदभन् ॥ १ ॥ कदाचन । स्तरीरसिनेन्द्रंसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानंदेवस्यंपृच्च्यतऽआदित्त्येभ्यंस्त्वा ॥ २ ॥ कदाचन । प्प्रयुंच्छस्युभेनिपासिजन्मनी ॥ तुरीयादित्त्युसवनन्तऽइन्द्रियमातस्त्थावमृतंन्दि

ब्य्यादित्त्येब्भ्यस्त्त्वा ॥ ३ ॥ यज्ञोदेवानाम् ॥ यज्ञोदेवाना
म्प्प्रत्त्यैतिसुम्म्नमादित्त्यासोभवतामृडयन्त्तः ॥ आवोर्व्वाची
सुमतिर्व्ववृत्त्यादुहोश्चिद्याव्वरिवोवित्तरासदादित्त्येब्भ्यस्त्त्वा
॥ ४ ॥ व्विवस्वन्नादित्त्य ॥ व्विवस्वन्नादित्त्यैषतेसोमपीथस्त्त
स्मिन्म्मत्त्स्व ॥ श्रदस्म्मैनरोव्वचसेदधातनयदाशीर्द्दादम्पती
व्वाममश्श्नुतः ॥ पुमान्पुत्त्रोजायतेव्विन्दतेव्वस्वधाव्विश्श्वाहारपऽ
एधतेगृहे ॥ ५ ॥ [५-१] व्वाममद्य । सवितर्व्वाममुश्श्वोदिवे ॥ ६२ ॥

१ भवतं मृडयन्तः । अत्र शृणुत्विषिप्रजिभवतपिबेतस्मतिहरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे दीर्घे भवता मृडयन्तः ।

दिवेद्वाममस्मभ्यꣳसावीः ॥ द्वामस्युहिक्षयंस्यदेवभूरैरयाधि
याद्वामभाजःस्याम ॥ ६ ॥ उपयामगृहीतोसि । सावित्रो
सिचनोधाश्चनोधाऽअसिचनोमयिधेहि ॥ जिन्वंयज्ञञ्जिन्व
यज्ञपतिम्भगायदेवायत्त्वासवित्रे ॥ ७ ॥ [ २-२ ] शतम्
॥ ३०० ॥ उपयामगृहीतोसि । सुशर्म्मासिसुप्रतिष्ठानोबृहदु
क्षायनमः ॥ विश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्य
स्त्वादेवेभ्यः ॥ ८ ॥ [ १-३ ] उपयामगृहीतोसि ॥ उप

यामगृहीतोसिबृहस्पतिंसुतस्यदेवसोमतऽइन्दोरिन्द्रियावतः
पत्नीवतोग्ग्रहाँ २ ॥ ऽऋध्यासम् ॥ अहम्परस्तादहमवस्ता
द्यदन्तरिक्षन्तदुमेपिताभूत् ॥ अहꣳसूर्य्यमुभयतोददर्शाह
न्देवानाम्परमङ्गुहायत् ॥ ९ ॥ अग्ना ३॥ ऽइपत्नीवन् ॥
अग्ना ३ ॥ ऽइपत्नीवन्तसजूर्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा ॥
प्रजापतिर्वृषासिरेतोधारेतोमयिधेहिप्प्रजापतेस्त्तेवृष्ण्णोरेतो ॥६२

१ बृहस्पतिसुतस्य । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते अनुसन्तनोतु बृहस्पति० (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन समानपदे सस्य प्रकृतिभावविधानान्न षत्वम् । तत ऊष्मान्तस्थाभ्यश्च स्पर्शाः (शु. य. प्रा. ४ अ. १०२ सू.) इति पकारस्य द्वित्वम् ।

धसौरेतोधामंशीय ॥ १० ॥ [२-४] उपयामगृहीतोसि ॥
उपयामगृहीतोसिहरिरसिहारियोजनोहरिंभ्यान्त्वा ॥ हर्य्यौ
र्द्धानास्त्थसहंसोमाऽइन्द्राय ॥ ११ ॥ यस्त्ते । ऽअश्वसनि
र्भक्षोयोगोसनिस्त्तस्यंतऽइष्टयजुषस्तुतस्तोमस्यशस्तोक्थ
स्योपंहूतस्योपंहूतोभक्षयामि ॥ १२ ॥ देवकृंतस्यैनंसः ॥
देवकृंतस्यैनंसोवयजंनमसिमनुष्यकृतस्यैनंसोवयजंनमसिपि
तृकृंतस्यैनंसोवयजंनमस्यात्मकृंतस्यैनंसोवयजंनमस्येनंसऽए

१ गोसनिस्त. । भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षत्वप्राप्तौ अनुसन्त० (३ अ. ८२ सू.) इत्यनेन निषिध्यते।

नसोवयजंनमसि ॥ यच्चाहमेनौविद्वाँश्चकारयच्चाविद्वाँस्तस्य
सर्व्वस्यैनंसोवयजंनमासि॥१३॥संव्वर्च्चंसा॥संव्वर्च्चंसापयंसासन्त
नूभिरगंन्महिमनंसासꣳशिवेनं ॥ त्वष्टांसुदत्रोविदंधातुरायो
नुंमार्ष्टुतन्वोयद्विलिष्टम्॥१४॥ [४-५]सेमिन्द्र। णोमनसाने
षिगोभिःꣳसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्त्या ॥ सम्ब्रह्मणादेव
कृतँय्यदस्त्तिसन्देवानांꣳसुमतौयज्ञियानांꣳस्वाहा ॥ १५ ॥ ॥६४॥

१ समिन्द्रणो । अत्र इन्द्र नः इति पदद्वयेन भाविभ्य० (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन समानपदत्वाभावाण्णत्वाप्राप्तौ निपण्णायरथयादण। मिन्द्रऽएणत्वपरिणीयते समिन्द्रण० (शु. य. प्रा. ३ अ. ८३ सू.) इत्यनेन णत्वं निपात्यते।

संव्वर्चसा ॥ संव्वर्च्चसापयसासन्तनूभिरगन्न्महिमनसासᳬशि
वेन। त्वष्टांसुदत्रोव्विदधातुरायोनुमार्ष्टुतन्न्वोयद्विलिष्टम् ॥ १६॥
धातारातिः। सवितेदञ्जुषन्ताम्प्रजापतिर्न्निधिपादेवोऽअग्निः ॥
त्वष्टाव्विष्णुः प्प्रजयासᳬरराणायजमानायद्द्रविणन्दधात
स्वाहा ॥ १७॥ सुगावः ॥ सुगावोदेवाःसदनाऽअकर्म्मयऽ
आजग्मेदᳬसवनञ्जुषाणाः ॥ भरमाणाव्वहमानाहवीᳬष्ष्य
स्म्मेधत्तव्वसवोव्वसूनिस्वाहा ॥ १८॥ याँ २॥ ऽआवहᳬ ॥

याँ २ ॥ ऽआवहऽउशतोदेवदेवाँस्तान्प्रेरयस्वेऽअग्नेसधस्थे ॥
॥ ६५ ॥ जक्षिवाꣳसः पपिवाꣳसश्च विश्वेसुन्धर्मꣳस्वरातिष्ठतानु ॥ ८ ॥
स्वाहा ॥ १९ ॥ व्वयꣳ हि । त्वाम्प्रयतियज्ञेऽअस्मिन्नग्नेहोतार
मवृणीमहीह ॥ ऋधगयाऽऋधगुताशमिष्ठाः प्रजानन्यज्ञमु
पयाहिविद्वान्स्वाहा ॥ २० ॥ देवागातुविदः ॥ देवागातुविदोगा
तुंवित्त्वागातुमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहाव्वातेधाः ॥ ६५ ॥
॥ २१ ॥ यज्ञंयज्ञम् ॥ यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वाँयोनिं

ङ्गच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकꣳसर्व्ववीरस्तञ्जु
षस्वस्वाहा ॥ २२ ॥ [ ८-६ ] माहिःमाहिर्भुर्म्मापृदाकुꣳ ॥
उरुꣳहिराजाव्वरुणश्चकारसूर्य्यायपन्थामन्न्वेतवाऽउ ॥ अप
देपादाप्प्रतिधातवेकरुतापवक्ताहृदयाव्विधश्चित्[1] ॥ नमोव्वरुणा
याभिष्ठितोव्वरुणस्यपाशः ॥ २३ ॥ अग्नेरनीकम् ॥ अग्ने
रनीकमपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् ॥ दमेदमेस

१ हृदयाविधश्चित् । अत्र अश्वरथिममतिसुमतिश्वसुरचारयध्यनिवेदिमेन्द्रियधारयचित्रभद्रुरयमुनाश्वसहृदयं० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन यकारे परे हृदयाकारस्य दीर्घाकारो विधीयते । अतो हृदयशब्दाकारस्य दीर्घाकारः ।

शु. य. संहि. ॥६६॥ पृ. अ. ॥८॥

मिधँस्यक्ष्यग्नेष्प्रतितेजिह्वाघृतमुच्चरण्यत्स्वाहा ॥ २४ ॥ समु
द्रेते ॥ समुद्रेतेहृदयमप्स्वन्तश्सन्त्वाविशन्त्वोषधीरुतापः ॥
यज्ञस्यत्त्वायज्ञपतेसूक्तोक्तौनमोवाकेविधेमयत्स्वाहा ॥ २५ ॥
देवीरापः ॥ देवीरापऽएषवोगर्भस्तꣳसुप्रीतꣳसुभृतम्बिभृत ॥
देवसोमैषतेलोकस्तस्मिञ्छञ्चवक्ष्वपरिचवक्ष्व ॥ २६ ॥ अव
भृथनिचुम्पुण । निचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमे ॥६६॥
नोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहिदेवा

नाᳪंसमिदंसि ॥ २७ ॥ [५-७] एजंतुदशंमास्यᳪ ॥ एजं
तुदशंमास्योगब्भौजरायुंणासह ॥ यथायंव्वायुरेजंतियथांसमु
द्द्रऽएजंति ॥ एवायन्दशंमास्योऽअस्स्रंज्जरायुंणासह ॥ २८ ॥
यस्यैते । यज्ञियोगब्भौयस्यैयोनिंर्हिरण्ण्ययीं ॥ अङ्गान्यह्रुं
तायस्यतम्मात्रासमंजीगमᳪंस्वाहां ॥ २९ ॥ पुरुदस्म्मोव्वि
षुंरूपᳪ ॥ पुरुदस्म्मोव्विषुंरूपऽइन्दुंरन्तम्महिमानंमानञ्जुधी
रंः ॥ एकंपदीन्द्विपदीन्त्रिपदीञ्चतुंष्प्पदीमष्टापदीम्भुवनानुं

प्प्रथन्ताꣳस्वाहा ॥ ३० ॥ मरुतोयस्यं ॥ मरुतोयस्यहिक्षये
पाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ ३१ ॥ मुही
द्यौश्च । पृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरी
मभिः ॥ ३२ ॥ [५-८] आतिष्ठ । वृत्रहन्नथंय्युक्तातेब्र
ह्मणाहरी ॥ अर्वाचीनꣳसुतेमनोग्ग्रावाकृणोतुव्वग्नुना ॥
उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वा ॥ ६७ ॥

१ अत्र पिबा सोमम् (शु. य. प्रा. अ. १२० सू.) इत्यनेन पाथ इत्यस्य ह्रस्वाकारस्य दीर्घः। २ आतिष्ठ वृत्रहन्। अत्र तिष्ठाद्युदात्तम्। (शु. य. प्रा. ३ अ. १०४ सू.) तिष्ठेत्येतत्पदं दीर्घमापद्यते यथाद्युदात्तं भवति। इत्यनेन विधीयमानो दीर्घाकार आतिष्ठपदस्य आद्युदात्तत्वाभावेन न दीर्घः।

षोडशिनै ॥ ३३ ॥ [१-९] युक्ष्वाहि । केशिनाहरीवृषणा
कक्ष्यप्प्रा ॥ अथानऽइन्द्रसोमपागिरामुपश्रुतिञ्चर ॥ उप
यामगृहीतोसीन्द्रायत्त्वाषोडशिनंऽएषतेयोनिरिन्द्रायत्त्वाषो
डशिनै ॥ ३४ ॥ [१-१०] इन्द्रमित् ॥ इन्द्रमिद्धरीवहतोप्प्रति
धृष्टशवसम् ॥ ऋषीणाञ्चस्तुतीरुपयज्ञञ्चमानुषाणाम् ॥ उप
यामगृहीतोसीन्द्रायत्त्वाषोडशिनंऽएषतेयोनिरिन्द्रायत्त्वाषो
डशिनै ॥ ३५ ॥ [१-११] यस्म्मान्न । जातश्परोऽअन्न्योऽअ

१ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ. १३० सू.) इत्यनेन अकारस्य दीर्घे युक्ष्वाहि इति ।

स्तियऽआविवेशभुवनानिविश्वा ॥ प्रजापतिःप्रजयासꣳ
रराणस्त्रीणिज्योतीꣳषिसचतेसषोडशी ॥ ३६ ॥ इन्द्रश्च ।
सम्राड्वरुणश्चराजातौतेभक्षञ्चक्रतुरग्रऽएतम् ॥ तयोरहमनुभ
क्षम्भक्षयामिवाग्देवीजुषाणासोमस्यतृप्यतुसहप्राणेनस्वा
हा ॥ ३७ ॥ [२-१२] अग्नेपवस्व ॥ अग्नेपवस्वस्वपाऽअस्मे
वर्च्चःसुवीर्य्यम् ॥ दधद्रयिम्मयिपोषम् ॥ उपयामगृहीतोस्य ॥६८॥
ग्नयेत्त्वावर्च्चसऽएषतेयोनिरग्नयेत्त्वावर्च्चसे ॥ अग्नेवर्च्चस्विन्व

र्च्चस्वाँस्त्वन्देवेष्ष्वसिव्वर्च्चस्वानहम्मनुष्ष्येषुभूयासम् ॥ ३८ ॥
[१-१३] उत्तिष्ठन्नोजसा ॥ उत्तिष्ठन्नोजसासहपीत्त्वीशिप्प्रेऽ
अवेपयः ॥ सोममिन्द्रचमूसुतम् ॥ उपयामगृहीतोसीन्द्राय
त्त्वौजसऽएषतेयोनिरिन्द्रायत्त्वौजसे ॥ इन्द्रौजिष्ठौजिष्ठस्त्त्व
न्देवेष्ष्वस्योजिष्ठोहम्मनुष्ष्येषुभूयासम् ॥ ३९ ॥ [१-१४]
अदृश्श्रमस्य । केतवोव्विरश्म्मयोजनाँ२ ॥ ऽअनु ॥ भ्राजन्तोऽ
अग्नयोयथा ॥ उपयामगृहीतोसिसूर्य्यायत्त्वाभ्भ्राजायैषते

योनिः॑सूर्य्याय॑त्वाभ्भ्राजाय॑ ॥ सूर्य्य॑भ्भ्राजिष्ठ॒भ्भ्राजिष्ठ॒स्त्त्व
न्दे॒वेष्ष्वसि॒भ्भ्राजि॑ष्ठो॒हम्म॑नु॒ष्ष्ये॑षु॒भूयासम् ॥ ४० ॥ [ १-१५ ]
उदु॒त्त्यम् ॥ उदु॒त्त्यञ्जा॒तवे॑दस॒न्दे॒वंव्व॑हन्ति॒के॒तव॑ः ॥ दृ॒शेव्वि
श्वा॑य॒सूर्य्य॑म् ॥ उ॒प॒या॒मगृ॑हीतो॒सि॒सूर्य्या॑य॒त्त्वा॒भ्भ्राजा॒यै॒षते॒
योनिः॑सूर्य्या॑य॒त्त्वा॒भ्भ्राजा॑य ॥ ४१ ॥ [ १-१६ ] आजि॑घ्र ॥
आजि॑घ्रक॒लशं॑म्म॒ह्या॒त्त्वा॒व्विश॒न्त्वि॒न्दव॑ः ॥ पुन॑रू॒र्ज्जा॒निव॑र्त्त ॥ ६१ ॥
स्व॒सान॑ःस॒ह॒स्रं॒न्धु॒क्ष्वो॒रुधा॑रा॒पय॑स्वती॒पुन॒र्म्मा॒विश॑ताद्र॒यिः

॥ ४२ ॥ इडेरन्तें ॥ इडेरन्तेहव्व्येकाम्म्येचन्द्रेज्ज्योतेदितिसरं
स्वतिमहिविश्श्रुति ॥ एतातेऽअग्घ्ये[1]नामानिदेवेब्भ्योमासुकृतं
ब्रूतात् ॥ ४३ ॥ [ २-१७ ] विनः ॥ विनऽइन्द्रमृधोजहि
नीचायच्छपृतन्न्यतः ॥ योऽअस्म्माँ२ ॥ ऽअभिदासत्त्यधं
[2]रङ्गमयातमः ॥ उपयामगृहीतोसीन्द्रायत्त्वाविमृधऽएषते
योनिरिन्द्रायत्त्वाविमृधे ॥ ४४ ॥ [ १-१८ ] वाचस्पतिं ।

---

१ अस्य नामानि । अत्र नामानिपदस्यस्य निशब्दो बहुलम् (शु. य. प्रा. ३ अ. १८ सू.) इति सूत्रेण पदान्तीयस्य निशब्दस्य लोपे प्राप्तेऽपि सूत्रे बहुलम् ग्रहणात्क्वचिन्न भवति । तेन नात्र लोपः । २ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ. १३० सू.) इत्यनेन दीर्घाकारे जाते गमयातमः ।

व्विश्वकर्म्माणमूतयेमनोजुवंव्वाजेऽअद्याहुवेम ॥ सनोव्विश्वा
॥७०॥ निहवनानिजोषद्विश्वशम्भूरवसेसाधुकर्म्मा ॥ उपयामगृही
तोसीन्द्रायत्त्वाव्विश्वकर्म्मणऽएषतेयोनिरिन्द्रायत्त्वाव्विश्वक
र्म्मणे ॥ ४५ ॥ [१-१९] व्विश्वकर्म्मन्हविषा ॥ व्विश्वकर्म्म
न्हविषाव्वर्द्धनेनत्त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मैविशः
समनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्योयथासत् ॥ उपयामगृहीतो ॥७०॥

१ अद्य हुवेम । अत्र अद्य तं हकारचकारभवतवृणीमहेदेवेषु (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन अद्येत्येतत्पदं ह्रस्वहकारतकारचकारभवत-वृणीमहेदेवेत्येषु परेषु दीर्घमापद्यते । इति हकारे परे अद्यशब्दाकारो दीर्घो जातः । तेन अद्याहुवेम इति ।

सीन्द्रा॑य॒त्त्वा॒ वि॒श्वक॑र्म्मण॒ऽएष॒ ते॒ योनि॒रिन्द्रा॑य॒त्त्वा॒ वि॒श्वक॑र्म्मणे ॥ ४६ ॥ [ १-२० ] उ॒प॒या॒मगृ॑हीतोसि ॥ उ॒प॒या॒मगृ॑हीतोस्य॒ग्नये॑त्त्वा गाय॒त्रच्छ॑न्दसङ्गृह्णा॒मीन्द्रा॑य॒त्त्वा त्रि॒ष्टुप्छ॑न्दसङ्गृह्णामि॒ वि॒श्वेभ्य॑स्त्त्वा दे॒वेभ्यो॒ जग॑च्छन्दसङ्गृह्णाम्म्य॒नु॒ष्टुप्ते॑भिग॒रः ॥४७॥ व्रे॒शीना॑न्त्वा ॥ व्रे॒शीना॑न्त्वा॒ पत्म॒न्ना धू॑नोम्मि कुकू॒ननाना॑न्त्वा॒ पत्म॒न्ना धू॑नोमि भ॒न्दना॑नान्त्वा॒ पत्म॒न्ना धू॑नोमि म॒दिन्त॑मानान्त्वा॒ पत्म॒न्ना धू॑नोमि म॒धुन्त॑माना

शु. य. संहि. न्त्वापत्मन्नाधूनोमिशुक्रन्त्वाशुक्रऽआधूनोम्म्यह्नोरूपेसूर्य्य पू. अ
॥ ८ ॥
॥७१॥ स्यरश्मिषु ॥ ४८ ॥ ककुभꣳरूपं । वृषभस्यरोचतेबृह
च्छुक्रःशुक्रस्यपुरोगाःसोमꣳसोमस्यपुरोगाः ॥ यत्तेसोमादा
भ्यन्नामजागृवितस्मैत्त्वागृह्णामितस्मैतेसोमसोमायस्वा
हा ॥४९॥ उशिक्त्वम् ॥ उशिक्त्वन्देवसोमाग्नेःप्प्रियम्पाथो
पीहिव्वशीत्त्वन्देवसोमेन्द्रस्यप्प्रियम्पाथोपीह्यस्म्मत्सखात्त्व ॥७२॥
न्देवसोमव्विश्वेषान्देवानाम्प्प्रियम्पाथोपीहि ॥५०॥ [४-२१]

इहरतिः ॥ इहरतिरिहरमध्वमिहधृतिरिहस्वधृतिस्वाहा ॥
उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ॥ रायस्पोषमस्मा
सुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिः ॥ सत्रस्यऽऋद्धिर
स्यगन्मज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअध्यारुहामा
विदामदेवान्स्वज्योतिः ॥ ५२ ॥ युवन्तम् ॥ युवन्तमि
न्द्रापर्वतापुरोयुधायोनःपृतन्यादपतन्तमिद्धंतंवज्रेणतन्त
मिद्धतम् ॥ दूरेचत्तायच्छन्त्सद्गहनंन्यदिनक्षत ॥ अस्मा

कृद्रात्त्रृँस्परिंगृरविश्वतोदुम्मादंर्षीष्टविश्वतः ॥ भूर्भुवः स्वः
सुप्रजाः प्रजाभिः स्यामसुवीरोवीरैः सुपोषाः पोषैः ॥ ५३ ॥
[ ३-२२ ] परमेष्ठ्यभिधीतः । प्रजापतिर्वाचिव्याहृतायाम
न्धोऽअच्छेतः सविता सन्यांविश्वकर्म्मादीक्षायाम्पूषासोमक्र
य्यण्यामिन्द्रश्च ॥५४॥ इन्द्रश्च । मरुतश्चक्रयायोपोत्थितो
सुरः पण्ण्यमानोमित्रः क्रीतोविष्णुः शिपिविष्टऽऊरावासन्नो ॥७२॥

---

१ परमेष्ठ्यभिधीतः । अत्र परमेस्थ्यभिधीतः इत्यत्र भाविभ्यः सः षं समानपदे ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन सकारस्य षत्वे षात्तथौ-मूर्धन्यम् ( शु. य. प्रा. ३ अ. ८१ सू. ) इत्यनेन षकारात्परौ तथौ मूर्धन्यत्वमापद्येते । तकारस्य टकारो थकारस्य ठकारो भवतीति ज्ञेयम् । एवं थकारस्य ठकारे कृते ऊष्मान्तात्म्यश्च स्पर्शाः ( शु. य. प्रा. ३ अ. १०२ सू. ) इत्यनेन ठकारस्य द्वित्वम् ।

व्विष्ण्णुर्न्नरन्धिषपःप्प्रोह्यमाणःसोमः ॥ ५५ ॥ प्प्रोह्यमाणः

सोमः ॥ प्प्रोह्यमाणःसोमऽआगतोव्वरुणऽआसन्द्यामासन्नो

ग्ग्निराग्नीध्रऽइन्द्रोहविर्द्धानेथर्व्वोपावह्रियमाणोव्विश्वेदेवाः

॥ ५६ ॥ व्विश्वेदेवाः ॥ व्विश्वेदेवाऽअंशुषुन्न्युप्तोव्विष्ण्णुरा

प्प्रीतपाऽआप्प्याय्यमानोयमःसूयमानोव्विष्ण्णुःसम्भ्रियमा

णोव्वायुःपूयमानःशुक्रःपूतःशुक्रःक्षीरश्रीर्म्मन्थीसक्तुश्रीर्व्वि

१ आप्प्याय्यमानः । अत्र आप्यायमानो यमो० (शु. य. प्रा, ४ अ. १५१ सू.) इत्यनेन द्विः यकारा संयोगा भवन्ति तेन द्वियकारे कृते पुनस्तृतीये क्रमजे यकारे प्राप्ते तस्य निषेधः ।

सं. १२

श्वैदेवाः ॥ ५७ ॥ व्विश्वैदेवाः ॥ व्विश्वैदेवाश्चमसेषून्नीतोसुर्हो
॥ ७२ ॥ मायोद्यंतोरुद्द्रोहूयमानोव्वातोऽभ्यावृत्तोनृचक्षाः प्प्रतिक्ख्यातो
भक्षोभक्ष्यमाणः पितरोनाराशंसाः सन्नः सिन्धुः ॥ ५८ ॥
सन्नः सिन्धुः ॥ सन्नः सिन्धुरवभृथायोद्यतः समुद्द्रोऽभ्यवह्रि
यमाणः सलिलः प्प्रप्लुतोययोरोजसास्कभितारजांसि व्वीर्य्यै
भिर्व्वीरतमाशविष्ठा ॥ यापत्त्यैतेऽअप्प्रतीतासहोभिर्व्विष्णूऽ ॥ ७३ ॥
अगन्वरुणापूर्व्वहूतौ ॥ ५९ ॥ देवान्दिवम् ॥ देवान्दिवम्

गन्व्युज्ञस्त्ततोंमाद्रविंणमष्टुमनुष्ष्यानन्तारिंक्षमगन्व्युज्ञस्त्ततों
माद्रविंणमष्टुपितृन्त्पृंथिवीमंगन्व्युज्ञस्त्ततोंमाद्रविंणमष्टुयङ्क्ञ्च
लोकमगंन्व्युज्ञस्त्ततोंमेभुद्रमंभूत् ॥ ६० ॥ चतुस्त्रिंशत्त
न्तंवह ॥ चतुस्त्रिꣳशत्तन्तंवोयेव्वितत्त्निरेयऽइमंय्युज्ञꣳस्व
धयाददंन्ते ॥ तेषांञ्छिन्नꣳसम्प्वेतद्दंधामिस्वाहांघर्म्मोऽ
अप्प्येतुदेवान् ॥ ६१ ॥ यज्ञस्यदोहः ॥ यज्ञस्यदोहोव्वितं
तंत्पुरुत्राऽसोऽअष्टधादिवंमन्वातंतान ॥ सयज्ञधुक्क्ष्वमहिंमे

प्प्रजायाᳫंरायस्प्पोषंव्विश्श्वमायुरशीयस्वाहा ॥ ६२ ॥ आप
॥७४॥ वस्व ॥ आपवस्वहिरण्यवदश्श्ववत्सोमव्वीरवत्[1] ॥ व्वाजङ्गोमं
न्तमाभरस्वाहा ॥ ६३ ॥ [१०-२३] ॥ इतिश्रीवाजसनेय
संहितायामष्टमोऽध्यायः ॥ ८ ॥ श्रीवेदपुरुषाय नमः ॥ अनु
वाकसूत्रम् ॥ देवसवितश्चतस्त्र, इंद्रस्यवज्रः पंच, देवस्याहं
दश, पयेस्वाहातिस्रो, वाजस्येममष्टा, वग्निरेकाक्षरेणचतुष्कौ, ॥७४॥

१ हिरण्यवदश्ववत्। अत्र अश्वशब्दस्य वत्परे अश्वरश्मि० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन अश्वशब्दाकारस्य दीर्घाकारे प्राप्ते नाश्वहिरण्यात् (शु. य. प्रा. ३ अ. ९९ सू.) इत्यनेन हिरण्यशब्दात्परस्याश्वशब्दाकारो न दीर्घ इति निषेधादत्राश्वशब्दाकारो दीर्घः।

षतेचतुष्कौ, सवितात्वाद्वे, अष्टौचत्वारिꣳशत् [ अ. ९ मं. ४० अनु. ८ ] हरिः ॐ ॥ देवंसवितः ॥ देवंसवितःप्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगंन्धर्व्वꣳकेतपूꣳकेतन्नःपुनातुव्वाचस्प्पतिर्व्वाजन्नःस्वदतुस्वाहा ॥ १ ॥ ध्रुवसदन्त्वा । नृषदम्मनःसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ अप्सुषदन्त्वाघृतसदंव्योमसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टत

२३१

मम् ॥ पृथिविसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसद
मुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ २ ॥ अपाꣳरसम् ॥ अपाꣳरसमुद्वयसꣳ
सूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्म्यु
त्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रा ॥ ७५ ॥

१ पृथिविसदन्त्वा । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५९ सू.) इत्यनेन समानपदे षत्वप्राप्तौ पृथिविदिव्युपरिपर्वतिशकुनिषासिभ्यः (शु. य. प्रा. ३ अ. ८३ सू.) इत्यनेन पृथिविपरस्य सस्य षत्वनिषेधः। एवं दिविसदन्देवसदम् इत्यादिषु बोध्यम्। २ अपाꣳरसम् अत्र। दीर्घादर्द्धमात्रा पूर्वांचाध्यर्द्धा (शु. य. प्रा. ४ अ. १४९ सू.) इत्यनेन दीर्घात्स्वरात्परोऽनुस्वारोऽर्धमात्राकालो भवति तेन अपामित्यस्याऽऽकारात्परस्य मकारस्यानुस्वारस्यार्द्धमात्राप्रदर्शको ह्रस्वो गुंकारोऽत्र ज्ञेयः। एवं अपाꣳरसस्य। रजाꣳसि, प्रजायाꣳरायस्पोषम्।

यत्त्वाजुष्टुन्तमम् ॥ ३ ॥ ग्रहांऽऊर्ज्जाहुतयं ॥ ग्रहांऽऊर्ज्जाहुत
योव्यन्तोव्विप्प्रायमतिम् ॥ तेषांव्विशिप्प्रियाणांव्वोहमिषमूर्ज्जं
समंग्ग्रभमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनि
रिन्द्रायत्त्वाजुष्टुन्तमम् ॥ सम्पृचौस्त्थंसम्माभद्द्रेणंपृङ्क्तंव्विपृचौ
स्त्थोव्विमांपाप्मनांपृङ्क्तम् ॥ ४॥ [ ४-१ ] इन्द्रस्यवज्ज्रः ॥
इन्द्रस्यवज्ज्रोसिव्वाजसास्त्वयायंव्वाजंसेत् ॥ व्वाजस्यनुप्प्र
सवेमातरम्महीमदितिन्नामव्वचसाकरामहे ॥ यस्यामिदंव्विश्व
२३३

न्भुवनमाविवेशतस्यान्नोदेवःसविताधर्म्मंसाविषत् ॥ ५ ॥

अप्स्वन्तः॥ अप्स्वन्तरमृतमप्सुभेषजमपामुतप्रशस्तिष्व

श्वाभवतव्वाजिनः ॥ देवीरापोयोवऽऊर्म्मिःप्रतूर्त्तिःककुन्मा

न्वाजसास्तेनायंव्वाजंꣳसेत् ॥ ६ ॥ व्वातोवा ॥ व्वातोवामनो

वागन्धर्व्वाःसप्तविꣳशतिः ॥ तेऽअग्ग्रेश्वमयुञ्जँस्तेऽअस्मि

ञ्जवमादधुः ॥ ७ ॥ व्वातरꣳहाभव । व्वाजिन्युज्यमानऽइन्द्र

स्येवदक्षिणःश्रियैधि ॥ युञ्जन्तुत्वामरुतोव्विश्ववेदसऽआतेत्व

ष्ठांपत्सुजवन्दंधातु ॥८॥ जवोयः ॥ जवोयस्त्तेव्वाजिन्निहितो
गुहायःश्श्येनेपरींत्तोऽअचंरच्च्वाते ॥ तेनंनोव्वाजिन्बलंवान्ब
लेनव्वाजजिच्चभवसमंनेचपारयिष्णुः ॥ व्वाजिनोव्वाजजितो
व्वाजꣳसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत ॥९॥ [५-२]
देवस्याहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसवसोबृहस्पतेरुत्त
मन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्यसवसऽइन्द्रस्यो
त्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसो

शु. य. संहि. ॥७७॥ बृहस्पतेरुत्तमन्नाकंमरुहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्र पू. अ. ॥९॥
सवसऽइन्द्रस्योत्तमन्नाकंमरुहम् ॥ १० ॥ बृहस्पतेव्वाजम् ॥
बृहस्पतेव्वाजञ्जयबृहस्पतयेव्वाचंव्वदतबृहस्पतिंव्वाजञ्जाप
यत ॥ इन्द्रव्वाजञ्जयेन्द्रायव्वाचंव्वदतेन्द्रंव्वाजञ्जापयत ॥११॥
एषावं÷ ॥ एषावꣳसासत्त्यासंव्वागंभूद्ययाबृहस्पतिंव्वाजम
जीजपताजीजपतबृहस्पतिंव्वाजंव्वनस्पतयोव्विमुञ्चयद्ध्वम् ॥ ॥७७॥
एषावꣳसासत्त्यासंव्वागंभूद्ययेन्द्रंव्वाजमजीजपताजीजपतेन्द्रं

व्वाजंव्वनस्प्पतयोव्विमुञ्चध्वम् ॥ १२॥ देवस्याहम् ॥ देवस्याहꣳ
सवितुश्सवेसत्त्यप्प्रसवसोव्बृहस्प्पतेर्व्वाजजितोव्वाजञ्जेषम् ॥
व्वाजिनोव्वाजजितोद्ध्वनस्कभ्नुवन्तोयोजनामिमानाꣳकाष्ठा
ङ्गच्छत ॥ १३ ॥ एषस्यश् ॥ एषस्यव्वाजीक्षिपणिन्तुरण्य
तिग्ग्रीवायाम्बद्धोऽअपिकक्षऽआसनि ॥ क्रतुन्दधिक्राऽअ
नुसꣳसनिष्ष्यदत्त्पथामङ्काꣳस्यन्वापनीफणत्त्स्वाहा ॥ १४ ॥

---

१ एषः स्यः वाजी । अत्र स्य एव च ( शु. य. प्रा. ३ अ. १७ सू. ) इति सूत्रेण स्परे व्यञ्जने एष इत्यस्य विसर्गस्य लोपः । तथैव स्य इत्यस्य वाजी-घटिते वकारे व्यञ्जने परे विसर्जनीयस्य लोपः । तेन एषस्यवाजी । अत्र लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्येऽयं लोपनामा सन्धिर्विज्ञेयः ।

उतस्म्मं ॥ उतस्म्मास्युद्द्रवंतस्त्तुरण्ण्यतः पुर्ण्णन्नवेरनुंवातिप्प्र 
गर्द्धिनंः ॥ श्येनस्यैवद्ध्रजंतोऽअङ्कुसम्परिंदधिक्क्राव्ण्णंः
सहोर्ज्जातरींत्रतुंस्वाहां ॥ १५ ॥ शन्नंः ॥ शन्नोंभवन्तुव्वा
जिनोहवैषुदेवतांतामितद्द्रंवंस्वर्क्काः ॥ जम्भयन्तोहिंव्वृकं
रक्षांᳬसिसनैम्म्यस्म्मद्युंयवन्नमींवां ॥ १६ ॥ तेनंः ॥ तेनोऽ
अर्वन्तोहवनश्श्रुतोहवंव्विश्श्वेंशृण्वन्तुव्वाजिनोंमितद्द्रंवं ॥ सह 
स्स्रसामेधसांतासनिष्ष्यवोंमहोयेधनंᳬसमिथेषुंजब्भ्रिरे ॥ १७ ॥

व्वाजेवाजेवत । व्वाजिनोनोधनेषुव्विप्प्राऽअमृताऽऋतज्ज्ञाः ॥
अस्यमद्ध्वःपिबतमादयद्ध्वन्तृप्तायातपथिभिर्द्देवयानैः ॥ १८ ॥
आमा ॥ आमाव्वाजस्यप्प्रसवोजगम्म्यादेमेद्यावापृथिवीव्विश्श्व
रूपे ॥ आमागन्ताम्पितरामातराचामासोमोऽअमृतत्त्वेनग
म्म्यात् ॥ व्वाजिनोव्वाजजितोव्वाजꣳससृवाꣳसोबृहस्प्पतेर्
र्भागमवजिघ्घ्रतनिमृजानाः ॥ १९ ॥ [ १०-३ ] आप
सं. १४ येस्वाहा । स्वापयेस्वाहापिजायस्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहा
२३९

॥ ७९ ॥ हर्प्पतयेस्वाहाह्नेमुग्ग्धायस्वाहामुग्ग्धायवैनꣳशिनायस्वाहावि
नꣳशिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवनस्य
पतयेस्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्य्यज्ञेन । कल्प्प
ताम्प्राणोयज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताꣳश्रोत्रँय्यज्ञेन
कल्प्पताम्पृष्ठँय्यज्ञेनकल्प्पताँय्यज्ञोयज्ञेनकल्प्पताम् ॥ प्रजा
पतेःप्प्रजाऽअभूमस्वर्द्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥ ॥ ७९ ॥

१ अहर्प्पतये। अत्र समानपदे च (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन सकारे प्राप्ते, अहःपती रेफम् (शु. य. प्रा. ३ अ. ३९ सू.) इत्यनेन पतिशब्दे परे अहरित्यस्य विसर्जनीयस्य रेफः। तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम्।

अस्म्मेवं÷ ॥ अस्म्मेवौऽअस्त्विन्द्रियमस्म्मेनृम्म्णमुतक्रतुर
स्म्मेव्वर्च्चाꣳसिसन्तुवः ॥ नमोमात्रेपृथिव्यैनमोमात्रेपृथि
व्याऽइयन्तेराड्यन्तासियमनोध्रुवोसिधरुणं÷ ॥ कृष्यैत्त्वा
क्षेमायत्त्वारय्यैत्त्वापोषायत्त्वा ॥ २२ ॥ [ ३-४ ] व्वाज
स्येमम् ॥ व्वाजस्येमम्प्रसवःसुषुवेग्ग्रेसोमꣳराजानमोषधीष्व्व
प्स्सु ॥ ताऽअस्म्मभ्यम्मधुमतीर्ब्भवन्तुव्वयꣳराष्ट्रेजागृयाम
पुरोहिताꣳस्वाहा ॥ २३ ॥ व्वाजस्येमाम् ॥ व्वाजस्येमाम्प्रसवःशि

शु. य. संहि. ॥८०॥

श्रियेदिवमिमाचविश्वाभुवनानिसम्म्राट् ॥ अदित्सन्तन्दा
पयतिप्प्रजानन्त्सनोरयिꣳसर्व्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥
व्वाजस्यनु । प्प्रसवऽआबभूवेमाचविश्वाभुवनानिसर्व्वतः ॥
सनेमिराजापरियातिव्विद्वान्प्रजाम्पुष्टिंव्वर्द्धयमानोऽअस्मेस्वा
हा ॥ २५ ॥ सोमꣳराजानम् । सोमꣳराजानमवसेग्निम
न्वारभामहे ॥ आदित्त्यान्व्विष्णुꣳसूर्य्यम्ब्रह्माणञ्चबृहस्प
तिꣳस्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्पतिम् ॥ अर्य्यमण

ब्बृहस्प्पतिमिन्द्रन्दानायचोदय ॥ व्वाचंव्विष्ण्णुꣳसरस्वतीꣳ
सवितारंव्वाजिनꣳस्वाहा ॥ २७ ॥ अग्ग्नेऽअच्छ ॥ अग्ग्नेऽ
अच्छाव्वदेहनꣳप्प्रतिन्नꣳसुमनाभव ॥ प्प्रनोयच्छसहस्रजित्त्वꣳ
हिधनदाऽअसिस्वाहा ॥ २८ ॥ प्प्रनः ॥ प्प्रनोयच्छत्त्वर्य्यमा
प्पूषाप्प्रबृहस्प्पतिः ॥ प्प्रवाग्ग्देवीदंदातुनꣳस्वाहा ॥ २९ ॥ देव
स्यत्त्वा । सवितुश्प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्ण्णोहस्त्ताब्भ्याम् ॥

१ प्रनो यच्छत्वर्यमा । अत्र ऋषरेभ्यो नकारो णकारꣳ समानपदे (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन ऋकारषकाररेफेभ्य उत्तरो नकारो णकारमापद्यते समानपदे । अनेन समानपदे णत्वविधानादत्र प्र नो इति पदयोः समानपदत्वाभावान्न णत्वम् ।

सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रियैदधामिबृहस्पतेष्ट्वासाम्राज्येना
भिषिञ्चाम्म्यसौ ॥ ३० ॥ [ ८-५ ] अग्निरेकाक्षरेण । प्प्राणमुद
जयत्तमुज्जेषमश्विनौद्व्यक्षरेणद्विपदोमनुष्ष्यानुदजयतान्ता
नुज्जेषंव्विष्णुस्त्र्यक्षरेणत्रीँल्लोकानुदजयत्तानुज्जेषꣳसोमश्चतुर
क्षरेणचतुष्प्पदःपशूनुदजयत्तानुज्जेषम्पूषापञ्चाक्षरेण ॥ ३१ ॥
पूषापञ्चाक्षरेण ॥ पूषापञ्चाक्षरेणपञ्चदिशऽउदजयत्ताऽउज्जे

१ अभिषिञ्चामि । अत्र अभेश्च (शु. य. प्रा. ३ अ. ९५ सू.) इत्यनेन अभेः परस्य सिञ्चामीतिपदघटितस्य सकारस्य षत्वे रूपम् ।

षꣳसविताषडक्षरेणषडृतूनुदजयत्तानुज्जैषम्मरुतः सप्ताक्षरे
णसप्तग्ग्राम्म्यान्पशूनुदजयँस्तानुज्जैषम्बृहस्पतिरष्टाक्षरेण
गायत्रीमुदजयत्तामुज्जैषम्मित्रोनवाक्षरेण ॥ ३२ ॥ मित्रो
नवाक्षरेण । त्रिवृतꣳस्तोममुदजयत्तमुज्जैषंव्वरुणोदशाक्षरेण
व्विराजमुदजयत्तामुज्जैषमिन्द्रऽएकादशाक्षरेणत्रिष्टुभमुदज
यत्तामुज्जैषंव्विश्वेदेवाद्वादशाक्षरेणजगतीमुदजयँस्तामुज्जैषंव्व
सवस्त्रयोदशाक्षरेण ॥ ३३ ॥ व्वसवस्त्रयोदशाक्षरेण । त्रयोद

॥८२॥ शꣳस्तोममुदजयँस्तमुज्जेषꣳरुद्राश्चतुर्दशाक्षरेणचतुर्दशꣳ
स्तोममुदजयँस्तमुज्जेषमादित्त्याःपञ्चदशाक्षरेणपञ्चदशꣳस्तो
ममुदजयँस्तमुज्जेषमदितिःषोडशाक्षरेणषोडशꣳस्तोममुद
जयस्तमुज्जेषम्प्रजापतिःसप्तदशाक्षरेणसप्तदशꣳस्तोममुद
जयस्तमुज्जेषम् ॥ ३४ ॥ [४-६] एषते । निर्ऋतेभागस्त
ञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यःस्वाहायमनेत्रे ॥८२॥

१ अदितिःषोडशा । अत्र प्रत्ययसवर्णम्मुदि शाकटायनः (शु. य. प्रा. ३ अ. ९ सू.) इति विसर्गस्य परसवर्णे प्राप्ते अविकारं शाकल्यः शषसेषु (शु. य.प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णनिषेधाद्विसर्ग एव । लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्ये प्रकृतिभावाख्योऽयं सन्धिः ।

भ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यः
पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवे
भ्यऽउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुव
स्वद्भ्यःस्वाहा॥३५॥ येदेवाः॥ येदेवाऽअग्निनेत्राःपुरःसदस्ते
भ्यःस्वाहायेदेवायमनेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवा
विश्वदेवनेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवामित्रावरुणने
त्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वाहायेदेवाःसोमनेत्राऽ

शु. य. संहि.

पू. अ. ॥ १ ॥

॥८२॥ उपरिसदोदुवस्वन्तुस्तेभ्यꣳस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥
अग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्व्वर्च्चो
धायज्ञवाहसि ॥ ३७ ॥ देवस्यत्त्वा । सवितुःप्प्रसवेश्विनो
र्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ उपाꣳशोर्व्वीर्य्येणजुहोमि
हतꣳरक्षःस्वाहारक्षसान्त्वावधायावधिष्मरक्षोवधिष्मामु
मसौहतः ॥ ३८ ॥ [४-७] सवितात्त्वा । सवानाꣳसुवता ॥८३॥

१ उपरिसदः । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ७६ सू.) इत्यनेन षत्वप्राप्तौ पृथिविदिव्युपरिवर्षणिशकुनियासिभ्यः (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन उपरिशब्दात्परस्य सदः इत्यस्य सस्य प्रकृतिभावे जाते न षत्वम् ।

शु. य. संहि.

॥८२॥ उपरिसदोदुवस्वन्तुस्त्तेभ्यᳬस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥ पू. अ.

अग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्त्तरन्नरातीर्व्वर्च्चो ॥ ९ ॥

धायज्ञवाहसि ॥ ३७ ॥ देवस्यत्त्वा । सवितुः प्प्रसवेऽश्विनो

र्बाहुभ्याम्पूष्णोहस्त्ताभ्याम् ॥ उपाᳫंशोर्व्वीर्य्येणजुहोमि

हतᳫंरक्षᳬस्वाहारक्षसान्त्वावधायावधिष्मरक्षोवधिष्मामु

मसौहतः ॥ ३८ ॥ [४-७] सवितात्त्वा । सवानाᳫंसुवता ॥८३॥

१ उपरिसदः । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ७६ सू.) इत्यनेन षत्वप्राप्तौ पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन उपरिशब्दात्परस्य सदः इत्यस्य सस्य प्रकृतिभावे जाते न षत्वम् ।

मग्निर्गृहपतीनाᳪंसोमोव्वनस्पतीनाम् ॥ बृहस्पतिर्व्वाचऽ
इन्द्रोज्ज्यैष्ठ्यायरुद्रः पशुब्भ्योमित्रः सत्त्योव्वरुणोधर्म्मपतीना
म् ॥ ३९ ॥ इमन्देवाः ॥ इमन्देवाऽअसपत्नᳫंसुवद्ध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥
इमममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैव्विशऽएषवोमीराजासोमो
स्म्माकंम्ब्राह्मणानाᳪंराजा ॥ ४० ॥ [२-८] ॥ इतिश्रीवाज
सनेयसंहितायांनवमोऽध्यायः ॥ ९ ॥ श्रीवेदपुरुषायनमः ॥

शु. य. संहि. पू. अ.

॥ ८४ ॥ ॥ १० ॥

अनुवाकसूत्रम् ॥ अपोदेवाश्चतस्रः, सोमस्यत्विषिः पञ्च,
वेष्टादन्दशूकाः सप्त, सोमस्यत्वाचतस्रः, ऽइन्द्रस्यवज्रः पञ्च,
स्योनासिच्चतस्रः, सवित्राप्रसवित्रैका, श्विभ्यांपच्यस्वचतस्रो,
ष्टौचतुस्त्रिꣳशत् [अ.१०मं.३४अनु.८]हरिःॐ॥ अपोदेवाꣳ ॥
अपोदेवामधुमतीरगृभ्णन्नूर्ज्जस्वतीराजस्वश्चितानाꣳ ॥ याभि
र्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्त्यरातीꣳ ॥ १ ॥ ॥ ८४ ॥

१ अभ्यषिञ्चन् । अभि असिञ्चन् । इति द्वे पदे अत्र अभेश्च (शु. ३ अ. ६५ सू.) अभेरुपसर्गात्परस्य सिञ्चतेः सकारः षकारमापद्यते संहितायाम् । इति इत्यनेनासिञ्चन्पदघटिताकारस्य व्यवधानेन षत्वाप्राप्तौ अव्यवहितोऽपि (शु. य. प्रा. ३ अ. ६६ सू.) इत्यनेन व्यवधानेऽपि षकारे रूपम् ।

वृष्ण्णंऽऊर्म्मिः ॥ वृष्ण्णंऽऊर्म्मिरंसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहा
वृष्ण्णंऽऊर्म्मिरंसिराष्ट्रदाराष्ट्रममुष्म्मैदेहिवृषसेनोसिराष्ट्रदारा
ष्ट्रम्मेदेहिस्वाहावृषसेनोसिराष्ट्रदाराष्ट्रममुष्म्मैदेह्यर्त्थैतंस्त्थ
॥ २ ॥ अर्त्थैतंस्त्थ । राष्ट्रदाराष्ट्रम्मैदत्तस्वाहार्त्थैतंस्त्थराष्ट्र
दाराष्ट्रममुष्म्मैदत्तौजंस्वतीस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहौजंस्व
तीस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तापंः परिवाहिणींस्त्थराष्ट्रदाराष्ट्र
सं. १५ म्मैदत्तस्वाहापंः परिवाहिणींस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तापा

स्पतिँरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापास्पतिँरसिराष्ट्रदाराष्ट्रममु
ष्मैदेह्यपाङ्गर्भोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाङ्गर्भोसिराष्ट्र
दाराष्ट्रममुष्मैदेहिसूर्य्यत्त्वचसस्त्थ ॥ ३ ॥ सूर्य्यत्त्व
चसस्त्थ । राष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्यत्त्वचसस्त्थराष्ट्रदा
राष्ट्रममुष्मैदत्तसूर्य्यवर्च्चसस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्य
वर्च्चसस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तमान्दास्त्थराष्ट्रदाराष्ट्रम्मेदत्त ॥८५॥
स्वाहामान्दास्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तव्रजक्षितस्त्थराष्ट्रदा

राष्ट्रम्मेदत्तस्वाहाव्रजक्षितस्स्थराष्ट्रदाराष्ट्रममुष्मैदत्तवाशा
स्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहावाशास्स्थराष्ट्रदाराष्ट्रममुष्मैदत्त
शविष्ठास्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशविष्ठास्स्थराष्ट्रदाराष्ट्रम
मुष्मैदत्तशक्वरीस्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्वरीस्स्थराष्ट्र
दाराष्ट्रममुष्मैदत्तजनभृतस्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाजनभृ
तस्स्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतस्स्थराष्ट्रदाराष्ट्रम्मेदत्त
स्वाहाविश्वभृतस्स्थराष्ट्रदाराष्ट्रममुष्मैदत्तापःस्वराजस्स्थरा

ष्ट्रदाराष्ट्रममुष्ष्मैदत्त ॥ मधुमतीर्म्मधुमतीभिः पृच्च्यन्ताम्महि

क्षत्रङ्क्षत्रियायवन्न्वानाऽअनाधृष्टाः सीदतसहौजसोमहिक्षत्रङ्

क्षत्रियायदधतीः ॥ ४ ॥ [४-१] शतम् ॥ ४०० ॥ सोमस्यत्त्वि

षिः ॥ सोमस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ अग्नयेस्वा

हासोमायस्वाहासवित्रेस्वाहासरस्वत्त्यैस्वाहापूष्ण्णेस्वाहाबृह

स्प्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्श्लोकायस्वाहाꣳशाय

स्वाहाभगायस्वाहार्य्यम्म्णेस्वाहा ॥ ५ ॥ पवित्रेस्त्थः ॥ पवि





॥८६॥

त्रैस्त्थोव्वैष्णव्व्यौसवितुर्व्वःप्प्रसवऽउत्त्पुनाम्म्यच्छिद्द्रेणपवि
त्त्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसिव्वाचोबन्धुस्तपो
जाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्युम्न्नि
नीः ॥ सधमादोद्युम्निनीरापऽएताऽअनाधृष्टाऽअपस्योव्वसा
नाः ॥ पस्त्यासुचक्क्रेव्वरुणःसधस्त्थमपाꣳशिशुर्म्मातृतमा
स्वन्तः ॥ ७ ॥ क्षत्त्रस्योल्वम् ॥ क्षत्त्रस्योल्वमसिक्षत्त्रस्यजरा
य्वसिक्षत्त्रस्ययोनिरसिक्षत्त्रस्यनाभिरसीन्द्रस्यव्वार्त्रघ्नमसिमि

त्रस्यांसिव्वरुणस्यासित्त्वयायंव्वृत्रंव्वधेत् ॥ दृवासिरुजासिक्षु
मासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दि
ग्ग्भ्यःपात ॥ ८ ॥ आविर्म्मर्य्याः ॥ आविर्म्मर्य्याऽआ
वित्तोऽअग्निर्गृहपतिराविंत्तऽइन्द्रौवृद्धश्रवाऽआवित्तौमित्रा
वरुणौधृतव्रंतावाविंत्तम्पूषाव्विश्श्ववैदाऽआवित्तेद्यावांपृथिवीव्वि
श्श्वशंम्भुवावावित्तादितिरुरुशंर्म्मा ॥ ९ ॥ [ ५-२ ] अवेष्टा
दन्दुशूकाः ॥ अवेष्टादन्दुशूकाःप्प्राचीमारोहगायत्रीत्त्वांव

तुरथन्तरꣳसामंत्रिवृत्त्स्तोमौव्वसन्तऽऋतुर्ब्ब्रह्मद्द्रविणन्दक्षिणा
मारोह ॥१०॥ दक्षिणामारोह । त्रिष्टुप्प्त्वांवतुबृहत्त्सामंपञ्चद
शस्त्तोमोग्ग्रीष्म्मऽऋतुःक्षत्रन्द्द्रविणम्प्रतीचीमारोह ॥ ११ ॥
प्रतीचीमारोह । जगतीत्त्वावतुवैरूपꣳसामंसप्तदशस्त्तोमो
व्वर्षाऽऋतुर्व्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहा ।
नुष्टुप्प्त्वांवतुवैराजꣳसामैकविꣳशस्त्तोमंःशरदृतुःफलन्द्द्रवि
णमूर्द्ध्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोह । पङ्क्तिस्त्त्वांवतुशाक्कर

रैवतंसामंनीत्रिणवत्रयस्त्रिंहशौस्तोमौहेमन्तशिशिरावृतूवर्च्चो
द्रविणम्प्रत्त्यस्त्तन्नमुचेःशिरः ॥ १४ ॥ सोमस्यत्त्विषिः ॥
सोमस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ मृत्त्योःपाह्यो
जोसिसहोस्यमृतमसि ॥ १५ ॥ हिरण्ण्यरूपाऽउषसः ॥
हिरण्ण्यरूपाऽउषसोव्विरोकऽउभाविन्द्राऽउदिथःसूर्य्यश्च ॥
आरोहतंव्वरुणमित्त्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्त्रोसि ॥८८॥
व्वरुणोसि ॥ १६ ॥ [ ७-३ ] सोमस्यत्त्वा । द्युम्नेना

भिषिञ्चाम्म्यग्ग्नेर्ब्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्येन्द्रियेण ॥ क्षत्रा
णाङ्क्षत्रपतिरेद्ध्यतिदिद्युम्पाहि ॥ १७ ॥ इमन्देवाꣳ ॥ इम
न्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहते
जानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्ष्यपुत्रममुष्ष्यैपुत्र
मस्यैव्विशऽएषवोमीराजासोमोस्म्माकम्ब्राह्मणानाꣳराजा
॥ १८ ॥ प्रपर्वतस्य । वृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइया
नाः ॥ ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीयमा

णाᳪं ॥ व्विष्णोर्व्विक्क्रमंणमसिव्विष्णोर्व्विक्क्रान्तमसिव्विष्णोᳪं
॥८९॥ क्क्रान्तमंसि ॥ १९ ॥ प्रजांपतेन । त्त्वदेतान्न्यन्न्योव्विश्श्वांरूपा ॥१०॥
णिपरिताबभूव ॥ यत्त्कांमास्त्तेजुहुमस्त्तन्नोऽअस्त्त्वयममु
ष्ष्यंपितासावस्यपिताव्वयᳪंस्यामपतंयोरयीणाᳪंस्वाहां ॥ रुद्द्र
यत्त्तेक्क्रिविपरन्नामतस्म्मिन्हुतमंस्यमेष्टमंसिस्वाहां ॥ २० ॥
[४-४] इन्द्रंस्यव्वज्ज्रः ॥ इन्द्रंस्यव्वज्ज्रोसिमित्त्रावरुंणयोस्त्त्वा ॥८९॥
प्प्रशास्त्रोः प्प्रशिषांयुनज्ज्मि ॥ अव्यंथायैत्त्वास्वधायैत्त्वारिष्टोऽ

अर्जुनोमरुताम्प्रसवेनजयापाममनसासमिन्द्रियेण ॥ २१ ॥

माते ॥ मातऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअब्रह्मताव्वि

दसाम ॥ तिष्ठारथमधियंव्वज्रहस्तारश्मीन्देवयमसेस्व

श्वान् ॥२२॥ अग्नयेगृहपतये ॥ अग्नयेगृहपतयेस्वाहासोमाय

व्वनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ॥

पृथिविमातर्म्मामाहिᳪंसीर्म्मोऽअहन्त्वाम् ॥ २३ ॥ हᳪंसश्शु

चिषत् ॥ हᳪंसश्शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोण

१ तिष्ठारथेन । अत्र तिष्ठाद्युदात्तम् (शु. य. प्रा. ३ अ. १०४ सू.) इत्यनेन तिष्ठेत्येतत्पदे आद्युदात्ते तस्याकारस्य दीर्घो भवति । अतो दीर्घाकारः ।

सत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽ
॥९०॥ ऋतम्बृहत् ॥ २४ ॥ इयदसि ॥ इयदस्यायुरस्यायुर्म्मयिधेहि ॥ १० ॥
युङ्ङसिवर्च्चोऽसिवर्च्चोमयिधेह्यूर्ग्गस्यूर्जम्मयिधेहि ॥ इन्द्रस्यवां
वीर्य्यकृतौबाहूऽअभ्युपावहरामि ॥ २५ ॥ [५-५] स्योनासि ।
सुषदासिक्षत्रस्ययोनिरसि ॥ स्योनामासीदसुषदामासीदक्षत्र
स्ययोनिमासीद ॥२६॥ निषसाद । धृतव्व्रतोव्वरुणःपस्त्यास्वा ॥ ॥ ९० ॥
साम्म्राज्यायसुक्रतुः ॥२७॥ अभिभूरसि ॥ अभिभूरस्येता

१ निषसाद । अत्र नि ससाद इति पदम्. ससाद च (शु. य. प्रा. ३ अ. ६० सू.) इत्यनेन नेः परस्य ससादशब्दस्य सकारस्य षकारे निषसादेति रूपम् ।

स्त्तेपञ्च्चदिशं÷कल्प्पन्ताम्ब्रह्मँस्त्त्वम्ब्रह्मासिसवितासिसत्त्य
प्प्रसवोव्वरुणोसिसत्त्यौजाऽइन्द्रोसिव्विशौजारुद्रोसिसुशेवं÷ ॥
बहुंकारश्श्रेयंस्करभूयंस्करेन्द्रंस्यवज्ज्रोसितेनंमेरध्य ॥ २८ ॥
अग्निःपृथुः ॥ अग्निःपृथुर्द्धर्म्मणस्प्पतिर्ज्जुषाणोऽअग्निःपृ
थुर्द्धर्म्मणस्प्पतिराज्ज्यंस्यव्वेतुस्वाहास्वाहाकृताꣳसूर्य्यंस्यरश्म्मि
भिर्व्वंतद्धꣳसजातानाम्मध्ध्यमेष्ठ्यांय ॥ २९ ॥ [ ४-६ ] सवि
त्राप्प्रसवित्त्रा। सरस्वत्त्यावाचात्त्वष्ट्रारूपैःपूष्णापशुभिरिन्द्रे

१ श्रेयस्करभूयस्कर इत्यत्र समानपदे च (शु. य प्रा. ३ अ. ३० सू.) इत्यनेन ककारपकारपरयोः यथायोगं समानपदे सकारः षकारश्च विधीयते ।

णास्म्मेबृहस्प्पतिंनाब्ब्रह्मंणाव्वरुंणेनौजंसाग्ग्निनातेजंसासोमें
नराज्ञाव्विष्ण्णुंनादशम्म्याद्देवतंयाप्प्रसूंतःप्प्रसंप्पामि ॥ ३० ॥
[१-७] अश्श्विब्भ्यांम्पच्च्यस्व ॥ अश्श्विब्भ्यांम्पच्च्यस्वसरंस्व
त्त्यैपच्च्यस्वेन्द्रांयसुत्राम्म्णेपच्च्यस्व ॥ व्वायुश्पूतश्पवित्त्रेंणप्प्र
त्त्यङ्क्क्सोमोऽअतिस्रुतः ॥ इन्द्रंस्ययुज्ज्यःसखां ॥ ३१ ॥ कुवि
दुङ्ग । यवंमन्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूयं ॥ इहेहैषाङ्कृणु

१ प्रत्यङ्क्क्सोमः । अत्र प्रत्यङ् सोम इति पदम् । ङ्ङौ कान्भ्यां सकारे ( शु. य. प्रा. ३ अ. १५ सू. ) ङकारनकारौ यथासंख्यं ककारतकाराभ्यां सकारे परे व्यवधीयेते । तेनात्र ङकारात्परस्य ककारे रूपम् । लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्येऽयमागमाख्यः सन्धिः ।

हि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति ॥ उपयामगृहीतो
स्यश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ ३२॥ युवᳬं
सुरामम् ॥ युवᳬं सुराममश्विना नमुचावासुरे सचा ॥ विपिपा
नाशुभस्पतीऽइन्द्रङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिवपितरौ ॥
पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दᳬं सनाभिः ॥ यत्सु
रामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३४ ॥
[४-८] इतिश्रीवाजसनेयसंहितायां दशमोऽध्यायः ॥ १० ॥

श्रीवेदपुरुषायनमः। अनुवाकसूत्रम्। युञ्जानएकादश, प्रतूर्त्तं पू. अ
व्वाजिन्षोडश, देवस्यत्वादश, पोदेवीर्द्वादश, पोह्येकादश, ॥ ११ ॥
दितिष्ठापञ्च, कूतिमग्निमष्टादश, सप्तत्र्यशीतिः॥ [अ. ११
मं. ८३ अनु० ७]॥ हरिःॐ॥ युञ्जानःप्प्रथमम्॥ युञ्जानः
प्प्रथमम्मनंस्तत्त्वायंसविताधियंः॥ अग्नेर्ज्योतिर्निचाय्य
पृथिव्याऽअद्ध्याभंरत्॥१॥ युक्तेनमनंसा। व्वयन्देवस्यंसवितुः ॥ १२ ॥
सवे॥ स्वर्ग्यायशक्त्या॥२॥ युक्त्वायंसविता। देवान्त्स्वं

स्वर्यतोधियादिवम् ॥ बृहज्ज्योतिः करिष्यतः सविताप्रसुवाति
तान् ॥ ३ ॥ युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधियोविप्रा
विप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकऽइन्मही
देवस्यसवितुःपरिष्टुतिः ॥ ४ ॥ युजेवाम् ॥ युजेवाम्ब्रह्मपूर्व्यं
नमोभिर्विश्लोकऽएतुपथ्येवसूरेः ॥ शृण्वन्तुविश्वेऽअमृत
स्यपुत्राऽआयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्रयाणम् ॥
यस्यप्रयाणमन्वन्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा ॥

॥ ९३ ॥ यःपार्त्थिवानिविममेसऽएतशोरजाᳪंसिदेवःसवितामहित्व
ना ॥ ६ ॥ देवसवितः ॥ देवसवितःप्प्रसुवयज्ञम्प्रसुवयज्ञपतिं
ब्भगाय ॥ दिव्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाचस्पतिर्व्वा
चन्नःस्वदतु ॥ ७ ॥ इमन्नः ॥ इमन्नोदेवसवितर्य्यज्ञम्प्रणय
देवाव्यᳫंसखिविदᳫंसत्राजितन्धनजितᳪंस्वर्ज्जितम् ॥ ऋचा
स्तोमᳫंसमर्द्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्त्तनिस्वाहा ॥ ८ ॥ ॥ ९३ ॥

१ प्रणय। अत्र प्र नय इति पदम्। अत्र समानपदाभावेन ऋपरेभ्यः इत्यस्याप्राप्तौ प्रनेतिनुदातिहिनोमीनाम् (शु. य. प्रा. ३ अ. ८९ सू.) इत्यनेन प्रपूर्वाणां नेति नुदाति हिनोमि इत्येषां नकारस्य णकारो विधीयते तेनात्र प्रणय इत्यत्र णत्वम्। सूत्रे हिनोमीतिविकरणनिर्देशाद्यत्र विकरणाभावस्तत्र न णत्वम्।

देवस्यंत्त्वा। सवितुश्प्प्रंसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्त्ताभ्या
म्॥ आददेगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याश्सधस्त्थादग्नि
म्पुरीष्यमङ्गिरस्वदाभरत्त्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥
अभ्रिरसि ॥ अभ्रिरसिनार्य्यसित्त्वयाव्वयमग्निꣳशकेमख
नितुꣳसधस्त्थऽआ ॥ जागतेनच्छन्दसाङ्गिरस्वत् ॥ १० ॥
हस्त्तंऽआधाय। सविताबिभ्रदभ्रिꣳहिरण्ययीम् ॥ अग्ग्ने

१ त्रैष्टुभेन। अत्र ऋपरेभ्यो नकारो णकारं समानपदे (शु.य.प्रा.३ अ.८५ सू.) इत्यनेन समानपदे स्वरयवहकपैश्च (शु.य.प्रा.३ अ.८६ सू.) इत्यनेन व्यवधानेऽपि विहितस्य प्राप्तस्य णत्वस्य शिलिसिवर्गमध्यमव्यवहितोऽपि (शु.य.प्रा.३ अ.९६ सू.) इत्यनेन शकारलकारसकार (मध्यसवर्गं) चवर्गटवर्गतवर्गव्यवधानेषु ऋपरेभ्यः परस्य नकारस्य प्रकृतिभावादत्र णत्वं निषिध्यते।

शु. य. संहि. ज्ज्योतिर्न्निचाय्यंपृथिव्याऽअद्ध्याभंरदानुंष्टुभेनच्छन्दंसाङ्गिर पू. अ.
स्वत् ॥ ११ ॥ [ ११-१ ] प्रतूर्त्तँव्वाजिन् ॥ प्रतूर्त्तँव्वाजिन्नाद्द्रंवव्वरिं ॥ ११ ॥
॥९४॥ ष्ठामनुंसंव्वतंम् ॥ दिवितेजन्म्मंपरममन्तरिंक्षेतवनाभिंः पृथि
व्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाꣳरासंभम् ॥ युञ्जाथाꣳ
रासंभँय्युवमस्म्मिन्न्यामेंवृषण्ण्वसू ॥ अग्निम्भरंन्तमस्म्मयुम्
॥ १३ ॥ योगेंयोगेतवस्त्तंरम् ॥ योगेंयोगेतवस्त्तंरंव्वाजेंवाजे ॥ ९५ ॥
हवामहे ॥ सखांयऽइन्द्रंमूतयें ॥ १४ ॥ प्रतूर्व्वन्नेहिं ॥ प्रतूर्व्वं

न्नेह्यो वृङ्क्रामुन्नशंस्त्तीरुद्रस्युगाणंपत्त्यम्मयोभूरेहिं ॥ उुर्वृन्तरिक्षं
वीहि स्वुस्तिगंव्यूतिरभंयानिकृृण्वन्न्पूष्णासयुजांसह ॥१५॥
पृृथिव्याःसुधस्त्थांत् ॥ पृृथिव्याःसुधस्त्थांदुग्निम्पुरीष्ष्यमङ्गि
रस्वदाभंराग्निम्पुरीष्ष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्ष्यमङ्गिर
स्वद्भरिष्ष्यामः ॥ १६ ॥ अन्वुग्निः ॥ अन्वुग्निरुषसामग्ग्रं
मक्ख्युदन्वहानिप्प्रथमोजातवेदाः ॥ अनुसूर्य्यस्यपुरुत्राच
रश्मीननुद्यावांपृृथिवीऽआतंतन्थ ॥१७॥ आगत्त्यंवाजी ॥

आगत्त्यंव्वाज्ज्यद्ध्वानꣳसर्व्वाम्मृधोव्विधूनुते ॥ अग्निꣳसधस्त्थे
॥९५॥ महतिचक्षुषानिचिकीषते ॥ १८ ॥ आक्रम्म्यंव्वाजिन् ॥ आक्र ॥ ११ ॥
म्म्यंव्वाजिन्न्पृथिवीमग्निमिच्छरुचात्त्वम् ॥ भूम्म्यांव्वृत्त्वाय
नोब्रूहियतꣳखनेमतंव्वयम् ॥ १९ ॥ द्यौस्त्ते । पृष्ठम्पृथिवी
सधस्त्थमात्त्मान्तरिक्षꣳसमुद्रोयोनिः ॥ व्विख्यायचक्षु
षात्त्वमभितिष्ठपृतन्न्यतः ॥ २० ॥ उत्त्क्राम । महतेसौभंगाया ॥९५॥
स्म्मादास्त्थानाद्द्रविणोदाव्वाजिन् ॥ व्वयꣳस्यामसुमतौपृथि

व्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः ॥ २१ ॥ उदक्रमीत् ॥ उदक्र
मीद्द्रविणोदावाज्यर्व्वाकः सुलोकꣳ सुकृतम्पृथिव्याम् ॥ ततः
खनेमसुप्रतीकमग्निꣳस्वोरुहाणाऽअधिनाकमुत्तमम् ॥ २२ ॥
आत्वा । जिघर्म्मिमनसाघृतेनप्रतिक्षियन्तम्भुवनानिविश्वा ॥
पृथुन्तिरश्चावयसाबृहन्तंव्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥
आविश्वतः । प्रत्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत ॥ मर्य्य
श्रीस्स्पृहयद्वर्णोऽअग्निर्नाभिमृशेतन्वाजर्भुराणः ॥ २४ ॥
२७३

परिवाजंपतिः ॥ परिवाजंपतिष्कविरग्ग्निर्हव्व्यान्न्यक्रमीत् ॥
दधद्द्रत्न्नानिदाशुषे ॥ २५ ॥ परित्त्वा । ग्ग्नेपुरंव्वयंव्विप्प्रꣳसह
स्यधीमहि ॥ धृषद्वर्ण्णन्दिवेदिवेहन्न्तारम्भङ्गुरावताम् ॥ २६ ॥
त्वमग्ग्ने ॥ त्वमग्ग्नेद्द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वम
श्मनस्प्परि ॥ त्वंव्वनेब्भ्यस्त्वमोषधीब्भ्यस्त्वन्नृणान्नृपतेजा



---

१ परिवाजपतिः कविः । अत्र कविष्करत्कृधिषु ( शु. य. प्रा. ३ अ. ३२ सू. ) इत्यनेन कविपरे पतिशब्दस्य विसर्गस्य षकारे प्राप्ते वाजपति- वांसऽपदिविपुरन्तःपर्शव्येनान्तःपार्श्व्यमिति च ( शु. य. प्रा. ३ अ. ३८ सू. ) इत्यनेन सकारषकारयोर्निषेधाद्विसर्जनीय एव । २ भङ्गुरावताम् । अत्र अश्वरश्मिमतिसुमति ( शु. य. प्रा. ३ अ. ९८ सू. ) इत्यनेन वकारे परे भङ्गुरशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । ३ नृणाम् । अत्र ऋपरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन समानपदे ऋकारपरस्य नकारस्य णत्वम् ।

यसेशुचिः ॥ २७ ॥ [ १६-२ ] देवस्यंत्त्वा । सवितुः प्प्रंस
वेश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्त्तांब्भ्याम् ॥ पृथिव्याःसधस्त्थां
दग्ग्निम्पुंरीष्ष्यमङ्गिरस्वत्त्खंनामि ॥ ज्योतिष्म्मन्तन्त्वाग्ग्ने
सुप्प्रतीकमजंस्स्रेणभानुनादीद्यंतम् ॥ शिवम्प्प्रजाब्भ्योहिंᳪ
सन्तम्पृथिव्याःसधस्त्थांदग्ग्निम्पुंरीष्ष्यमङ्गिरस्वत्त्खंनामᳪ
॥ २८ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमंसियोनिरग्ग्नेःसंमुद्रम
सं. १७ भितंᳪपिन्न्वंमानम् ॥ वर्द्धंमानोमहाँ२॥ऽआचपुष्कंरेदिवो

माञ्ञंयाव्वरिम्म्णाप्प्रथस्व ॥ २९ ॥ शर्म्मंच ॥ शर्म्मंचुस्त्थो

॥१७॥ व्वर्म्मंचुस्त्थोच्छिद्द्रेबहुलेऽउभे ॥ व्यचंस्वतीसंव्वसाथाम्भृतम ॥ ११ ॥

ग्गिम्पुरीष्ष्यम् ॥ ३० ॥ संव्वसाथाम् ॥ संव्वसाथाꣳस्वर्व्विदा

समीचीऽउरसात्क्मना ॥ अग्ग्निमन्तर्ब्भरिष्ष्यन्तीज्ज्योति

ष्म्मन्तमजस्स्रमित् ॥ ३१ ॥ पुरीष्ष्योसि । व्विश्श्वभराऽअथ

र्व्वात्त्वाप्प्रथमोनिरमन्थदग्ग्ने ॥ त्वामग्ग्नेपुष्क्करादद्ध्यर्थर्व्वानिर ॥१७॥

मन्थत ॥ मूर्द्ध्नोव्विश्श्वस्यव्वाघतः ॥ ३२ ॥ तमुंत्त्वा । दुद्ध्य

ड़्ऋषिः पुत्रऽईधेऽअथर्वणः ॥ वृत्रहणम्पुरन्दरम् ॥ ३३ ॥
तमुत्त्वा । पाथ्योवृषासमीधेदस्युहन्तमम् ॥ धनञ्जयꣳरणे
रणे ॥ ३४ ॥ सीदहोतः ॥ सीदहोतः स्वऽउलोकेचिकित्त्वा
न्त्सादयायज्ञꣳसुकृतस्ययोनौ ॥ देवावीर्देवान्हविषायजास्य
ग्नेबृहद्यजमानेवयोधाः ॥ ३५ ॥ निहोता । होतृषदनेवि
दानस्त्वेषोदीदिवाँ२॥ऽअसदत्सुदक्षः ॥ अदब्धव्रतप्रम
तिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निः ॥ ३६ ॥ सꣳसी

१ सादय यज्ञम्। इति पदम्। अत्र अथोदारियशोचपत्य सादयज्ञं० (य. शु. प्रा. ३ अ. ११३ सू.) इत्यनेन यकारे परे दीर्घविधानात्। सादयायज्ञम्।

शु. य.
संहि.
॥ ९८ ॥

दस्व । महाँ २॥ऽअसिशोचस्वदेववीतमः ॥ व्विधूममग्ग्नेऽअरुष
म्मियेद्ध्यसृजप्प्रशस्तदर्शतम् ॥ ३७ ॥ [१०-३] अपोदेवीः ॥
अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्प्रजाब्भ्यः ॥ तासामा
स्त्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ ३८ ॥ सन्ते । व्वायु
र्म्मातरिश्श्वादधातूत्तानायाहृदयँय्यद्विकस्तम् ॥ योदेवानाञ्चर
सिप्प्राणथैनकस्म्मैदेवव्वषडस्तुतुब्भ्यम् ॥ ३९ ॥ सुजातोज्ज्यो
तिषा । सहशर्म्मव्वरूथमासदत्स्वः ॥ व्वासोऽअग्नेव्विश्श्व

पू. अ.
॥ ११ ॥
॥ ९८ ॥

रूपं संव्ययस्वविभावसो ॥४०॥ उदुंतिष्ठ । स्वध्वरावानोदेव्या
धिया ॥ दृशेचभासाबृहतासुशुक्वनिराग्नेयाहिसुशस्तिभिः
॥ ४१ ॥ ऊर्ध्वऽऊषुणः ॥ ऊर्ध्वऽऊषुणऽऊतयेतिष्ठादेवो
नसविता ॥ ऊर्ध्वोवाजंस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे
॥ ४२ ॥ सजातः ॥ सजातोगर्भोऽअसिरोदस्योरग्नेचारुर्वि
भृतऽओषधीषु ॥ चित्रःशिशुःपरितमांस्यक्तून्प्रमातृभ्योऽ

१ अवानोधिया । अत्र अवोपसर्गस्य ह्रस्वाकारस्य नोपरे धारयोजाव० ( य. शु. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारः । २ ऊर्ध्वऽऊषुणः ऊर्ध्व ऊ सुनः इत्यत्र ऊश्चापृक्तात् ( शु. य. प्रा. ३ अ. ६२ सू. ) इत्यनेन अपृक्तसंज्ञादूकारात्परः सकारः षत्वमापद्यते तेन सस्य षकारः । ३ तिष्ठादेवः । अत्र तिष्ठाद्युदात्तम् ( शु. य प्रा. ३ अ. १०४ सू. ) इत्यनेन यदि तिष्ठेत्येतत्पदं आद्युदात्तं भवेत्तदा दीर्घत्वं प्राप्नोति । अत्र तिष्ठेत्येतस्याद्युदात्तत्वाद्दीर्घः ।

अधिकनिक्क्रदद्द्गाः ॥ ४३ ॥ स्थिरोभव । व्वीड्ड्वङ्गऽआशुर्ब्भव
व्वाज्ज्यर्व्वन् ॥ पृथुर्ब्भवसुषदस्त्वमग्ग्नेः पुरीषवाहणः[1] ॥ ४४ ॥
शिवोभव । प्प्रजाब्भ्योमानुषीब्भ्यस्त्वमङ्गिरः ॥ माद्यावा
पृथिवीऽअभिशोचीर्म्मान्तरिक्षम्माव्वनस्प्पतीन् ॥ ४५ ॥ प्रैतु ।
व्वाजीकनिक्क्रदन्नानदद्द्रासभः पत्त्वा ॥ भरन्नग्ग्निम्पुरीष्ष्यम्मा
पाद्यायुषः पुरा ॥ व्वृषाग्ग्निंव्वृषणम्भरन्नपाङ्गर्ब्भः समुद्द्रियम् ॥ ॥ ११ ॥

१ पुरीषवाहणः । अत्र ऋषरेभ्यो नकारो णकारं समानपदे (शु. य. प्रा. ३ अ. ८५ सू.) इत्यप्राप्तौ स्वरयवहकपैश्च (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन ऋषरेभ्यो स्वरयवहकवर्गपवर्गव्यवधानेऽपि णत्वविधानादत्र वाहनशब्दस्य नस्य णत्वम् ।

अग्नुऽआयांहिवीतये ॥ ४६ ॥ ऋतꣳसुत्त्यम् ॥ ऋतꣳसु
त्त्यमृतꣳसुत्त्यमुग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥ ओषधयः
प्प्रतिमोदध्वमुग्निमेतꣳशिवमायन्तमुभ्यत्रयुष्माः ॥ व्यस्य
न्विश्वाऽअनिराऽअमीवानिषीदन्नोऽअपदुर्म्मतिञ्जहि ॥४७॥
ओषधयःप्प्रति । गृभ्णीतपुष्पवतीःसुपिप्पलाः ॥ अयंवो
गर्भऽऋत्त्वियः प्प्रत्नꣳसधस्त्थमासदत् ॥४८॥ विपाजसा ।
पृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणो

बृहतश्शर्म्मणिस्यामग्ग्नेरहꣳसुहवस्यप्प्रणीतौ ॥४९॥ [१२-४]
आपोहि। ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच
क्षसे ॥ ५० ॥ योवः। शिवतमोरसस्तस्यभाजयतेहनः ॥
उशतीरिवमातरः ॥ ५१ ॥ तस्म्माऽअरम् ॥ तस्म्माऽअरङ्ग
मामवोयस्यक्षयायजिन्न्वथ ॥ आपोजनयथाचनः ॥ ५२ ॥
मित्रश्सहसृज्ज्य। पृथिवीम्भूमिञ्चज्ज्योतिषासह ॥ सुजातञ्जात ॥ १०० ॥

१ हिष्ठामयः। अत्र हि स्थामयो भुवः। अत्र हेर्मिषोदयः (शु. य. प्रा. ३ अ. ५८ सू.) इत्यनेन हिशब्दात्परः मकारोदयो थकारोदयो वा सकारस्य षकारो विधीयते। तथा सति ततः ष्टुत्वे थकारस्य ठकारे ऊष्मान्तस्याम्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ठकारस्य द्वित्वम्।

वैदसमयक्ष्मायंत्त्वासꣳसृंजामिप्प्रजाब्भ्यं÷ ॥ ५३ ॥ रुद्राःसꣳ
सृज्ज्यं । पृथिवीम्बृहज्ज्योतिꣳसमीधिरे । तेषाम्भानुरजस्रऽइ
च्छुक्कोदेवेषुरोचते ॥५४॥ सꣳसृष्टांव्वसुभिꣳ ॥ सꣳसृष्टांव्वसुभी
रुद्रैर्द्धीरैꣳकर्म्मण्ण्याम्मृदम् ॥ हस्त्ताब्भ्याम्मृद्धीङ्कृत्त्वासिनी
वालीङ्कृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकपर्द्दा । सुकुरीरा
स्वौपशा ॥ सातुब्भ्यंमदितेमह्योखान्दधातुहस्त्तयोꣳ ॥ ५६ ॥
उखाङ्कृणोतु ॥ उखाङ्कृणोतुशक्त्याबाहुब्भ्यामदितिर्द्धिया ॥

शु. य. संहि.

मातापुत्रँय्यथोपस्त्थेसाग्निम्बिभर्त्तुगर्ब्भऽआ ॥ मुखस्यशि पू. अ.

॥१०१॥ रोसि॥५७॥ व्वसंवस्त्त्वा। कृण्ण्वन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्ध्रु ॥ ११ ॥

वासिपृथिव्व्यसिधारयामयिप्प्रजाᳬंरायस्प्पोषङ्गौपत्त्यᳬंसुवी

र्य्यᳬंसजातान्न्यजमानायरुद्द्रास्त्त्वाकृण्ण्वन्तुत्रैष्टुभेनच्छन्दसा

ङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्प्रजाᳬंरायस्प्पोषङ्गौ

पत्त्यᳬंसुवीर्य्यᳬंसजातान्न्यजमानायादित्त्यास्त्त्वाकृण्ण्वन्तु ॥१०१॥

जागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्प्रजाᳬं

रायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्यजमानायव्विश्श्वेत्त्वा
देवाव्वैश्श्वानराः कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदि
शोसिधारयामयिप्प्रजाꣳरायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳस
जातान्यजमानाय ॥ ५८ ॥ अदित्त्यैरास्न्ना ॥ अदित्त्यैरा
स्न्नास्यदितिष्टेबिलङ्गृब्भ्णातु ॥ कृत्त्वायसामहीमुखाम्मृन्मयीं
य्योनिमग्नये ॥ पुत्रेब्भ्यꣳप्प्रायच्छददितिꣳश्श्रपयानिति ॥ ५९ ॥
व्वसवस्त्त्वा । धूपयन्तुगायत्त्रेणच्छन्दसाङ्गिरस्वद्रुद्द्रास्त्त्वाधूप

यन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाधूपयन्तुजागतेन
च्छन्दसाङ्गिरस्वद्विश्वेत्त्वादेवाव्वैश्वानराधूपयन्त्वानुष्टुभेनच्छ
न्दसाङ्गिरस्वदिन्द्रस्त्त्वाधूपयतुव्वरुणस्त्वाधूपयतुव्विष्णुस्त्त्वा
धूपयतु ॥ ६० ॥ [ ११-५ ] [1]अदितिष्ट्वा । देवीव्विश्वदेव्यावतीपृ
थिव्याꣳसधस्त्थेऽअङ्गिरस्वत्त्खनत्त्ववटदेवानान्त्वापत्नीर्देवी
र्व्विश्वदेव्यावतीः पृथिव्याꣳसधस्त्थेऽअङ्गिरस्वद्दधतूखेधिषणा ॥१०२॥

१ अदितिष्ट्वादेवी । इति पदम् अत्र संधिरंशुरदितिः ( शु. य. प्रा. ३ अ. ७६ सू. ) इत्यनेन सन्धिः अंशुः अदितिः एतेषां विसर्जनीयसकारस्य षत्वं समानपदे विधीयते । तेनात्र अदितेर्विसर्जनीयस्य षत्वे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शाः ( शु. य. प्रा. ४ अ. १०२ सू. ) इति टकारस्य द्वित्वम् ।

स्त्त्वादेवीर्व्विश्श्वदेव्यावतीः पृथिव्याः सधस्त्थेऽअङ्गिरस्वदभी
न्धतामुखेव्वरूत्रीष्ट्वादेवीर्व्विश्श्वदेव्यावतीः पृथिव्याः सधस्त्थेऽ
अङ्गिरस्वच्छ्रपयन्तूखेग्नास्त्वादेवीर्व्विश्श्वदेव्यावतीः पृथिव्याः
सधस्त्थेऽअङ्गिरस्वत्पचन्तूखेजनयस्त्वाच्छिन्नपत्त्रादेवीर्व्वि
श्श्वदेव्यावतीः पृथिव्याः सधस्त्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥
मित्रस्यचर्षणीधृतः ॥ मित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥

१ वरूत्रीः त्वा इति पदम् । अत्र मातृभिरर्चिभिःपायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन एकाक्षरे त्वापरे वरूत्रीः इत्यस्य विसर्जनीयस्य षत्वं षात्वथोर्मूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इति मूर्धन्यत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शाः (शु. य. प्रा. ४ अ. १०२ सू.) इति द्वित्वे वरूत्रीष्ट्वा ।

सं. १८

शु. य.
संहि.

॥१०२॥ द्युम्नञ्चित्रश्श्रंवस्तमम् ॥ ६२ ॥ देवस्त्त्वा । सवितोद्द्वपतुसुपा पू. अ.
णिश्स्वङ्गुरिश्सुबाहुरुतशक्त्त्या ॥ अव्व्यथमानापृथिव्व्यामाशा ॥ ११ ॥
दिशऽआपृण ॥ ६३ ॥ उत्थायबृहती । भवोदुतिष्ठध्रुवात्त्वम् ॥
मित्रैतान्तऽउखाम्परिदद्दाम्म्यभित्त्याऽएषामाभेदि ॥ ६४ ॥
वसवस्त्त्वा ॥ वसवस्त्त्वाच्छृन्दन्तुगायत्त्रेणच्छन्दसाङ्गिरस्वद्रु
द्द्रास्त्त्वाच्छृन्दन्तुत्त्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्त्यास्त्त्वाच्छृ ॥ १०२ ॥
न्दन्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्श्वेत्त्वादेवावैश्श्वानराऽआच्छृ

न्दुन्त्वानुष्टुभेनच्छन्दंसाङ्गिरस्वत् ॥ ६५ ॥ [ ५-६ ] आकूति
मग्निम् ॥ आकूतिमग्निम्प्रयुजꣳस्वाहामनोमेधामग्निम्प्रयु
जꣳस्वाहाचित्तंव्विज्ञातमग्निम्प्रयुजꣳस्वाहाव्वाचोव्विधृतिम
ग्निम्प्रयुजꣳस्वाहाप्रजापतयेमनवेस्वाहाग्नयेव्वैश्वानरायस्वा
हा ॥ ६६ ॥ व्विश्वोदेवस्य । नेतुर्म्मर्त्तोव्वुरीतसक्ख्यम् ॥ व्वि
श्वोरायऽइषुध्यतिद्युम्नंव्वृणीतपुष्यसेस्वाहा ॥ ६७ ॥ मासु ।
भित्त्थामासुरिषोम्बधृष्णुव्वीरयस्वसु ॥ अग्निश्श्चेदङ्करिष्य

थꣳ ॥ ६८ ॥ दृꣳहस्वदेवि । पृथिविस्वुस्त्तयऽआसुरीमाया
स्वधयांकृतासि ॥ जुष्टुंन्देवेब्भ्यंऽइदमंस्त्तुहुव्यमरिष्टात्त्वमुदिं
हियुज्ञेऽअस्म्मिन् ॥ ६९ ॥ द्र्वन्नꣳसर्प्पिरांसुतिꣳ । प्प्रत्क्कोहो
ताव्वरेंण्ण्यꣳ ॥ सहंसस्प्पुत्त्रोऽअद्भुंतꣳ ॥ ७० ॥ शतम् ॥ ५०० ॥
परंस्याऽअधिं । संव्वतोवंराँ२॥ऽअब्भ्यातंर ॥ यत्राहमस्म्मि
ताँ२॥ऽअंव ॥ ७१ ॥ परमस्याꣳ परावतंः ॥ परमस्याꣳ ॥ १०४ ॥
परावतोरोहिदंश्वऽइहागंहि ॥ पुरीष्यंः पुरुप्प्रियोग्ग्नेत्त्वन्त

१ सहसः पुत्रः इत्यत्र रायः सहसः पोषपुत्रयोः (शु.य.प्रा. ३ अ. २५ सू.) इत्यनेन रायसहसशब्दयोः सकारस्य पोषपुत्रपरयोः परयोः क्रमेण सत्वम्। सहसस्पुत्रः।

रामृधं÷ ॥ ७२ ॥ यदंग्ने ॥ यदंग्नेकानिकानिंचिदातेदारू
णिदुद्धुसिं ॥ सर्व्वन्तदंस्त्तुतेघृतन्तज्जुंषस्वयविष्ठ्य ॥ ७३ ॥
यदत्तिं ॥ यदत्त्युंपजिह्विकायद्धुम्म्रोऽअंतिसर्प्पंति ॥ सर्व्वन्त
दंस्त्तुतेघृतन्तज्जुंषस्वयविष्ठ्य ॥ ७४ ॥ अहंरहरप्प्रंयावम् ॥
अहंरहरप्प्रंयावम्भरन्तोश्श्वांयेवतिष्ठंतेघासमंस्म्मै ॥ रायस्प्पोषे
णसमिषामदन्तोग्ग्नेमातेप्प्रतिंवेशारिषाम ॥ ७५ ॥ नाभाप्पृ
थिव्व्याः । संमिधानेऽअग्नौरायस्प्पोषायबृहतेहंवामहे ॥ इर

म्मदम्बृहदुक्थँय्यजत्रञ्जेतारमग्निम्पृतनासुसासहिम् ॥७६॥

॥१०५॥ याꣳसेनाः ॥ याꣳसेनाऽअभीत्त्वरीराव्याधिनीरुगणाऽउत ॥

येस्त्तेनायेचतस्क्कँरास्त्ताँस्त्तेऽअग्नेपिदधाम्म्यास्ये ॥ ७७ ॥

दꣳष्ट्राभ्याम्मलिम्म्लून् ॥ दꣳष्ट्राभ्याम्मलिम्म्लुञ्जम्भ्यै

स्त्तेस्क्कँराँ२॥ऽउत ॥ हनुभ्याꣳस्त्तेनान्भगवस्त्ताँस्त्त्वङ्खादु

सुखादितान् ॥ ७८ ॥ येजनेषु । मलिम्म्लवस्त्तेनासस्त्तस्क्के ॥ १०५

१ तस्कराँऽउत । तत् करांऽउत इति पदे । अत्र तद्बृहतौ करपत्योस्तलोपश्च ( शु. य. प्रा. ३ अ. ५२ सू. ) इत्यनेन तच्छब्दस्य करशब्दपरे सकारे पूर्वस्य तद्घटिततकारस्य लोपे च कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन ककारस्य द्वित्वम् ।

राव्वनें ॥ येकक्षैष्ष्वघायवुस्त्ताँस्तेदधामिजम्भंयोः ॥ ७९ ॥
योऽअुस्म्मब्भ्यंम् ॥ योऽअुस्म्मब्भ्यंमरातीयाद्यश्चंनोद्वेषंते
जनं ÷ ॥ निन्दाद्योऽअुस्म्मान्धिप्प्सांच्चुसर्व्वन्तम्मंस्म्मसाकुरु
॥ ८० ॥ सꣳशितम्मे ॥ सꣳशितम्मेब्रह्मसꣳशितंव्वीर्य्युम्व
लम् ॥ सꣳशितक्षुत्रञ्जिष्णुयस्याहमास्म्मिपुरोहितः ॥ ८१ ॥
उदेषाम् ॥ उदेषाम्बाहूऽअंतिरमुद्वर्चोऽअथोवलम् ॥ क्षिणोमि
ब्रह्मणामित्रानुन्नंयामिस्वाँ२॥ऽअहम् ॥ ८२॥ अन्नपतेन्नंस्य ।

शु. य. संहि. नोदेह्यनमीवस्यंशुष्मिणंः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जंन्नोधे पू. अ. ॥ १२ ॥
॥१०६॥ हि़द्विपदेचतुष्पदे ॥ ८३॥ [१८-७]॥ इतिश्रीवाजसनेय
संहितायाम् एकादशोऽध्याय:॥ ११॥ श्रीवेदपुरुषाय नम:॥
अनुवाकसूत्रम् ॥ दृशान:सप्तदश, दिवस्परिद्वादश, समिधा
ग्निंपंचदशा, पेतसप्तदशा, सुन्वन्तमयजमानंत्रयोदश, याऽ
ओषधी: सप्तविꣳशति, र्मामापोडश, सप्तसप्तदशꣳशतम् ॥ ॥ १०६ ॥
[अ. १२ मं. ११७ अनु. ७] हरि: ॐ॥ दृशानोरुक्मः ॥

ईशानोरुक्मऽउर्व्याव्व्यद्यौद्दुर्म्मर्षमायुः श्रियेरुचानः ॥ अग्नि
रमृतोऽअभवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ १ ॥ नक्तो
षासासमनसा ॥ नक्तोषासासमनसाव्विरूपेधापयेतेशिशु
मेकꣳसमीची ॥ द्यावाक्षामारुक्मोऽअन्तर्व्विभातिदेवाऽअग्नि
न्धारयन्द्रविणोदाः ॥ २ ॥ व्विश्वारूपाणि ॥ व्विश्वारूपाणि
प्प्रतिमुञ्चतेकविः प्प्रासावीद्भद्रन्द्विपदेचतुष्प्पदे ॥ व्विनाकम

१ इशानः । अत्र ऋषरेभ्यः (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन समानपदे स्वरयवहकपैश्च (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेन एतैरेव व्यवधानेऽपि णत्वविधानात्र णत्वप्राप्तिः । तथापि खिलिसिवर्गमध्यमव्यवहितोऽपि (शु. य. प्रा. ३ अ. ९५ सू.) इत्यनेन णत्वनिषेधः शिष्यबुद्धिव्युत्पादनार्थो ज्ञेयः ।

क्रव्यत्त्सविताव्वरेण्ण्योनुप्प्रयाणमुषसोव्विराजति ॥ ३ ॥ सुपर्ण्णो
सि । गुरुत्त्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ ॥ स्तोमऽ
आत्त्माच्छन्दाᳬंस्यङ्गानियजूᳬंषिनाम ॥ सामतेतनूर्व्वामदे
व्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्ण्याः शफाः ॥ सुपर्ण्णोसिगरु
त्त्मान्दिवङ्गच्छस्वः पत ॥ ४ ॥ व्विष्ण्णोः क्रमः ॥ व्विष्ण्णोः
क्रमोसिसपत्त्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्व
व्विष्ण्णोः क्रमोस्यभिमातिहात्रैष्टुभञ्छन्दऽआरोहान्तरिक्षम

नुविक्क्रँमस्वविष्ण्णोᳵक्क्रमौस्यरातीयतोहन्ताजागंतञ्छन्दऽआ
रौहदिवमनुविक्क्रँमस्वविष्ण्णोᳵक्क्रमौसिशत्रूयतोहन्तानुष्टुभ
ञ्छन्दऽआरोहदिशोनुविक्क्रँमस्व ॥ ५ ॥ अक्क्रन्ददग्निः ॥ अक्क्र
न्ददग्निस्तनयन्निवद्यौᳵक्षामारेरिहद्वीरुधᳫ समञ्जन् ॥ सद्यो
जंज्ञानोविहीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥ ६ ॥
अग्नेभ्यावर्त्तिन् ॥ अग्नेभ्यावर्त्तिन्नभिमानिवर्त्तस्वायुषावर्च्चं
साप्प्रजयाधनेन ॥ सन्न्यामेधयारय्यापोषेण ॥ ७ ॥ अग्नेऽ

अङ्गिरः । शतन्तेसन्त्वावृतः सहस्रन्तऽउपावृतः ॥ अधा
पोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधि ॥ ८ ॥ पुन
रूर्जा । निवर्त्तस्वपुनरग्नऽइषायुषा ॥ पुनर्नःपाह्यꣳहसः ॥९॥
सहरय्या । निवर्त्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्वत
स्परि ॥ १० ॥ आत्वा । हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ॥
विशस्त्वासर्वावाञ्छन्तुमात्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥
उदुत्तमम् ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳ

॥१०८॥

श्रँथाय ॥ अथा॑व्वयमा॑दित्त्यव्व्रतेतवाना॑गसो॒ऽअदि॑तयेस्याम
॥ १२ ॥ अग्ग्रेर्बृहन् ॥ अग्ग्रेर्बृहन्नुषसा॑मू॒र्द्ध्वोऽअ॑स्त्थान्निर्ज्ज
गन्न्वान्तम॑सोज्ज्योति॑षागा॑त् ॥ अग्निर्भानुना॒रुश॑तास्वङ्गऽ
आजा॒तोव्विश्श्वासद्मान्यप्प्राः ॥ १३ ॥ हुꣳसश्शुचिषत् ॥ हुꣳ
सश्शुचिषद्वसुरन्तरिक्षुसद्धोता॑वेदिषदति॑थिर्दुरोणसत् ॥ नृष
द्वरसद्दृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत्

१ श्रथय इति पदम् । श्रथोदारियशोचपनयसादयर्जुंवृषशत्रुसलक्ष्मापारात्पूतमचस यकारे ( शु. य. प्रा. ३ अ. ११२ सू. ) इत्यनेन एतेषां यकारे परे दीर्घः । तेन श्रथाय इति पदम् ।

खं. १९

शु. य. संहि. ॥१०९॥

॥ १४ ॥ सीदुत्त्वम् ॥ सीदुत्त्वम्मातुरस्याऽउपस्त्थेव्विश्श्वान्य
ग्ग्नेव्वयुनानिव्विद्वान् ॥ मैनान्तपसामार्च्चिषाभिशोचीरन्तरं
स्याᳩशुक्रज्ज्योतिर्व्विभाहि ॥ १५॥ अन्तरग्ग्ने । रुचात्त्वमु
खायाᳫसदनेस्वे ॥ तस्यास्त्वᳫहरसातपञ्जातवेदᳫशिवोभव
॥ १६ ॥ शिवोभूत्त्वा । मह्यमग्ग्नेऽअथोसीदशिवस्त्त्वम् ॥
शिवाᳪकृत्त्वादिशᳫसर्व्वाᳫस्वँय्योनिमिहासदᳫ॥१७॥[१७-१]
दिवस्प्परि । प्प्रथमञ्जज्ञेऽअग्ग्निरस्म्मद्द्वितीयम्परिजातवेदाᳫ॥

॥ १२ ॥ ॥ १०९ ॥

तृतीयमप्सुनृमणाऽअजस्रमिन्धानऽएनञ्जरतेस्वाधीः ॥ १८ ॥
विद्माते ॥ विद्मातेऽअग्नेत्रेधात्रयाणिविद्मातेधामविभृ
तापुरुत्रा ॥ विद्मातेनामपरमङ्गुहायद्विद्मातमुत्सँय्यतऽ
आजगन्थ ॥ १९ ॥ समुद्रेत्त्वा । नृमणाऽअप्स्वन्तर्नृचक्षाऽ
ईधेदिवोऽअग्नऽऊधन् ॥ तृतीयेत्त्वारजसितस्थिवाꣳसमपा
मुपस्त्थेमहिषाऽअवर्द्धन् ॥ २० ॥ अक्रन्ददग्निः ॥ अक्रन्द

१ नृमणा । अत्र ऋपरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन णत्वप्राप्तौ स्वरयवहकपैश्च ( शु. य. प्रा. ३ अ. ८६ सू. ) एतैर्व्यवधानेऽपि ऋपरेभ्यो णत्वविधानात्पवर्गस्य व्यवधानेऽपि णत्वे नृमणा इति रूपम् ।

शु. य. संहि. ॥११०॥

दुग्निस्त्तनयंन्निवद्यौश्क्षामारेरिंहद्वीरुधंःसमञ्जन् ॥ सद्योजं पू. अ.

ज्ज्ञानोव्विहीमिद्धोऽअक्ख्यदारोदंसीभानुनाभात्त्यन्तः ॥२१॥ ॥ १२ ॥

श्रीणामुंदारः ॥ श्रीणामुंदारोधरुणोरयीणाम्मंनीषाणाम्प्रा

र्प्पणंःसोमंगोपाः ॥ व्वसुंःसूनुःसहंसोऽअप्सुराजाव्विभात्त्य

ग्ग्रंऽउषसामिधानः ॥ २२ ॥ व्विश्वंस्यकेतुः ॥ व्विश्वंस्यकेतु

र्ब्भुवनस्यगर्ब्भऽआरोदंसीऽअपृणाज्जायमानः ॥ व्वीडुञ्चिदद्रि ॥ ११० ।

मभिनत्त्परायञ्जनायदग्निमयंजन्तपञ्च ॥ २३ ॥ उशिक्पा

वुकः ॥ उशिक्पावुकोऽअंरुतिःसुमेधामर्त्तैष्वुग्निरमृतोनि
धांयि ॥ इयर्त्तिधूममंरुषम्भरिंभ्रुदुच्छुक्रेणशोचिषाद्यामिनं
क्षन् ॥ २४ ॥ दृशानोरुक्मः ॥ दृशानोरुक्मऽउर्व्याव्यंद्यौद्दु
र्म्मर्षमायुः श्रियेरुंचानः ॥ अग्निरमृतोऽअभवुद्वयोंभिर्य्य
दैनुन्द्यौरजंनयत्सुरेताः ॥ २५ ॥ यस्ते ॥ यस्तेऽअुद्यकृण
वंद्भद्रशोचेपूपन्देंवघृतवंन्तमग्ने ॥ प्रतन्नयप्प्रतुरंवस्योऽअच्छा
भिसुम्नन्देवभंक्तँयविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भंजसौ

शु. य. संहि. ॥१११॥

श्रवसेष्वग्नऽउक्थऽउक्थऽआभंजशुस्यमाने ॥ प्रियःसूर्य्ये

प्रियोऽअग्नाभवात्युज्जातेनभिनददुज्जनित्वैः ॥ २७ ॥

त्वामग्ने ॥ त्वामग्नेयजमानाऽअनुद्यून्विश्वावसुंदधिरेवा

र्याणि ॥ त्वयासहद्रविणमिच्छमानाव्रजङ्गोमन्तमुशिजोवि

वव्रुः ॥ २८ ॥ अस्ताव्यग्निः ॥ अस्ताव्यग्निर्नराᳪसुशे

वोवैश्वानरऽऋषिभिःसोमगोपाः ॥ अद्वेषेद्यावापृथिवीहुवेम ॥१११

देवाधत्तरयिमस्मेसुवीरम् ॥ २९ ॥ [१२-२] समिधाग्निम् ॥

पू. अ. ॥ १२ ॥

सुमिधाग्निन्दुंवस्यत घृतैर्बोधयुतातिंथिम् ॥ आस्मिन्हुव्याजुं
होतन ॥ ३० ॥ उदुंत्वा ॥ उदुंत्वाविश्वेंदेवाऽअग्नेभरंन्तु
चित्तिंभिः ॥ सनोंभवशिवस्त्वᳪसुप्रतींकोविभावंसुः ॥३१॥
प्रेत ॥ प्रेदंग्नेज्योतिष्मान्याहिशिवेभिंरर्चिंभिष्ट्वम्[1] ॥ बृहद्भिं
र्भानुभिर्भासन्माहिᳪसीस्तन्वाप्रजाः ॥ ३२ ॥ अक्रंन्द

१ अर्चिभिस्त्वम् इति पदम्। अत्र मातृभिरर्चिभिः पायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन मातृभिः आर्चिभिः पायुभिः वरूत्रीः एतेषां पदानां एकाक्षरे प्रत्यये विसर्जनीयसकारस्य षः। तेन सस्य षत्वे, षात्तथौ मूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इत्यनेन त्वमित्यस्य तस्य मूर्धन्ये टकारे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति टस्य द्वित्वे आर्चिभिष्ट्वम्।

दुग्ग्निः ॥ अक्क्रन्ददुग्ग्निस्त्तनयंन्निवद्यौःक्क्षामारेरिहद्वीरुधः
समुञ्जन् ॥ सुद्योजंज्ञानोव्विहीमिद्धोऽअक्ख्यदारोदसीभानु
नांभात्यन्तः ॥ ३३ ॥ प्रप्प्रायम् ॥ प्रप्प्रायमुग्ग्निर्ब्भरतस्य
शृण्ण्वेव्वियत्त्सूर्य्योंनरोचंतेबृहद्भाः ॥ अभियःपुरुम्पृतनासुत
स्त्थौदीदायदैव्व्योऽअतिंथिःशिवोनः ॥ ३४ ॥ आपोंदेवीः ॥
आपोंदेवीःप्प्रतिंगृब्भ्णीतभस्म्मैतत्त्स्योनेकृंणुद्ध्वᳬंसुरभाऽउं ॥ ११२ ॥
लोके ॥ तस्म्मैनमन्ताञ्जनंयःसुपत्क्नीर्म्मातेवंपुत्त्रम्बिभृता

प्स्वेनत् ॥ ३५ ॥ अप्स्वग्ने ॥ अप्स्वग्नेसधिष्ट्वँ[2]सौषधी

रनुंरुद्ध्यसे ॥ गर्ब्भेसञ्जांयसेपुनंः ॥ ३६ ॥ गर्ब्भोऽअसि ॥

गर्ब्भोऽअस्योषंधीनाङ्गर्ब्भोव्वनस्पतींनाम् ॥ गर्ब्भोव्विश्वंस्य

भूतस्याग्नेगर्ब्भोऽअपामंसि ॥ ३७ ॥ प्रसद्यभस्मंना ॥

प्रसद्यभस्मंनायोनिंमपश्चंपृथिवीमंग्ने ॥ सहसृज्यंमातृभिष्ट्व[3]

---

१ सधिष्ट्व । अत्र सधिसत्व इति पदद्वयम् । अत्र विसर्गस्य परसवर्णे, सधिरंशुरद्भितिः ( शु. य. प्रा. ३ अ. ७६ सू. ) इत्यनेन षत्वे ऊष्मान्तस्था-भ्यश्च स्पर्श इत्यनेन टस्य द्वित्वम् । २ सः ओषधीः इति पदद्वयम् । अत्र सऽओषधीमयोः ( शु. य. प्रा. ३ अ, १५ सू. ) इत्यनेन ओषधीपरे सः पदस्य विसर्जनीयस्य लोपे, सन्ध्यक्षर ऐकारौकारौ ( शु. य. प्रा. ४ अ. ५७ सू. ) इत्यनेन वृद्धौ सौषधी इति पदम् । ३ मातृभिस्त्वम् इति पदम् । मातृभिर-

ज्योतिष्म्मान्त्पुनरासंदः ॥ ३८ ॥ पुनंरासद्य ॥ पुनंरासद्य
सदंनमपश्चंपृथिवीमंग्ने ॥ शेषैमातुर्य्यथोपस्त्थेन्तरंस्याᳬं
शिवतंमः ॥ ३९ ॥ पुंनरूर्ज्जा । निर्वर्त्तस्वपुनंरग्नऽइषायुंषा ॥
पुनर्न्नःपाह्यंहंसः ॥ ४० ॥ सहरय्या । निर्वर्त्तस्वाग्नेपिन्वं
स्वधारंया ॥ विश्वप्स्न्यांविश्वतस्प्परिं ॥ ४१ ॥ बोधांमे ।
ऽअस्यवृचसोयविष्ठमᳬंहिंष्ठस्यप्प्रभृंतस्यस्वधावः ॥ पीयंति ॥११३॥

चिंभिः पायुभिर्वरूत्रीः (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन मातृभिः अर्चिभिः पायुभिः वरूत्रीः एतेषां पदानां विसर्जनीयस्य सकारस्य षकार एकाक्षरे प्रत्यये परे इति परत्वे च पात्तथौ मूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इत्यनेन तस्य मूर्धन्ये टकारे ऊष्मान्त० इत्यनेन टस्य द्वित्वम् ।

त्वोऽअनुत्त्वोगृणातिव्वन्दारुष्ट्टेतन्त्वंव्वन्देऽअग्ने ॥ ४२ ॥ स

बोधि । सूरिर्म्मघवाव्वसुपतेव्वसुदावन् ॥ युयोद्ध्यस्मद्द्वेषाᳬं

सिविश्वकर्म्मणेस्वाहा ॥ ४३ ॥ पुनस्त्वा । दित्यारुद्द्राव्वसवᳬः

समिन्धताम्पुनर्ब्ब्रह्माणोव्वसुनीथयज्ञैः ॥ घृतेनत्त्वन्तन्वंव्वर्द्धय

स्वसत्त्याःसन्तुयजमानस्यकामाᳬः ॥४४॥ [१५-३] अपेत ॥

अपेतव्वीतव्विचसर्प्पतातोयेत्रस्थपुराणायेचनूतनाᳬः ॥ अदा

---

१ वृन्दारुष्ट्टे अत्र वृन्दारुः ते इति पदद्वयम् । वृन्दारुर्माकिः (शु. य. प्रा. ३ अ. ७४ सू.) इत्यनेन वृन्दारोः विसर्गस्य परसवर्णे, पात्तथौ मूर्धन्यम् इत्यनेन च ते इत्यस्य मूर्धन्ये टकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति टकारस्य द्वित्वम् ।

शु. य. संहि.

॥११४॥

पू. अ. ॥ १२ ॥

द्युम्नोवसानम्पृथिव्याऽअक्रन्निमम्पितरौलोकमस्म्मै ॥ ४५ ॥
सँज्ञानमसि । कामधरणम्मयितेकामधरणम्भूयात् ॥ अग्ने
र्भस्म्मास्यग्नेःपुरीषमसिचितस्त्थपरिचितऽऊर्द्ध्वचितः श्रय
द्ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्निर्य्यस्म्मिन्त्सो
ममिन्द्रः सुतन्दधेजठरेव्वावशानः ॥ सहस्रियंव्वाजमत्त्य
न्नसप्तिꣳससवान्त्सन्त्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥ ॥११४॥
अग्नेयत्तेदिविव्वर्च्चः पृथिव्याँय्यदोषधीष्ष्वप्प्स्वायजत्र ॥

येनान्तरिक्षमुर्व्वाततन्थत्त्वेषःसभानुरर्ण्णवोनृचक्षाः[1] ॥४८॥
अग्ग्नेदिवः ॥ अग्ग्नेदिवोऽअर्ण्णमच्छाजिगास्यच्छादेवाँ२॥
ऽऊँचिषेधिष्ण्याये ॥ यारोचनेपरस्तात्सूर्य्यस्ययाश्चावस्ता
दुपतिष्ठन्तऽआपः ॥ ४९ ॥ पुरीष्यासोऽअग्ग्नयः । प्रा[2]व
णेभिःसजोषसः ॥ जुषन्ताँय्यज्ञमद्रुहोनमीवाऽइषोमहीः
॥ ५० ॥ इडामग्ग्ने । पुरुदꣳसꣳसनिङ्गोःशश्वत्तमꣳहवमा

१ यत्र यकारवकाररहितदीर्घस्वरितस्वरात्परो विसर्गस्तत्र कनिष्ठिकाक्षेपः सर्वत्र कार्यः । २ प्रावणेभिः । अत्र प्रवणश्रृङ्गयासेषु ( शु. य. प्रा. ३ अ. १०५ सू. ) इत्यनेन वन श्रृङ्ग यास इत्येतेषु परेषु प्र इत्येतत्पदस्य ह्रस्वाकारस्य दीर्घाकारो विधीयते । अत्र प्रशब्दाद्वनशब्दः परः । तेन प्रशब्दाकारो दीर्घः ।

शु. य. संहि. ॥११५॥ नायसाध ॥ स्यान्नं÷सूनुस्त्तनंयोद्विजावाग्ग्नेसातेंसुमतिर्भूत्त्व पृ. अ.

स्म्मे ॥ ५१ ॥ अयन्तें ॥ अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽ ॥ १२ ॥

अरोंचथाः ॥ तञ्जानन्नग्ग्नऽआरोहाथांनोव्वर्द्धयारयिम् ॥५२॥

चिदंसि ॥ चिदंसितयांदेवतंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसित

यांदेवतंयाङ्गिरस्वद्ध्रुवासींद ॥ ५३ ॥ लोकम्पृंण । छिद्रम्पृं

णाथोंसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्ग्नीत्त्वाबृहस्प्पतिंरस्म्मिन्न्योनौं ॥ ११५ ॥

वसीषदन् ॥ ५४ ॥ ताऽअंस्य ॥ ताऽअंस्यसूदंदोहसः सोमंऽ

श्रीणन्तिपृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः ॥ ५५ ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतम[1]रथीनांवाजानां सत्पतिम्पतिम् ॥ ५६ ॥ समितम् ॥ समितसङ्कल्पेथां सम्प्रियौरोचिष्णूसुमनस्यमानौ ॥ इषमूर्जमभिसंवसानौ ॥ ५७ ॥ संवाम्[2] ॥ संवा

१ रथितमम्। इति पदम्। रथि तकारनकारयोः (शु. य. प्रा. ३ अ. ११२ सू.) इत्यनेन तकारे नकारे च परे रथि इत्येतत्पदं दीर्घं भवति। तेन रथीतमम्। २ उपसर्गात्परो यस्तु स वकारो लघुर्मतः। वो वां वा वै मंत्रपाठे लघवो गुरवः पदे। इति वासिष्ठस्यात्र लघुत्वम्।

शु. य. संहि. ॥११६॥ स्मनांᳪसिसंव्व्रुतासमुंचित्तान्याकरम् ॥ अग्नेपुरीष्याधिपा पू. अ. ॥ १२ ॥
भंवत्त्वन्नऽइषमूँर्जँय्यजंमानायधेहि ॥ ५८ ॥ अग्नेत्त्वम् ॥
अग्नेत्त्वम्पुंरीष्योरयिमान्पुंष्टिमाँ२॥ऽअंसि ॥ शिवाः कृत्त्वा
दिशःसर्व्वाःस्वँय्योनिंमिहासदः ॥ ५९ ॥ भवंतन्नः ॥ भवं
तन्नःसमनसौसचेतसावरेपसौ ॥ मायज्ञᳩहिᳩसिष्टम्मायज्ञ
पंतिञ्जातवेदसौशिवौभंवतमद्यनंः ॥६०॥ मातेवंपुत्त्रम् ॥ माते ॥ ११६ ॥

१ अत्र मकारोच्चारे दक्षिणहस्तेन मुष्ट्याकृतिः कार्या । यत्र यत्रावसानगतो मकारस्तत्र मुष्ट्याकृतिः "मुष्ट्याकृतिर्मकारे स्यात्" इति या. शिक्षायाम् ।

वंपुत्रम्पृथिवीपुरीष्यमग्निꣳस्वेयोनावभारुखा ॥ तांविश्वैर्दे
वैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चतु ॥ ६१ ॥
[ १७-४ ] असुन्वन्तमयजमानम् ॥ असुन्वन्तमयजमान
मिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छ
सातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६२ ॥ नमःसुते ॥
नमःसुतेनिर्ऋतेतिग्मतेजोयस्मयंविचृताबन्धमेतम् ॥ यमे

१ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः । आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः । यत्र पदादौ वकारस्तत्रोच्चारणं गुरुभूतम् । यत्र पदादेर्मध्ये यदा च पदस्यान्ते वकारस्तदा तु क्रमेण लघु लघूतरं मध्यमवृत्त्योच्चारणम् । अत्र वकारः पदस्य मध्ये वर्तते तेन न गुरुभूतस्योच्चारणमेवेति इति ।

॥११७॥ न्त्वँव्वयम्म्यासँव्विदानोत्तमेनाकेऽअधिरोहयैनम् ॥ ६३ ॥
यस्यास्त्ते । घोरऽआसञ्जुहोम्म्येषाम्बन्धानामवसर्ज्जनाय ॥ या
न्त्वाजनोभूमिरितिप्प्रमन्दतेनिर्ऋतिन्त्वाहम्परिवेदव्विश्श्वतः
॥ ६४ ॥ यन्ते । देवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्त्यम् ॥
तन्तेव्विष्ष्याम्म्यायुषोनमद्ध्यादथैतम्पितुमद्धिप्प्रसूतः ॥ नमो
भूत्त्यैयेदञ्चकार ॥ ६५ ॥ निवेशनः सङ्गमनः ॥ निवेशनः ॥ ११७

१ विष्ष्यामि अत्र विस्यामि इति पदम् । अत्र वेर्युदयः (शु. य. प्रा. ३ अ. ६७ सू.) इत्यनेन वेः उपसर्गात्परस्य यकारोदयस्य सकारस्य षकारे कृते स्वरात्संयोगादिर्द्विरुच्यते (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन षकारस्य द्वित्वे रूपम् ।

सुङ्गमेनोव्वसूनांव्विश्वारूपाभिचष्टेशचीभिः ॥ देवऽइवसविता
सत्त्यधर्म्मेन्द्रोनतस्त्थौसमरेपथीनाम् ॥ ६६ ॥ सीरायुञ्जन्ति ।
कवयोयुगाव्वितन्वतेपृथक् ॥ धीरादेवेषुसुम्न्नया ॥ ६७ ॥
युनक्तसीरा ॥ युनक्तसीराव्वियुगातनुद्ध्वङ्कृतेयोनौव्वपतेहबी
जम् ॥ गिराचश्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्ण्यःपक्कमे
यात् ॥ ६८ ॥ शुनꣳसु । फालाव्विकृषन्तुभूमिꣳशुनङ्कीना
शाऽअभियन्तुव्वाहैः ॥ शुनासीराहविषातोशमानासुपिप्पला

ऽओषंधीहंकर्त्तनास्म्मे ॥ ६९ ॥ घृतेनसीतां ॥ घृतेनसीतामधुं
नासमंज्ज्यतांव्विश्वैर्हदेवैरनुंमतामरुद्भिंः ॥ ऊर्ज्जस्वतीपयंसापि
न्न्वंमानास्म्मान्त्सीतेपयंसाभ्यावंवृत्स्व ॥ ७० ॥ लाङ्गंल
म्पवीरवत् ॥ लाङ्गंलम्पवीरवत्त्सुशेवंꣳसोमपित्त्सरु ॥ तदुद्वंप
तिगामविम्प्रफर्व्यंञ्चपीवंरीम्प्रस्त्थावंद्रथवाहंणम् ॥ ७१ ॥
कामंङ्कामदुघे । धुक्क्ष्वमित्त्रायव्वरुणायच ॥ इन्द्रांयाश्विभ्यां
म्पूष्णेप्प्रजाभ्यऽओषधीभ्यहं ॥ ७२ ॥ विमुंच्चध्वम् ॥

विमुंच्यद्ध्वमग्घ्न्यादेवयानाऽअगंन्मतमंसस्पारमस्य ॥ ज्यो
तिंरापाम ॥ ७३ ॥ सजूरब्दं÷ ॥ सजूरब्दोऽअयंवोभिंःसजू
रुषाऽअरुंणीभिं: ॥ सजोषंसावश्विनादꣳसोभिंःसजूःसूरऽ
एतंशेनसजूर्वैश्वानरऽइडंयाघृतेनस्वाहा ॥ ७४ ॥ [१३-५]
याऽओषंधीः ॥ याऽओषंधीःपूर्वाजातादेवेभ्यंस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणांमहꣳशतन्धामानिसप्तचं ॥ ७५ ॥ शतंव्रं÷ ॥

---

१ तमसस्पारम् । अत्र तमसोऽपरसात् (शु. य. प्रा. ३ अ. २६ सू.) इत्यनेन विसर्जनीयः सकारमापद्यतेऽपरस्माच्छब्दे परे । इति तमस इत्यस्य विसर्गस्य सकारे कृते तमसस्पारम् । अन्यथा तमसः पारम् इति स्यात् । अपरस्मात्किम् । आदित्यवर्णन्तमसः परस्तात् (संहिता अ. ३१ मं. १८)

शतंवो[1]ऽअम्बधामानिसहस्रमुतवोरुहः॥ अधाशतक्रत्वोयू
यमिमम्मेऽअगदङ्कृत ॥ ७६ ॥ ओषधीःप्रति । मोदद्ध्वम्पु
ष्प्पंवतीःप्प्रसूवरीः ॥ अश्वाऽइवसजित्त्वरीर्वीरुधःपारयि
ष्ण्वः ॥ ७७ ॥ ओषधीरिति । मातरस्तद्वोदेवीरुपब्ब्रुवे ॥
सनेयमश्वङ्गांव्वासऽआत्मानन्तवंपूरुष ॥ ७८ ॥ अश्वत्थे
वः ॥ अश्वत्थेवोनिषदनम्पर्णेवोव्वसतिष्कृता[2] ॥ गोभाजऽइ ॥११९॥

१ स्वदर्थवाचिनी वो वां वा वै यदि निपातजौ । आदेशार्थे विकल्पार्थो ईषत्स्पृष्टास्तु ते स्मृताः । अर्थाद्देते लघव उच्चारणीयाः (या. शि.) २ वसतिः कृता इति पदम् । आविनिरिडइडायावसतिर्वरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन ककारपकारयोः परयोरेतेषां सस्य षत्वम् । तेन वसतिष्कृता ।

शु. य.
संहि.
॥११९॥ शतंवोँऽअम्बधामानिसहस्त्रंमुतवोरुहं÷ ॥ अधाशतक्रत्वोयू

पू: अ.
॥ १२ ॥

यमिमम्मेऽअगदङ्कृत ॥ ७६ ॥ ओषधीहंप्प्रति । मोदद्धम्पु
ष्प्पवतीहंप्प्रसूवरीहं ॥ अश्वाऽइवसजित्त्वरीर्व्वीरुधं÷पारयि
ष्णव÷ ॥ ७७ ॥ ओषधीरिति । मातरस्तद्वोदेवीरुपब्रुवे ॥
सनेयमश्वङ्गांव्वासऽआत्त्मानन्तवंपूरुष ॥ ७८ ॥ अश्वत्थे
वं÷ ॥ अश्वत्थेवोनिषदनम्पर्ण्णेवोव्वसतिष्कृता[2] ॥ गोभाजऽइ ॥११९॥

१ त्वदर्थवाचिनौ वो वां या वै यदि निपातजौ । आदेशाश्च विकल्पार्थां ईषत्स्पृष्टास्तु ते स्मृताः । अर्थादेते लघव उच्चारणीयाः (या. शि.) २ वसतिः कृता इति पदम् । कविनिरिडइडायावसतिर्विरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन ककारपकारयोः परयोरेतेषां सस्य षत्वम् । तेन वसतिष्कृता ।

त्त्किलासथयत्त्सनवथपूरुषम् ॥ ७९ ॥ यत्रौषधीः । सम
ग्ग्मतराजानःसमिताविव ॥ व्विप्प्रःसऽउच्च्यतेभिषग्ग्रक्षोहा
मीवचातनः ॥ ८० ॥ अश्श्वावतीᳫंसोमावतीम् ॥ अश्श्वाव
तीᳫंसोमावतीमूर्ज्जयन्तीमुदोजसम् ॥ आवित्त्सिसर्व्वाऽओष
धीरस्म्माऽअरिष्टतातये ॥ ८१ ॥ उच्छुष्म्माः ॥ उच्छुष्म्माऽ
ओषधीनाङ्गावोगोष्ठादीरते ॥ धनᳫंसनिष्ष्यन्तीनामात्क्मा

१ अश्ववतीम् । इति पदम् । अत्र अश्वरश्मिसुमति० (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन वकारे परे अश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । तेन अश्श्वावतीम् । एवं सोमावतीं रश्मीवतीम् ।

नुन्तवं पूरुष ॥ ८२ ॥ इष्कृतिर्नाम । वो माता थो युयᳪस्थ नि
ष्कृतीः ॥ सीराः पतत्रिणीस्थन यदामयति निष्कृथ ॥ ८३ ॥
अतिविश्वाः । परिष्ठास्तेनऽइव व्रजमक्रमुः ॥ ओषधीः प्रा
चुच्यवुर्यत्किञ्च तन्वोरपः ॥ ८४ ॥ यदिमाः ॥ यदिमा वा
जयन्नहमोषधीर्हस्तऽआदधे ॥ आत्मा यक्ष्मस्य नश्यति पु
रा जीवगृभो यथा ॥ ८५ ॥ यस्यौषधीः । प्रसर्पथाङ्गमङ्ग
म्परुष्परुः ॥ ततो यक्ष्मं विबाधध्वऽउग्रो मध्यमशीरिव ॥ ८६ ॥



॥१२०॥

साकँय्यक्ष्म ॥ साकँय्यक्ष्मप्प्रपतचाषेणकिकिदीविना ॥ सा
कंव्वातंस्यध्ध्राज्ज्यासाकन्नंश्श्यनिहाकया ॥ ८७ ॥ अन्न्यावं ॥
अन्न्यावोऽअन्न्यामवत्त्वन्न्यान्न्यस्याऽउपावत ॥ ताश्सर्व्वाःसं
विदानाऽइदम्मेप्प्रावतावचः[1] ॥ ८८ ॥ याश्फलिनीः ॥ याश्
फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्श्चपुष्प्पिणीः ॥ बृहस्प्पति
प्प्रसूतास्त्तानोमुञ्चन्त्वꣳहसः ॥ ८९ ॥ मुञ्चन्तुमा । शप

१ इदम्मेप्रावतावचः । अत्र अधरद्रिममतिसुमतिश्रुतचारयपृणिसेदिमेन्द्रियधारयन्वित्रभक्षुरवयुनाश्वस्यहृदयपुष्यर्त्तामयवाप्यर्चशक्तिपुरुश्रपि वकारे (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वचः इत्यस्य वकारे परे अवत इत्यस्य ह्रस्वाकारस्य दीर्घाकारः ।

त्थ्युदथौ वरुण्याद्दुत ॥ अथौ यमस्य पड्वीशात्सर्वस्माद्देवकि
ल्बिषात् ॥ ९० ॥ अवपतन्तीरवदन् ॥ अवपतन्तीरवदन्दि
वऽओषधयस्परि ॥ यञ्जीवमश्नवामहै नस रिष्याति पूरुषःꣳ
॥ ९१ ॥ याऽओषधीःꣳ ॥ याऽओषधीःꣳ सोमराज्ञीर्बह्वीः शत
विचक्षणाःꣳ ॥ तासामसि त्वमुत्तमारङ्कामाय शꣳ हृदे ॥ ९२ ॥
याऽओषधीःꣳ ॥ याऽओषधीःꣳ सोमराज्ञीर्विष्ठिताः पृथिवीमनु ॥ 

१ पूरुषः । अत्र पुरुषोऽवसाने (शु. य. प्रा. ३ अ. १२० सू.) पुरुष इति दीर्घो निपात्यते अवसाने चेत् । अत्र पू इत्यस्य निपातनाद्दीर्घः । अनवसाने पुरुषऽएवेदम् । अत्र ह्रस्व एव ।

बृहस्प्पतिंप्प्रसूताऽअस्यैसन्दंत्तव्वीर्य्यम् ॥ ९३ ॥ याश्च ॥
याश्चेदमुंपशृण्ण्वन्तियाश्चंदूरम्परागताः ॥ सर्व्वाः सुङ्गत्त्यव्वी
रुधोस्यैसन्दंत्तव्वीर्य्यम् ॥ ९४ ॥ मावः ॥ मावोरिषत्त्वनि
तायस्म्मैचाहङ्खनामिवः ॥ द्विपाच्चतुष्प्पादस्म्माकᳬसर्व्वम
स्त्वनातुरम् ॥ ९५ ॥ ओषधयःसम् ॥ ओषधयःसमंवद
न्तसोमेनसहराज्ञा ॥ यस्म्मैकृणोतिब्राह्मणस्त्तᳬराजन्पार
यामसि ॥ ९६ ॥ नाशयित्रीबलासस्य ॥ नाशयित्रीबलास

शु. य. संहि. ॥१२२॥

पू. अ. ॥ १२ ॥

स्याशंसऽउपचितामसि ॥ अथोशतस्ययक्ष्माणाम्पाकारोरसि
नाशनी ॥ ९७ ॥ त्वाङ्गन्धर्व्वाः ॥ त्वाङ्गन्धर्व्वाऽअखनँस्त्वा
मिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्य
क्ष्मादमुच्यत ॥ ९८ ॥ सहस्वमे ॥ सहस्वमेऽअरातीः सहस्व
पृतनायतः ॥ सहस्वसर्व्वंपाप्मानꣳसहमानास्योषधे ॥ ९९ ॥
दीर्घायुस्त्ते ॥ दीर्घायुस्त्तऽओषधेखनितायस्मैचत्त्वाखना ॥ १२२ ॥
म्यहम् ॥ अथोत्त्वन्दीर्घायुर्भूत्वाशतवल्शाविरोहतात्

अत्र लकारवकारयोर्योगे हरितारख्या स्वरभक्तिर्बोध्या ।

॥ १०० ॥ त्वमुत्तमा । स्योषधेतवंवृक्षाऽउपस्त्तयः ॥ उप
स्त्तिरस्त्तुसोस्म्माकंय्योऽअस्म्माँ२॥ऽअभिदासति ॥ १०१ ॥
[२७-६] मामा ॥ मामाहिꣳसीज्जनितायःपृथिव्यायोवा
दिवꣳसत्त्यधर्म्माव्यानट् ॥ यश्चापश्चन्द्राःप्प्रथमोजजानक
स्म्मैदेवायहविषाविधेम ॥ १०२ ॥ अब्भ्यावर्त्तस्व । पृथि
विय्यज्ञेनपयसासह ॥ व्वपान्तेऽअग्निरिषितोऽअरोहत् ॥ १०३ ॥
अग्नेयत् ॥ अग्नेयत्तेशुक्रंय्यच्चन्द्रंय्यत्पूतंय्यच्चयज्ञियम् ॥

तद्देवेभ्योभरामसि ॥ १०४ ॥ इषमूर्ज्जम् ॥ इषमूर्ज्जमहमि
तऽआदंमृतस्ययोनिम्महिषस्यधाराम् ॥ आमागोषुविशत्त्वा
तनूषुजहामिसेदिमनिराममीवाम् ॥ १०५ ॥ अग्नेतव ॥
अग्नेतवश्रवोवयोमहिभ्राजन्तेऽअर्च्चयोविभावसो ॥ बृहे
द्भानोशवंसावाजमुक्थ्यन्दधासिदाशुषेकवे ॥ १०६ ॥
पावकवर्च्चाःशुक्रवर्च्चाः ॥ पावकवर्च्चाःशुक्रवर्च्चाऽअनूनवर्च्चाऽ ॥१२१॥
उदियर्षिभानुना ॥ पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीऽ

उभे ॥ १०७ ॥ ऊर्ज्जोनपात् ॥ ऊर्ज्जोनपाज्जातवेदꣳसुश
स्तिभिर्म्मन्दस्वधीतिभिर्हितः ॥ त्वेऽइषꣳसन्दधुर्भूरिवर्प्प
सश्चित्रोतयोव्वामजाताः ॥ १०८ ॥ इरज्ज्यन्नग्ने । प्प्रथय
स्वजन्तुभिरस्म्मेरायोऽअमर्त्त्य ॥ सदर्शतस्यव्वपुषोव्विराज
सिपृणक्षिसानसिङ्क्रतुम् ॥ १०९ ॥ इष्कर्त्तारमध्वरस्य ॥
इष्कर्त्तारमध्वरस्यप्प्रचेतसङ्क्षयन्तꣳराधसोमहः ॥ रातिंव्वामस्य

१ निश्चयेन कर्त्तारम् निष्कर्त्तारमिति प्राप्ते निशब्दो बहुलम् (ऋ. प. प्रा. ३ अ. १८ सू.) इत्यनेन क्वचिन्नकारमात्रस्य लोपे इष्कर्त्तारम् ।

सुभगाम्महीमिषन्दधांसिसानसिᳪरयिम् ॥ ११० ॥ ऋतावां
नम्महिषं । व्विश्वदर्शतमग्निᳪसुम्नायदधिरेपुरोजनाः ॥ श्रुत्त्क ॥ १२ ॥
॥१२४॥ र्णᳪसप्प्रथस्तमन्त्वागिरादैव्व्यम्मानुषायुगा ॥ १११ ॥ आ
प्प्यायस्व ॥ आप्प्यायस्वसमेतुतेव्विश्वतःसोमव्वृष्ण्ण्यम् ॥ भवा
व्वाजस्यसङ्गथे ॥ ११२ ॥ सन्ते ॥ सन्तेपयाᳪसिसमुयन्तु
व्वाजाःसंव्वृष्ण्ण्यान्यभिमातिषाहः ॥ आप्प्यायमानोऽअमृ ॥ १२४ ॥

१ ऋतावानम् । अत्र अश्वरश्मि० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे ऋतशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । २ भवन्वाजस्य इति पदम् । अत्र वाजस्य परे भव इत्यस्य ह्रस्वाकारस्य स यावरूप्यवाजस्य पादुपु च (शु. य. प्रा. ३ अ. ११० सू.) इत्यनेन दीर्घे भवावाजस्य । तथैव भवावायुर्व्विशोऽअस्वाऽअदब्धः ।

तायसोमदिविश्रवाꣳस्युत्तमानिंधिष्व ॥ ११३ ॥ आप्याय
स्व । मदिन्तमसोमविश्वेभिरꣳशुभिः ॥ भवानःसप्रथस्त
मःसखावृधे ॥ ११४ ॥ आतेः । वत्सोमनौयमत्परमाच्चि
त्सधस्थात् ॥ अग्नेत्वाङ्कामयागिरा ॥ ११५ ॥ तुभ्यु
न्ताः ॥ तुभ्यन्ताऽअङ्गिरस्तमविश्वाःसुक्षितयःपृथक् ॥
अग्नेकामाययेमिरे ॥ ११६ ॥ अग्निःप्रियेषु ॥ अग्निः

१ भवनः इति पदम्। भव इत्येतस्य ह्रस्वाकारस्य नः परे भव च (शु. य. प्रा. ३ अ. १०९ सू.) इत्यनेन दीर्घाकारे कृते भवानः इति पदम्।

 

प्प्रियेषुधामसुकामोभुतस्युभव्यस्य ॥ सुम्म्राडेकोव्विराजति
॥ ११७ ॥ [ १६-७ ] इतिश्रीवाजसनेयसंहितायांद्वादशोऽ
ध्यायः ॥ १२ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
मयिगृह्णामिपंचदश, ध्रुवास्येकादश, मधुव्वाताऽएकादश,
सम्यक्स्रवंतिनवे,मंमाषड,पाँत्वैका,ऽयंपुरःपंच, सप्ताष्टापंचा
शत् [ अनु. ७ मं. ५८ अ. १३ ] ॥ हरिःॐ ॥ मयि ॥१२५॥
गृह्णामि ॥ मयिगृह्णाम्म्यग्ग्रेऽअग्निꣳरायस्प्पोषायसुप्प्रजा

स्त्वायंसुवीर्य्यांय ॥ मामुंदेवताः॑सचन्ताम् ॥ १ ॥ अपाम्पृ
ष्ठम् ॥ अपाम्पृष्ठमंसियोनिंरग्नेःसंमुद्रमुभितः॑पिन्वंमानम् ॥
वर्द्धंमानोमुहाँ२॥ऽआचपुष्कंरेदिवोमात्रंयावरिम्म्णाप्प्रंथस्व
॥ २ ॥ ब्रह्मंयज्ञानम् ॥ ब्रह्मंयज्ञानम्प्रंथमम्पुरस्त्ताद्विसीं
मतःसुरुचोंवेनऽआंवः ॥ सबुध्न्याऽउपमाऽअंस्यविष्ठाःसत
श्चयोनिमसंतश्चविवंः ॥ ३ ॥ हिरण्यगर्ब्भःसम् ॥ हिरण्य
गर्ब्भःसमंवर्त्ततोग्रेभूतस्यंजातःपतिरेकंऽआसीत् ॥ सदाधार

पृथिवीन्द्यामुतेमाङ्कस्म्मैदेवायहविषाव्विधेम ॥ ४ ॥ द्रप्स
श्चस्कन्द । पृथिवीमनुद्यामिमञ्चयोनिमनुयश्चपूर्व्वः ॥ समा
नँय्योनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्म्यनुसप्तहोत्राः ॥ ५ ॥
नमोस्त्तु । सर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदि
वितेभ्यः सर्प्पेभ्योनमः ॥ ६ ॥ याऽइषवः ॥ याऽइषवो
यातुधानानाँय्येवाव्वनस्पतीँ१॥रनु ॥ येवावटेषुशेरतेतेभ्यः
सर्प्पेभ्योनमः ॥ ७ ॥ येवा ॥ येवामीरोचनेदिवोयेवा

सूर्य्यस्यरश्मिम्मषुं ॥ येषामप्प्सुसदस्कृतन्तेभ्य्यः सर्प्पेभ्योन
मः ॥ ८ ॥ कृणुष्वपाजः ॥ कृणुष्वपाजःप्प्रसितिन्नपृथ्थ्वीं
य्याहिराजेवामवाँ२॥ऽइभेन ॥ तृष्वीमनुप्प्रसितिन्द्रूणानो
स्त्तासिविद्ध्यरक्षसस्त्तपिष्ठैः ॥ ९ ॥ तवभ्भ्रमासः ॥ तवभ्भ्र
मासऽआशुयापतन्त्यनुस्प्पृशधृषताशोशुचानः ॥ तपूᳫंष्य

१ सदस्कृतम्। अत्र सदोद्यौर्नमस्कृतमिपता पथेषु (शु. य. प्रा. ३ अ. ३४ सू.) इत्यनेन यथासंख्यं सदः द्यौः नमः एतेषां विसर्जनीयसंबन्धिनः सस्य क्रमेण कृतं पिता पथः एतेषु पदेषु परेषु षकारः। एवं षकारे कृते ऊष्मान्तस्थाम्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वे प्राप्ते पवर्गे (शु. य. प्रा. ४ अ. ११३ सू.) इत्यनेन ककारस्य द्वित्वनिषेधः।

ई. २२

ग्ग्नेजुह्वापतङ्गानसंन्दितोव्विसृंजव्विष्ष्वंगुल्काः ॥ १० ॥ प्रति

॥ १३ । स्प्पर्शः ॥ प्रतिस्प्पर्शोव्विसृंजतूर्ण्णितमोभवापायुर्व्विशोऽअ

॥१२७॥ स्याऽअदंब्धः ॥ योनोंदूरेऽअघशंᳬसोयोऽअन्त्यग्ग्नेमाकिंष्ट्टे[1]

व्यथिरादंधर्षीत् ॥ ११ ॥ उदंग्ग्ने । तिष्ठप्प्रत्त्यातंनुष्ष्वन्न्य

मित्त्राँ२॥ऽओषतात्तिग्ग्महेते ॥ योनोऽअरांतिᳬसमिधानच

क्रेनीचातंधंक्क्ष्यतसन्नशुष्क्कंम् ॥१२॥ ऊर्द्ध्वोंभव ॥ ऊर्द्ध्वोंभव ॥ १२७

प्प्रातिंविद्ध्याद्ध्यस्म्मदाविष्क्कृंणुष्ष्वदैव्यांन्न्यग्ग्ने ॥ अवंस्स्थिरा

१ माकिष्टे। अत्र वृन्दारुर्माकिः (शु. य. प्रा. ३ अ. ७५ सू.) इत्यनेन विसर्गस्य सस्य षत्वे ट्टित्वे रूपम्।

तंनुहियातुजूनाञ्ञामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्नेष्ट्वा
तेजसासादयामि ॥ १३ ॥ अग्निर्म्मूर्द्धा । दिवश्ककुत्पतिः
पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ इन्द्रस्यत्वौज
सासादयामि ॥ १४ ॥ भुवोयज्ञस्य ॥ भुवोयज्ञस्यरजसश्चने
तायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्द्धानन्दधिषेस्वर्षा
ञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ १५ ॥ [ १५-१ ] ध्रुवासि ।
धरुणास्तृताविश्वकर्म्मणा ॥ मात्वासमुद्रऽउद्वधीन्मासुप

॥१२८॥ णोर्व्यथमानापृथिवीन्दृꣳह ॥ १६ ॥ प्रजापतिष्ट्वा । साद
यत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥ व्यचस्वतीम्प्रथस्वतीम्प्रथस्वपृथि
व्यसि ॥ १७ ॥ भूरसि ॥ भूरसिभूमिरस्यदितिरसिविश्वधाया
विश्वस्यभुवनस्यधर्त्री ॥ पृथिवीँय्यच्छपृथिवीन्दृꣳहपृथिवी
म्माहिꣳसीः ॥ १८ ॥ विश्वस्मैप्प्राणाय ॥ विश्वस्मैप्प्रा
णायापानायव्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ अग्निष्ट्वा ॥ १२८ ॥

१ प्रजापतिष्ट्वा । सकारपरे च (शु. य. प्रा. ३ अ. ७८ सू.) इत्यनेन सकारः परो यस्मादेकाक्षरात्तस्मैकाक्षरे प्रत्यये विसर्जनीयसकारस्य षत्वम् । अत्र प्रजापतिशब्दे पाधातोः पतिशब्दस्य सस्य षकारे टुत्वे द्वित्वे रूपम् ।

भिपातुमह्यास्वस्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १९ ॥ काण्डात्काण्डात्प्ररोहन्ती ॥ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि[1] ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ २० ॥ याशतेन । प्रतनोषिसहस्रेणाविरोहसि ॥ तस्यास्तेदेवीष्टकेविधेमहविषावयम् ॥ २१ ॥ यास्ते ॥ यास्तेऽअग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभि

१ परुषः परुषस्परि । अत्र समानपदे च ( शु. य. प्रा. ३ अ. ३० सू. ) इत्यनेन सकारे प्राप्ते न पदादौ परुषि ( शु. य. प्रा. ३ अ. ३१ सू. ) इत्यनेन परुषि परे पूर्वपरुषशब्दघटितविसर्जनीयस्य सकारो निषिध्यते । अतो न सकारः किन्तु विसर्ग एव ।

॥१२९॥ न्नोऽअद्यसर्व्वाभीरुचेजनायनस्कृधि ॥ २२ ॥ यावं॑ ॥ या
वोदेवाह्सूर्य्येरुचोगोष्वश्वेषुयारुचं॑ ॥ इन्द्राग्नीताभिह्स ॥ १३
र्व्वाभीरुचन्नोधत्तबृहस्पते ॥ २३ ॥ विराड्ज्योतिं॑ ॥ वि
राड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासा
दयतुपृष्ठेपृथिव्याज्ज्योतिष्मतीम् ॥ विश्वस्मैप्प्राणायांपाना
यंव्यानायविश्वञ्ज्योतिर्य्यच्छ ॥ अग्निष्टेधिपतिस्तयादेवत ॥१२९

१ अग्निष्टे । अग्निस्ते इति पदम् । अत्र वायुरग्निरग्नेरेकाक्षरे (शु. य. प्रा. ३ अ. ७७ सू.) इत्यनेन एकाक्षरे ते पदे परे अग्निशब्दघटितस्य सस्य षत्वे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन टस्य द्वित्वम् ।

याङ्गिरस्वद्ध्रुवासीद ॥ २४ ॥ मधुश्च ॥ मधुश्चमाधवश्चवास
न्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्प
न्तामापऽओषधयःकल्पन्तामग्नयः पृथङ्ममज्यैष्ठ्यायस
व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वास
न्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तु
तयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २५ ॥ अषाढासि ॥ अषा

१ अभिसंविशन्तु । अत्र भाविभ्यः सः षं समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) अनेन प्राप्तस्य षकारस्य अनुसन्तनोतुबृहस्पतिसुतस्यसुसमिन्द्राय-सुसन्दृशमभित्वाऽभिसंविशन्तु० (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वाभावः ।

ढासिसहंमानासहस्वारातीꣳसहंस्वपृतनायतः ॥ सहस्रंवीर्य्या
सिसामांजिन्व ॥ २६ ॥ [ ११-२ ] मधुव्वाताꣳ ॥ मधुव्वाताऽऋ
तायतेमधुंक्क्षरन्तिसिन्धवꣳ ॥ माद्ध्वीर्न्नꣳसन्त्वोषधीꣳ ॥ २७ ॥
मधुनक्तम् ॥ मधुनक्तमुतोषसोमधुंमत्पार्त्थिवꣳरजः ॥ म
धुद्यौरंस्तुनꣳपिता ॥ २८ ॥ मधुमान्नꣳ ॥ मधुमान्नोव्वनस्प्पति
र्म्मधुमाँ२ ॥ ऽअस्तुसूर्य्यः ॥ माद्ध्वीर्ग्गावोभवन्तुनꣳ ॥ २९ ॥ ॥ १२० ॥
अपाङ्गम्भन् ॥ अपाङ्गम्भन्त्सीदमात्त्वासूर्य्योभिताप्प्सीन्मा

ग्निर्व्वैश्वानरः ॥ अच्छिन्नपत्राꣳप्रजाऽअनुवीक्षस्वानुत्त्वादि
व्याव्वृष्टिःसचताम् ॥ ३० ॥ त्रीन्त्समुद्रान् ॥ त्रीन्त्समुद्रा
न्त्समसृपत्स्वर्ग्गानपाम्पतिर्व्वृषभऽइष्टकानाम् ॥ पुरीषंव्वसानꣳ
सुकृतस्यलोकेतत्रगच्छयत्रपूर्व्वेपरेताꣳ ॥ ३१ ॥ महीद्यौः ।
पृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिꣳ
॥ ३२ ॥ व्विष्णोꣳकर्म्माणि । पश्यतयतोव्व्रतानिपस्पशे ॥
इन्द्रस्ययुज्यꣳसखा ॥ ३३ ॥ ध्रुवासि । धरुणेतोजज्ञेप्रथम

मे॒भ्यो॒यो॒नि॒भ्यो॒ऽअधि॒जा॒तवे॑दाः ॥ सगा॒य॒त्र्या त्रि॒ष्टु॒भा॒नु॒ष्टु॒
॥१२१॥ भा॒च॒दे॒वेभ्यो॒ह॒व्यंव्व॑हतुप्प्र॒जा॒नन् ॥ ३४ ॥ इ॒षे॒रा॒ये । रम॑ ॥ १३
स्व॒स॒हंसे॒द्यु॒म्न॒ऽऊ॒र्जेऽअप॑त्याय ॥ स॒म्रा॒डँसि॒स्व॒रा॒डँसि॒सार
स्व॒तौ॒त्वो॒त्त्सौ॒प्प्रा॑वताम् ॥३५॥ अग्ग्ने॒यु॒क्ष्व ॥ अग्ग्ने॒यु॒क्ष्वा॒हि
ये॒त॒वा॒श्वा॒सो॒दे॒व॒सा॒ध॒वः ॥ अरं॒व्व॒ह॒न्ति॒म॒न्यवे॑ ॥ ३६ ॥
यु॒क्ष्वा॒हि । दे॒व॒हू॒त॒माँ२॥ऽअश्वाँ२॥ऽअग्ग्ने॒र॒थी॒रि॑व ॥ निहो॒ता ॥ १३१
पू॒र्व्यः॒स॒दः ॥ ३७ ॥ [११-३] स॒म्म्य॒क्स्र॒वन्ति । स॒रितो॒

३४४

नधेनाऽअन्तर्हृदामनंसापूयमांनाः ॥ घृतस्युधाराऽअभिचांक
शीमिहिरुण्ययोंव्वेतसोमध्यैऽअग्नेः ॥ ३८ ॥ ऋचेत्त्वां ।
रुचेत्त्वांभासेत्त्वाज्ज्योतिंषेत्त्वा ॥ अभूदिदंव्विश्श्वस्युभुवंनस्यु
व्वाजिंनमुग्नेर्व्वैश्वानुरस्यंच ॥ ३९ ॥ अुग्निज्ज्योतिंषा ॥
अुग्निज्ज्योतिंषाज्ज्योतिंष्म्मान्नुक्मोव्वर्च्चंसाव्वर्च्चंस्वान् ॥ सहस्र
दाऽअंसिसहस्रायंत्त्वा ॥ ४० ॥ आदित्त्युगर्ब्भम् ॥ आदित्त्य

1 यत्र रकारपरस्य हकारपरस्य च स्पर्शवर्गस्य द्वित्वं तत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ज्ञेयम्। अस्य परं तु रेफहकाराभ्याम् इत्यनेन विधीयमानस्य द्वित्वस्यापवादभूतत्वात्। यथा संवर्चसा। गर्ब्भम्। पार्थिवम्। चक्षुर्म्मित्रस्य। अग्निर्ज्ज्योतिषा।

ङ्गर्ब्भम्पयसासमङ्ग्धिसहस्रस्यप्प्रतिमांव्विश्वरूपम् ॥ परिवृङ्धि
हरसामाभिमंꣳस्थाःꣳशतायुंषङ्कृणुहिचीयमानः ॥४१॥ व्वातं
स्यजूतिं । व्वरुणस्यनाभिमश्वंञ्जज्ञानꣳसरिरस्यमद्ध्ये ॥ शिशुं
न्नदीनाꣳहरिमद्द्रिबुद्ध्नमग्नेमाहिꣳसीःपरमेव्व्योमन् ॥४२॥
अजस्रमिन्दुम् ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडे

१ मंस्थाः । अत्र संयोगाद्यश्च यो भवेत् । ( या. शि. ) यत्र संयोगाद्योऽनुस्वारो मात्रिको द्विमात्रिको वा वर्णो भवेत्तत्र ऋवर्णव्यञ्जनादिगं संयोगाद्यं वर्जयित्वा ह्रस्व एव बोध्यः । संयोगात्पूर्वः संयोगपूर्वः इति समासः । अत्र नानुस्वारः ( शु. य. प्रा. ४ अ. १०९ सू. ) लिङ्गम् । २ वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिकः । ( या. शि. ) मात्रिकेऽ ( ह्रस्ववर्णे पूर्वे ) नुस्वारे सो द्विमात्रिको लेख्यो बोध्य उच्चारणीयश्च । अत्र अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रेति ( शु. य. प्रा. ४ अ. १४८ सू. ) प्रमाणम् । ३ द्विमात्रिके मात्रिकः स्यादिति ( या. शि. ) । यत्रानुस्वारात्पूर्ववर्णो द्विमात्रिकस्तत्र मात्रिकोऽ ( ह्रस्वः ७इत्याकारकः ) नुस्वारो विधेयो ह्रस्वोच्चारणीयश्च । अत्र दीर्घादर्द्धमात्रा पूर्वा चाध्यर्धा ( शु. य. प्रा. ४ अ. १४९ सू. ) लिङ्गम् । ॥१३२॥

पूर्वचित्तिन्नमोभिः ॥ सपर्वभिर्ऋतुश:कल्पमानो गाम्माहिः
सीरदितिं विराजम् ॥ ४३ ॥ त्वष्टुः ॥ त्वष्टुर्वरुणस्य नाभिमविं जज्ञानां रजसः परस्मात् ॥ मही
सांहस्रीमसुरस्य मायामग्ने माहिःसीः परमे व्योमन् ॥ ४४ ॥
योऽअग्निः ॥ योऽअग्निरग्नेरध्यजायत शोकात्पृथिव्याऽउत
वादिवस्परि ॥ येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि
ते वृणक्तु ॥ ४५ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगाद

सं. २३

३४७

शु. य.
संहि.

॥१२२॥

नीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः॥ आप्प्राद्यावापृथिवीऽअन्त पू. अ.
रिक्षहुसूर्य्यऽआत्क्माजगतस्त्तस्त्थुषश्च ॥ ४६ ॥ [ ९-४ ] ॥ १२ ॥
इमम्मा। हिंᳪसीर्द्द्विपादम्पशुᳪसहस्राक्क्षोमेधायचीयमानः॥
मयुम्पशुम्मेधमग्ग्नेजुषस्वतेनंचिन्वानस्त्तन्न्वोनिषीद ॥ मयु
न्तेशुगृच्छतुयन्द्विष्ष्मस्त्तन्तेशुगृच्छतु ॥ ४७ ॥ इमम्मा ।
हिंᳪसीरेकशफम्पशुङ्कनिक्क्रदंव्वाजिनंव्वाजिनेषु ॥ गौरमार ॥ १२२ ॥

१ यत्र स्वरात्परस्य संयोगस्याद्यक्षरस्य द्वित्वं दृश्यते तत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. ४ अ. ९६ सू.) इत्यनेन ज्ञेयम्। चिन्वानः। संलक्ष्यमानः। जनित्रम्। वरुणस्याग्नेः। परन्तु स संयोगः सजातीयवर्ग्यतालव्यदन्त्यमूर्धन्यौष्ठ्यवर्णानां न चेत् तत्र तु द्वित्वाभाव एव यथा इमम्मा। गौरन्ते।

ण्णयमनुतेदिशामितेनचिन्वानस्तन्न्वोनिषीद ॥ गौरन्तेशुगृं
च्छतुयन्द्विष्मस्तन्तेशुगृंच्छतु ॥ ४८ ॥ इमꣳसाहस्रम् ॥
इमꣳसाहस्रꣳशतधारमुत्सँव्यच्यमानꣳसरिरस्यमद्ध्ये ॥
घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीःपरमेव्योमन् ॥ गव
यमारण्यमनुतेदिशामितेनचिन्वानस्तन्न्वोनिषीद ॥ गवय
न्तेशुगृंच्छतुयन्द्विष्मस्तन्तेशुगृंच्छतु ॥ ४९ ॥ इमममूर्ण्णा
युं । वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् ॥ त्वष्टुः

 प्प्रजानाम्प्रथमञ्जनित्रमग्ग्नेमाहिंᳫसीःᳫपरमेव्व्योमन् ॥ उष्ट्र 
॥१३४॥ मारण्ण्यमनुतेदिशामितेनंचिन्न्वानस्त्तन्न्वोनिषींद ॥ उष्ट्रन्ते ॥ १३ ॥
शुगृंच्छतुयन्द्विष्ष्मस्त्तन्तेशुगृंच्छतु॥ ५० ॥ अजोहि ॥ अजो
ह्यग्ग्नेरजंनिष्ट्ठशोकात्त्सोऽअंपश्श्यज्जनितारमग्ग्रें॥ तेनंदेवादेव
तामग्ग्रंमायँस्त्तेनरोहंमायन्नुपमेध्यासंᳫ॥ शरभमारण्ण्यमनुते
दिशामितेनंचिन्न्वानस्त्तन्न्वोनिषींद ॥ शरभन्तेशुगृंच्छतुय ॥ १३४॥
न्द्विष्ष्मस्त्तन्तेशुगृंच्छतु ॥ ५१ ॥ त्वँय्यंविष्ठ । दाशुषोनॄँः

पाहिशृणुधीगिरः॥ रक्षातोकमुतत्मना॥५२॥ [६-५]

अपान्त्वा॥ अपान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादयाम्म्यपान्त्वाभस्म्मन्त्सादयाम्म्यपान्त्वाज्योतिषिसादयाम्म्यपान्त्वायनेसादयाम्म्यर्णवेत्त्वासदनेसादयामिसमुद्रेत्त्वासदनेसादयामिसरिरेत्त्वासदनेसादयाम्म्यपान्त्वाक्षयेसादयाम्म्यपान्त्वासधिषिसादयाम्म्यपान्त्वासदनेसादयाम्म्यपान्त्वासधस्त्थेसादयाम्म्यपान्त्वायोनौसादयाम्म्यपान्त्वापुरीषेसादया

१ एमनि इति पदम्। निवाङ्गो बहुलम् (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन क्वचिन्निकारघटितेकारस्यापि लोपः। एवं लोपे एमन् भवति।

॥१२५॥ म्म्युपान्त्वापार्थंसिसादयामिगायत्रेणत्वाच्छन्दंसासादयामि ॥१३।
त्रैष्टुंभेनत्वाच्छन्दंसासादयामिजागतेनत्वाच्छन्दंसासादया
म्म्यानुष्टुभेनत्वाच्छन्दंसासादयामिपाङ्क्तेनत्वाच्छन्दंसासाद
यामि ॥ ५३ ॥ [ १-६ ] अयम्पुरः ॥ अयम्पुरोभुवस्त्तस्यं
प्प्राणोभौवायनोव्वंसन्तःप्प्राणायनोगायत्रीव्वासन्तीगायत्र्यै
गायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतोरथन्तरंव्वसिष्ठऽ ॥१३५।
ऋषिंःप्प्रजापतिगृहीतयात्त्वयाप्प्राणङ्गृह्णामिप्प्रजाब्भ्यंः

॥ ५४ ॥ अयन्दक्षिणा । व्विश्वकर्म्मातस्यमनोव्वैश्वकर्म्मणङ्ग्री
ष्मोमानसस्त्रिष्टुब्ग्रैष्मीत्रिष्टुभः स्वारꣳस्वारादन्तर्य्यामोन्त
र्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्रजापतिगृही
तयात्त्वयामनोगृह्णामिप्रजाभ्यः ॥ ५५ ॥ अयम्पश्चात् ॥
अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्व्वैश्वव्यचसंव्वर्षाश्चाक्षु
ष्योजगतीव्वार्षीजगत्त्याऽऋक्सममृक्समाच्छुक्रः शुक्रात्सप्त
दशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतयात्त्वया

॥१२६॥ चक्षुर्गृह्णामिप्प्रजाभ्य्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्त
रात्त्स्वस्त्तस्य्यश्श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्प्शारद्यनुष्टुभꣳऽऐ
डमैडान्न्मन्थीमन्थिनꣳऽएकविꣳशऽएकविꣳशाद्वैराजंव्वि[1]श्श्वामि
त्रऽऋषिः प्प्रजापतिगृहीतयात्त्वयाश्श्रोत्रङ्गृह्णामिप्प्रजाभ्य्यः
॥ ५७ ॥ इयमुपरिमतिस्त्तस्यैव्वा[2]ङ्मात्त्याहैमन्तोव्वाच्च्यःप
ङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनंवन्निधनंवतऽआग्ग्रयणऽआग्ग्रयणात्त्रि ॥ १२६ ॥

१ विश्वामित्रः । अत्र नरहामित्रेषु च (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन मित्रशब्दपरे विश्वशब्दस्य दीर्घाकारः । २ वाक्मात्या इति पदम् । पञ्चमेऽपञ्चमम् । (शु. य. प्रा. ४ अ. १२१ सू.) पञ्चमे स्पर्शे प्रत्यये परेऽपञ्चमः पञ्चममापद्यते । इत्यनेन ककारस्य पञ्चमे स्वरे पञ्चमः । वाङ्मात्या ।

णवत्रयस्त्रिꣳशौत्रिणवत्रयस्त्रिꣳशाभ्याꣳशाक्वररैवतेव्विश्वक
र्म्माऽऋषिः प्प्रजापतिगृहीतयात्त्वयाव्वाचङ्गृह्णामिप्प्रजाभ्यो
लोकन्ताऽइन्द्रम् ॥ ५८ ॥ [५-७] इतिश्रीवाजसनेयसंहि
तायांत्रयोदशोऽध्यायः ॥ १३ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम् ॥ ध्रुवक्षितिर्षट्, सजूर्ऋतुभिर्द्विका, मूर्द्धाव्वयो
द्विका, इन्द्राग्नीऽअव्यथमानाꣳषडा, युमेंषडा, शुक्निवृदेका,

१ अध्यायः १२-लोकंपृण. १ । ताऽअस्य. २ । इंद्रंविश्वाः. ३ ॥ इति प्रतीकानि ॥
५४ ५५ ५६

ग्नेभोगोसिचतुष्कै,कयाचतुष्का,ष्टावेकत्रिꣳशत् [ अ. १४
मं. ३१ अनु. ८ ] ॥ हरिः ॐ ॥ ध्रुवक्षितिर्द्ध्रुवयोनिꣳ ॥
ध्रुवाक्षितिर्द्ध्रुवयोनिर्द्ध्रुवासिंद्ध्रुवँय्योनिमासीदसाधुया ॥ उक्ख्यं
स्यकेतुम्प्रथमञ्जुषाणाश्विनाद्ध्वर्य्यूसादयतामिहत्वा ॥ १ ॥
कुलायिनीघृतवती ॥ कुलायिनीघृतवतीपुरन्धिꣳस्योनेसीदुस
दनेपृथिव्याः ॥ अभित्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपि ॥१२७॥

१ ध्रुवयोनिः ॥ अत्र समानपदे ऋवर्णेभ्यः स्वरयवइकवैश्च ( शु. य. प्रा. ३ अ. ६२ सू. ) इत्यनेन णत्वप्राप्तौ इन्द्राग्नी चित्रभानो० ( य. शु. प्रा. ३ अ. ९३ सू. ) इत्यनेन णत्वनिषेधः ।

हिसौभंगायाश्विनोर्द्ध्वर्य्यूसादयतामिहत्त्वा ॥ २॥ स्वैर्दक्षैः॥
स्वैर्दक्षैर्दक्षपितेहसीदद्देवानांꣳसुम्म्नेबृहतेरणाय ॥ पितेवैधि
सूनवऽआसुशेवांस्वावेशातन्न्वासंविशस्वाश्विनोर्द्ध्वर्य्यूसादयता
मिहत्त्वा ॥ ३ ॥ पृथिव्व्याःपुरीषम् ॥ पृथिव्व्याःपुरीषमस्य
प्सोनामतान्त्वाविश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतव
तीहसीदप्प्रजावदस्म्मेद्द्रविणायंजस्वाश्विनोर्द्ध्वर्य्यूसादयतामि
हत्त्वा ॥४॥ अदित्यास्त्त्वा । पृष्ठेसादयाम्म्यन्तरिक्षस्यधर्त्री

शु. य. संहि. त्रिष्टुब्भ्वनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्द्रप्सोऽ पू. अ.
॥१२८॥ अपामसि विश्वकर्म्मा तऽऋषिरश्विनाऽध्वर्य्यू सादयतामिह त्वा ॥ १४ ॥
॥५॥ शुक्रश्च ॥ शुक्रश्च शुचिश्च ग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषो
ऽसि कल्पेतान्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्ता
मग्नयः पृथङ्मम ज्यैष्ठ्याय सव्व्रताः ॥ येऽअग्नयः समनसो
ऽन्तरा द्यावापृथिवीऽइमे ॥ ग्रैष्म्मावृतूऽअभिकल्पमानाऽइन्द्र ॥१२८॥
मिव देवाऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥६॥

[६-१] सजूर्ऋतुभिः। सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधै
रग्नये त्वा वैश्वानराया श्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतु
भिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वै
श्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्वि
धाभिः सजूरुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्वि
नाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरा
दित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सा

सं. २४

३५९

दयतामिहत्त्वांसजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्व्विश्वैर्द्देवैः स
जूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वाव्वैश्वानरायाश्विनांद्ध्वर्य्यूसादयतामि
हत्त्वा ॥ ७॥ प्राणम्मे । पाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षु
र्म्मऽउर्व्याविभाहिश्श्रोत्रम्मेश्श्लोकय॥ अपः पिन्वौषधीर्जिन्व
द्विपादवचतुष्प्पात्त्पाहिदिवोवृष्टिमेरय ॥ ८ ॥ [ २-२ ] मूर्द्धा
व्वयः । प्प्रजापतिश्छन्दःक्षत्रंव्वयोमयन्दञ्छन्दोव्विष्टम्भो
व्वयोधिपतिश्छन्दोव्विश्वकर्म्मावयः परमेष्ठीच्छन्दोबस्तो

वयोविबलञ्छन्दोवृष्णिर्वयोविशालञ्छन्दःपुरुषोवयस्त
न्द्रञ्छन्दोव्याघ्रोवयोनाधृष्टञ्छन्दःसिंहोवयश्छदिश्छ
न्दःपष्ठवाड्वयोबृहतीच्छन्दऽउक्षावयःककुप्छन्दऽऋषभो
वयःसतोबृहतीच्छन्दोनड्वान्वयः ॥९॥ अनड्वान्वयः । पङ्क्ति
श्छन्दोधेनुर्वयोजगतीच्छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दोदित्य
वाड्वयोविराट्छन्दःपञ्चाविर्वयोगायत्रीच्छन्दस्त्रिवत्सोवयऽउ
ष्णिक्छन्दस्तुर्यवाड्वयोनुष्टुप्छन्दोलोकन्ताऽइन्द्रम् ॥१०॥

१ अध्यायः १२ लोकंपृण. १ ताऽअस्य. २ । इन्द्रंविश्वाः. ३ ॥ इति प्रतीकानि ॥
५४ ५५ ५६

शु. य. [ २-३ ] इन्द्राग्नीऽअव्यथमानाम् ॥ इन्द्राग्नीऽअव्यं पू. अ.
संहि. थमानामिष्टकान्दृꣳहतँयुवम् ॥ पृष्ठेनद्यावापृथिवीऽअन्त ॥ १४ ॥
॥१४०॥ रिक्षञ्चविबाधसे ॥ ११ ॥ विश्वकर्म्मात्त्वा । सादयत्त्वन्त
रिक्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षँयच्छान्तरिक्ष
न्दृꣳहान्तरिक्षम्माहिꣳसीः ॥ विश्वस्मैप्प्राणायापानाय
व्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्व ॥ १४० ॥
स्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥

शतम् ॥ ७०० ॥ राज्ञ्यसि ॥ राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक् ॥ १३ ॥ विश्वकर्म्मा त्त्वा । सादयत्त्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १४ ॥ नभश्च । नभस्यश्च वार्षिकावृतू

१ वायुष्टे । अत्र वायुस्ते इति पदम् । "वायुरग्निरग्नेरेकाक्षरे" (शु. य. प्रा. ३ अ. ५७ सू.) इत्यनेन एकाक्षरे पदे परे वायुः अग्निः अग्नेः एतेषां विसर्गस्य षत्वं भवति । ततः द्वित्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन द्वित्वे रूपम् ।

अग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओ
षधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽ
अग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअ
भिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गि
रस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्च ॥ इषश्चोर्जश्चशारदा
वृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामा ॥१४१॥
पऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥

येऽअग्नयः समनसोन्तरा द्यावापृथिवीऽइमे ॥ शारदावृतूऽ
अभिकल्पमानाऽइन्द्रमिव देवाऽअभिसंविशन्तु तया देवतया
ङ्गिरस्वद्ध्रुवे सीदतम् ॥ १६ ॥ [ ६-३ ] आयुर्म्मे । पाहि प्रा
णम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षुर्म्मे पाहि श्रोत्रम्मे
पाहि वाचम्मे पिन्व मनो मे जिन्वात्मानम्मे पाहि ज्योतिर्म्मे य
च्छ ॥ १७ ॥ माच्छन्दः । प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्त्री
वयः[१]च्छन्दः पङ्क्तिश्छन्दऽउष्णिक्छन्दो बृहतीच्छन्दोनुष्टु

१ अत्र "अस्त्रीवयश्छन्दः" इत्यत्र "चछयोः शम्" इत्यनेन यकारोत्तरवर्तिनो विसर्जनीयस्य शकारः ।

प्प्छन्दोंव्विराट्छन्दोंगायत्रीच्छन्दस्त्रिष्टुप्प्छन्दोजगतीच्छन्दः
॥ १८ ॥ पृथिवीच्छन्दः ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दो
द्यौश्छन्दः समाश्छन्दोनक्षत्राणिच्छन्दोव्वाक्छन्दोमन
श्छन्दः कृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दो
श्वश्छन्दः ॥ १९ ॥ अग्निर्द्देवता ॥ अग्निर्द्देवताव्वातोदेव
तासूर्य्योदेवताचन्द्रमादेवताव्वसवोदेवतारुद्रादेवतादित्यादेव ॥ १४२ ॥
तामरुतोदेवताव्विश्वेदेवादेवताबृहस्पतिर्द्देवतेन्द्रोदेवताव्वरुणो

दे॒वता॑ ॥ २० ॥ मू॒र्द्धासि॑ ॥ मू॒र्द्धासि॒ राड्ध्रु॒वासि॑ ध॒रुणा॑ ध॒र्त्र्य॑सि॒
धर॑णी ॥ आयु॑षे त्वा॒ वर्च॑से त्वा कृ॒ष्यै त्वा॒ क्षेमा॑य त्वा ॥ २१ ॥
य॒न्त्री राट् ॥ य॒न्त्री राड्य॒न्त्र्य॑सि॒ यम॑नी ध्रु॒वासि॒ धरि॑त्री ॥ इ॒षे त्वो॒
र्जे त्वा॑ र॒य्यै त्वा॒ पोषा॑य त्वा॒ लो॒कं ता॒ऽइन्द्र॑म् ॥ २२ ॥ [ ६-५ ]
आ॒शुस्त्रि॒वृत् ॥ आ॒शुस्त्रि॒वृद्भा॒न्तः प॑ञ्च॒द॒शो व्यो॒मा स॑प्तद॒शो ध॒रु
णं॒ऽएक॑वि॒ꣳश॒: प्रतू॑र्त्तिरष्टाद॒शस्तप॑ो नवद॒शो॒ऽभीव॒र्त्त॒: स॑वि॒ꣳशो

१ अध्याय १२–लोकंपृण. ५४ १–ताऽअस्य. ५५ २। इंद्रंविश्वाः. ३ ५६ ॥ इति प्रतीकानि ॥ २ अभीवर्त्तः। अत्र "अश्वरश्मिमतिसुमतिस्वसुत-
धारयधृणिसेदिमेन्द्रियधारयविश्वभक्षुरवसुनाश्वस्वहृदयधुर्य्यसाध्यवताभ्यर्षशक्तिपुरुशाचि वकारे" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे
अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकारः।

वर्च्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्ब्भाः
पञ्चविꣳशऽओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो
ब्रध्नस्य[1] विष्टपं चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्त्तोऽष्टाचत्वारिꣳ
शो धर्त्रं चतुष्टोमः ॥ २३ ॥ [ १-६ ] अग्नेर्भागः ॥ अग्नेर्भा
गोऽसि दीक्षायाऽआधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमऽइन्द्रस्य भा



---

1 ब्रध्नस्य । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन द्वित्वम् । न त्वत्र धकारोत्तरवर्तिनो नकारस्य स्ववर्गीयत्वेन स्ववर्गीये चानुत्तमे (शु. य. प्रा. ४ अ. ११५ सू.) इत्यनेन निषेधः । तस्यानुत्तमे एव स्ववर्गीये वर्णपरे निषेधात् । अत्र तु अनुनासिकाश्चोत्तमाः (य. शु. प्रा. १ अ. ८९ सू.) इत्यनेन वर्गोत्तमा ङञणनमाः ( वर्गोत्तमसंज्ञकाः ) अनुनासिका भवन्ति । इति धकारोत्तरवर्तिनो नकारस्य वर्गोत्तमत्वात्तदतिरिक्तेषु वर्णपरेषु स्ववर्गीयेष्वेव द्वित्वनिषेधो बोध्यः । एवं तत्तत्स्थलेषु ज्ञेयम् ।

गोसिविष्णोराधिपत्त्यङ्क्षत्रᳪंस्पृतम्पञ्चदशस्त्तोमोनृचक्षं

साम्भागोसिधातुराधिपत्त्यञ्जनित्रᳪंस्पृतᳫंसप्तदशस्त्तोमो

मित्रस्यभागोसिवरुणस्याधिपत्त्यन्दिवोवृष्टिर्व्वातंस्पृतऽएक

विᳫंशस्त्तोमोव्वसूंनाम्भागः ॥ २४ ॥ व्वसूंनाम्भागः ॥ व्वसूं

नाम्भागोसिरुद्राणामाधिपत्त्यञ्चतुष्पात्स्पृतञ्चतुर्व्विᳫंशस्त्तो

मऽआदित्त्यानाम्भागोसिमरुतामाधिपत्त्यङ्गर्भास्पृताःपञ्च

विᳫंशस्त्तोमोदित्त्यैभागोसिपूष्णऽआधिपत्त्यमोजंस्पृतन्त्रि

णवस्त्तोमोदेवस्यसवितुर्भागोसिबृहस्पतेराधिपत्त्यᳪसमी
चीर्द्दिशस्पृताश्चतुष्टोमस्त्तोमोयवानाम्भागः ॥ २५ ॥ यवा
नाम्भागः ॥ यवानाम्भागोस्ययवानामाधिपत्त्यम्प्रजास्पृता
श्चतुश्चत्त्वारिᳪशस्त्तोमऽऋभूणाम्भागोसिविश्वेषान्देवानामा
धिपत्त्यम्भूतᳪस्पृतन्त्रयस्त्रिᳪशस्त्तोमः सहश्च ॥ २६ ॥ सह
श्च । सहस्यश्चहैमन्तिकावृतूऽअग्नेरन्तः श्लेषोसिकल्पेतान्द्या
वापृथिवीकल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम

मुज्यैष्ठ्यायसव्व्रताः॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽ
इमे ॥ हैमन्तिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभि
संविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥२७॥ [४-७] एक
यास्तुवत। प्प्रजाऽअधीयन्तप्प्रजापतिरधिपतिरासीत्तिसृभिर
स्तुवतब्ब्रह्मासृज्यतब्ब्रह्मणस्प्पतिरधिपतिरासीत्पञ्चभिरस्तु
वतभूतान्यसृज्यन्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तु

१ तिसृभिः। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षत्वप्राप्तौ "ऋकाररेफारुदयश्च" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन यत्र ऋकारोदयः, रेफोदयः, अरुदयश्च सकारस्तत्र प्रकृत्या स्यात्तेनात्र सस्य ऋकारोदयत्वान्न षत्वम्।

वतसप्तऽऋषयोऽसृज्यन्तधाताधिपतिरासीन्नवभिरस्तुवत
॥१४५॥ ॥२८॥ नवभिरस्तुवत। पितरोऽसृज्यन्तादितिरधिपत्न्यासीदे
कादशभिरस्तुवतऽऋतवोऽसृज्यन्तार्त्तवाऽअधिपतयऽआसँस्त्र
योदशभिरस्तुवतमासाऽअसृज्यन्तसंवत्त्सरोधिपतिरासीत्त्प
ञ्चदशभिरस्तुवतक्क्षत्त्रमसृज्यतेन्द्रोधिपतिरासीत्त्सप्तदशभि
रस्तुवतग्ग्राम्म्याः पशवोऽसृज्यन्तबृहस्प्पतिरधिपतिरासीन्नव ॥ १४५ ॥
दशभिरस्तुवत॥२९॥नवदशभिरस्तुवत।शूद्राय्यावसृज्येता

महोरात्रेऽअधिपत्नीऽआस्तामेकविꣳशत्त्यास्तुवतैकशफाः
पशवोसृज्ज्यन्तव्वरुणोधिपतिरासीत्त्रयोविꣳशत्त्यास्तुवतक्षु
द्राःपशवोसृज्ज्यन्तपूषाधिपतिरासीत्पञ्चविꣳशत्त्यास्तुवतार
ण्याःपशवोसृज्ज्यन्तव्वायुरधिपतिरासीत्सप्तविꣳशत्त्यास्तुव
तद्यावापृथिवीव्व्यैतांव्वसवोरुद्राऽआदित्त्याऽअनुव्व्यायँस्तऽए
वाधिपतयऽआसन्नवविꣳशत्त्यास्तुवत ॥३०॥ नवविꣳशत्त्या
स्तुवत ॥ नवविꣳशत्त्यास्तुवतव्वनस्प्पतयोसृज्ज्यन्तसोमोधि

पतिरासीदेकंत्रि६ँशतास्तुवतप्प्रजाऽअसृज्यन्तयवाश्चायवा
श्चाधिपतयऽआसँस्त्रयंस्त्रि६ँशतास्तुवतभूतान्यशाम्म्यन्प्प्रजा
पंतिःपरमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥ ३१ ॥ [ ४-८ ]
इतिश्रीवाजसनेयसंहितायांचतुर्दशोऽध्यायः ॥ १४ ॥ श्रीवेद
पुरुषायनमः ॥ अनुवाकसूत्रम् ॥ अग्नेजातान्पञ्च,रश्मिना
सत्यायचतस्रो,राज्ञ्यसिपञ्चा,यंपुरःपञ्चा,स्रिर्मूर्द्धैकोनत्रि६ँश, ॥१४६॥

१ अध्यायः १२-लोकंपृण. १-ताऽअस्य. २ । इंद्रग्निर्भाः. ३ इति प्रतीकानि ॥
॥ मंत्रः ॥ ५४ ५५ ५६

द्येनऽऋषयोष्टौ,तपश्चनव,सप्त पञ्चषष्टिः ॥ [ अ. १५ मं. ६५
अनु. ७ ] ॥ हरिः ॐ ॥ अग्नेजातान् ॥ अग्नेजातान्प्रणुदा
नꣳसपत्नान्प्रत्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअ
हेडँस्तवस्यामशर्म्मँस्त्रिवरूथऽउद्भौ ॥ १ ॥ सहसाजातान् ॥ सह
साजातान्प्रणुदानꣳसपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधि
नोब्रूहिसुमनस्यमानोव्वयꣳस्यामप्रणुदानꣳसपत्नान् ॥ २ ॥

---

१ प्रणुदानः । अत्र प्रनुदान इति पदम् । अत्र समानपदत्वाभावेन "ऋपरेभ्यः" इत्यनेन णत्वाप्राप्तौ "प्रनेतिनुदातिहिनोमीनाम्" ( शु. य. प्रा. ३ अ. ८९ सू. ) इत्यनेन प्रशब्दात्परे स्थितानामेतेषां नकारस्य णत्वविधानादत्र णत्वम् । तथा चात्र प्रनुद नः दकारोत्तरवर्तिनः ह्रस्वाकारस्य नकारे परे "धात्वयोव०" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारः ।

षोडशीस्त्तोमं÷ ॥ षोडशीस्त्तोमऽओजोद्द्रविणञ्चतुश्श्चत्त्वारिंह
शस्त्तोमोव्वर्च्चोद्द्रविणम् ॥ अग्ग्नेः पुरीषमस्यप्प्सोनामताँत्वा
व्विश्श्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्प्रजाव
दस्म्मेद्द्रविणायंजस्व ॥ ३ ॥ एवश्छन्दं÷ ॥ एवश्छन्दो
व्वरिवश्छन्दं÷शम्भूश्छन्दं÷परिभूश्छन्दंऽआच्छच्छन्दो
मनश्छन्दोव्यचश्छन्दं÷सिन्धुश्छन्दं÷समुद्द्रश्छन्दं÷स
रिरञ्छन्दं÷ककुप्छन्दंस्त्रिककुप्छन्दं÷काव्यञ्छन्दोऽअङ्कुप ॥ १४७ ॥

ञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छ
न्दः क्षुरो भ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ ४ ॥
आच्छच्छन्दः प्रच्छच्छन्दः । सँयच्छन्दो वियच्छन्दो बृ
हच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिर
श्छन्दो भ्रजश्छन्दः सँस्तुप्छन्दोनुष्टुप्छन्दऽएवश्छ
न्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्धाश्छ
न्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छ

शु. य. संहि. न्दोऽअङ्काङ्कञ्छन्दः ॥ ५ ॥ [ ५-१ ] रश्मिम्मनासत्त्या पू. अ.
यं । सत्त्यञ्जिन्वप्प्रेतिनाधर्म्मणाधर्म्मञ्जिन्वान्न्वित्त्यादिवादि ॥ १५ ॥
॥१४८॥ वञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्वप्प्रतिधिनापृथि
व्यापृथिवीञ्जिन्वविष्टम्भेनवृष्ट्यावृष्टिञ्जिन्वप्प्रवयाह्नाहर्ज्जि
न्वानुयारात्र्यारात्रीञ्जिन्वोशिजाव्वसुभ्भ्योव्वसूञ्जिन्वप्प्रकेते
नादित्त्येभ्भ्यऽआदित्त्याञ्जिन्वतन्तुनारायः ॥ ६ ॥ तन्तु ॥ १४८ ॥
नारायः ॥ तन्तुनारायस्प्पोषेणरायस्प्पोषञ्जिन्वसꣳसर्प्पेणश्श्रु

तायंश्रुतङ्ग्जिन्वैडेनौषंधीभिरोषंधीर्ज्जिन्वोत्तमेनंतनूभिस्तनू
र्ज्जिन्वद्वयोधसाधीतेनाधीतञ्जिन्वाभिजितातेजंसातेजोंजिन्व
॥ ७ ॥ प्रतिपदंसि । प्प्रतिपदैत्त्वानुपदंस्यनुपदैत्त्वासम्पदं
सिसम्पदैत्त्वातेजोंसितेजंसेत्त्वात्रिवृदंसि ॥ ८ ॥ त्रिवृदं
सि । त्रिवृतैत्त्वाप्प्रवृदंसिप्प्रवृतैत्त्वाव्विवृदंसिव्विवृतैत्त्वासवृदंसि
सवृतैत्त्वाक्क्रमोस्याक्क्रमायत्त्वासङ्क्रमोसिसङ्क्रमायत्त्वोत्क्रमोस्यु
त्क्रमायत्त्वोत्क्रान्तिरस्युत्क्रान्त्यैत्त्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्व

॥ ९ ॥ [४-२] राज्ञ्यसि ॥ राज्ञ्यसिप्प्राचीदिग्ग्वसवस्त्ते
॥१४९॥ देवाऽअधिपतयोग्ग्निर्हेतीनाम्प्रतिधर्त्तात्त्रिवृत्त्वास्त्तोमः पृथि ॥ १५ ॥
व्व्याᳪं श्रयत्त्वाज्ज्यमुक्क्थमव्व्यथायैस्त्तभ्नातुरथन्तरᳪं साम
प्प्रतिष्ठित्त्याऽअन्तरिक्क्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमा
त्त्रयाव्वरिम्म्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंवि
दानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ १० ॥ व्विरा ॥ १४९ ॥
डसि ॥ व्विराडसिदक्क्षिणादिग्ग्रुद्द्रास्त्तेदेवाऽअधिपतयऽइन्द्रो

हेतीनाम्प्रतिधर्त्ता पञ्चदशस्त्वा स्तोमः पृथिव्या ᳬ श्रयतु प्रऽ
उगमुक्थमव्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठित्याऽअन्तरि
क्षऽऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु
विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे
लोके यजमानञ्च सादयन्तु ॥ ११ ॥ सम्राडसि । प्रतीची
दिगादित्यास्ते देवाऽअधिपतयो वरुणो हेतीनाम्प्रतिधर्त्ता सप्त
दशस्त्वा स्तोमः पृथिव्या ᳬ श्रयतु मरुत्वतीयमुक्थमव्य

थायैस्त्तꣳभ्नातुवैरूपꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषय
स्त्वाप्प्रथमजादेवेषुदिवोमात्रयावरिम्णाप्प्रथन्तुविधर्त्ताचा
यमधिपतिश्चतेत्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमा
नञ्चसादयन्तु ॥१२॥ स्वराडसि॥ स्वराडस्युदीचीदिङ्मरुतस्ते
देवाऽअधिपतयःसोमोहेतीनाम्प्रतिधर्त्तैकविꣳशस्त्वास्तो
मःपृथिव्याꣳश्रयतुनिष्केवल्यमुक्थमव्यथायैस्त्तꣳभ्नातुवैरा ॥१५०॥
जꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवे

षुंदिवोमात्रंयाव्वरिम्म्णाप्प्रंथन्तुव्विधर्त्ताचायमधिपतिश्च्चतेत्त्वा
सर्व्वैसंविदानानाकंस्यपृष्ठेस्वर्ग्गैलोकेयजंमानञ्चसादयन्तु ।१३।
अधिपत्न्यसि। बृहतीदिग्विश्श्वेतेदेवाऽअधिपतयोबृहस्प्पतिर्हे
तीनाम्प्रतिधर्त्तात्रिंणवत्रयस्त्रिꣳशौत्त्वास्त्तोमौपृथिव्व्याꣳश्रय
तांवैश्श्वदेवाग्निमारुतेऽउक्क्थेऽअव्व्यथायैस्त्तब्भ्नीताꣳशाक्वररै
वतेसामंनीप्प्रतिंष्ठित्त्याऽअन्तरिक्क्षऽऋषंयस्त्वाप्प्रथमजादेवे
सं. २६ षुंदिवोमात्रंयाव्वरिम्म्णाप्प्रंथन्तुव्विधर्त्ताचायमधिपतिश्च्चतेत्त्वा

सर्व्वैसंविदानानाकंस्यपृष्ठेस्वुर्ग्गेलोकेयजंमानञ्चसादयन्तु ।१४।
॥१५१॥ [ ५-३ ] अयम्पुरः ॥ अयम्पुरोहरिंकेशः सूर्य्यरश्मिस्तस्य ॥ १५ ॥
रथगृत्सश्चरथौजाश्चसेनानीग्ग्रामण्ण्यौ ॥ पुञ्जिकस्थलाचक्र
तुस्थलाचाप्सरसौदुङ्क्ष्णवः पशवोहेतिः पौरुषेयोवधः प्प्रहेति
स्त्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्च
नोद्वेष्टितमेषाञ्जम्भेदध्मः ॥१५॥ अयन्दक्षिणा। विश्वकर्म्मा ॥ १५२ ॥
तस्यरथस्वनश्चरथेचित्रश्चसेनानीग्ग्रामण्ण्यौ ॥ मेनकाचसहज

न्याचाप्प्सरसौयातुधानाहेतीरक्षाᳬं᳚सिप्प्रहेतिस्त्तेभ्योन
मोऽअस्त्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्म्मोयश्च्चनोद्वेष्टितमे
षाञ्जम्भेदद्ध्मः ॥ १६ ॥ अयम्पश्च्चात् ॥ अयम्पश्च्चाद्विश्श्वव्यं
चास्त्तस्यरथप्प्रोतश्च्चासंमरथश्च्चसेनानीग्ग्रामण्ण्यौ ॥ प्प्रम्म्लो
चन्तीचानुम्म्लोचन्तीचाप्प्सरसौव्व्याग्घ्राहेतिश्सर्प्पाश्प्प्रहेति
स्त्तेभ्योनमोऽअस्त्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्म्मोयश्च्च
नोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ १७ ॥ अयमुत्त्तरात् ॥ अयमु

३८५

त्तुराट्सँय्यद्द्वसुस्तस्यताक्‌र्क्ष्यश्श्चारिष्टनेमिश्श्चसेनानीग्ग्राम
ण्ण्यौ ॥ व्विश्श्वाचीचघृताचीचाप्प्सरसावापोहेतिर्व्वातःप्प्रहेति ॥ १५ ॥
॥१५२॥ स्तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्ष्मोयश्श्च
नोद्द्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥१८॥ अयमुपरि ॥ अयमुपर्य्यर्व्वा
ग्ग्वसुस्तस्यसेनजिच्चसुषेणश्श्चसेनानीग्ग्रामण्ण्यौ ॥ उर्व्वशीचपू
र्व्वचित्तिश्श्चाप्प्सरसाववस्स्फूर्ज्जन्हेतिर्व्विद्द्युत्प्प्रहेतिस्तेब्भ्योनमोऽ ॥ १५२ ॥
अस्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्ष्मोयश्श्चनोद्द्वेष्टितमेषा

ऊर्ग्भेदद्ध्मर्ह ॥ १९ ॥ [५-४] अग्निर्म्मूर्द्धा । दिवङ्कुकु
त्त्पतिः पृथिव्याऽअयम् ॥ अपाᳩरेताᳩसिजिन्न्वति ॥ २० ॥
अयमग्निः । सहस्त्रिणोव्वाजस्यशतिनस्प्पतिः ॥ मूर्द्धाकवी
रयीणाम् ॥ २१ ॥ त्वामग्ने ॥ त्वामग्नेपुष्करादध्यथर्व्वानिर
मन्थत ॥ मूर्द्ध्नोव्विश्वस्यव्वाघतः ॥ २२ ॥ भुवोयज्ञस्य ॥ भुवोय
ज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्द्धा
नन्दधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ २३ ॥ अबोध्य

ग्निः । समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽ
॥१५३॥ इवप्प्रवयामुज्जिहानाःप्प्रभानवः सिस्रतेनाकमच्छ ॥ २४ ॥ ॥ १५ ॥
अवोचामकवये ॥ अवोचामकवयेमेद्ध्यायवचोवन्दारुवृषभा
यवृष्णे ॥ गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्व्यञ्च
मश्श्रेत् ॥ २५ ॥ अयमिह । प्प्रथमोधायिधातृभिर्होतायजि
ष्ठोऽअद्ध्वरेष्ष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्व्वनेषुचित्रं ॥१५३॥

१ धेनुमिवायतीमुषासम् । अत्र ईम्शब्दात्परस्य उपशब्दस्य कारस्य "उपमहोभिर्नेत्रेमी०" ( शु. य. प्रा. ३ अ. ११८ सू. ) इत्यनेन दीर्घः ।

विभ्वंविशेविशे ॥ २६ ॥ जनस्यगोपाः ॥ जनस्यगोपाऽअ
जनिष्टजागृविरग्निःसुदक्षःसुवितायनव्यसे ॥ घृतप्रतीको
बृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यःशुचिः ॥ २७ ॥
त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहितमन्वविन्दञ्छिश्रि
याणंवनेवने ॥ [२]संजायसेमथ्यमानःसहोमहत्त्वामाहुःसहस

---

१ दिविस्पृशाः । अत्र "भाविभ्यः सः पः समानपदे" इत्यनेन प्राप्तस्य षत्वस्य अनुसंतनोतुबृहस्पतिसुतस्थसुसमिद्वायसुसन्दृशमभिसत्वाऽभिसंविशन्तुसुसत्वाऽभितिस्थूलम्मुसलेरक्षीसंधाजानुकतुस्थलाजिसकथो दिविस्पृशा०" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वनिषेधः । २ सः जायसे । अत्र "व्यञ्जने च" (शु. य. प्रा. ३ अ. १६ सू.) इत्यनेन जायसे परे स इत्यस्य विसर्जनीयस्य लोपे सजायसे इति पदम् ।

शु. य. संहि. ॥१५४॥

रूपुत्रमङ्गिरः ॥ २८ ॥ सखायःसम् ॥ सखायःसंवःसम्य पू. अ.

ञ्चमिषःस्तोमञ्चाग्नये ॥ वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्व ॥ १५ ॥

ते ॥ २९ ॥ सःसमित् ॥ सःसमिद्युवसेवृषन्नग्नेविश्वान्यर्य

ऽआ ॥ इडस्पदेसमिध्यसेसनोवसून्याभर ॥ ३० ॥ त्वाञ्चि

त्रश्रवस्तम ॥ त्वाञ्चित्रश्रवस्तमहवन्तेविक्षुजन्तवः ॥

शोचिष्केशम्पुरुप्प्रियाग्नेहव्यायवोढवे ॥ ३१ ॥ एनावः ॥ ॥१५४॥

१ इडः पदे इति पदम् । अत्र "आविनिरिडइडाया वसनिर्देविः" (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन विसर्जनीयस्य ककारपकारपरयोः सकारः पकारश्च यथायोगं विधीयते । इडस्पदे इति रूपम् ।

एनावोऽअग्निन्नमसोर्ज्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिᳮ
स्वद्ध्वरंव्विश्श्वस्यदूतममृतम् ॥ ३२ ॥ व्विश्श्वस्यदूतम् ॥ व्विश्श्वस्य
दूतममृतंव्विश्श्वस्यदूतममृतम् ॥ सयोजतेऽअरुषाव्विश्श्वभोजसा
सदुद्द्रवत्त्स्वाहुतᳮ ॥ ३३ ॥ सदुद्द्रवत् ॥ सदुद्द्रवत्त्स्वाहुतᳮसदुद्द्र
वत्त्स्वाहुतᳮ ॥ सुब्रह्मायज्ञश्श्सुशमीव्वसूनान्देवᳬराधोजनाना
म ॥ ३४ ॥ अग्ग्नेव्वाजस्य ॥ अग्ग्नेव्वाजस्यगोमतऽईशानᳮसहसो
यहो ॥ अस्म्मेधेहिजातवेदोमहिश्श्रवः ॥ ३५ ॥ सऽइधानश्श् ॥

सऽइ॑धा॒नो व॒सु॑ष्क्क॒वि॑र॒ग्निरी॒डेन्न्यो॒ गि॒रा ॥ रे॒वद॒स्म्मभ्य॑म्पुर्व्वणी
कदीदिहि ॥ ३६ ॥ क्षपो॑ राजन् ॥ क्षपो॑ राजन्नु॒त त्क्मना॒ग्ने वस्तो॑
रु॒तोषस॑ः ॥ स ति॑ग्ग्मजम्भ र॒क्क्षसो॑ दह॒ प्प्रति॑ ॥ ३७ ॥ भ॒द्रो न॑ः ॥
भ॒द्रो नो॑ऽअ॒ग्निराहु॑तो भ॒द्रा रा॒तिः सु॑भग भ॒द्रोऽअ॑द्ध्व॒रः ॥ भ॒द्राऽ
उ॒त प्प्रश॑स्त्तयः ॥ ३८ ॥ भ॒द्राऽउ॒त । प्प्रश॑स्त्तयो भ॒द्रम्मन॑ः
कृणुष्व वृत्र॒तूर्य्यैं ॥ येना॑ स॒मत्त्सु॑ सा॒सह॑ः ॥ ३९ ॥ येना॑ स॒म ॥१५५॥

१ वसुष्कविः इति। "कविष्करःकृधिषु" (शु. य. प्रा. ३ अ. ३२ सू.) इत्यनेन कविः करत् कृधिः एतेषु परेषु विसर्जनीयस्य सकारः षकारश्च भवति। तेनात्र कविः परे पूर्वविसर्जनीयस्य षकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वम्।

त्सु । सासहोवंस्थिरातंनुहिभूरिशर्द्धंताम् ॥ त्वनेमातेऽअभि
ष्टिंभिः ॥ ४० ॥ अग्निन्तम् ॥ अग्निन्तम्मंन्न्येयोव्वसुरस्तँ
य्यँय्यन्तिधेनवंः ॥ अस्तमर्व्वन्तऽआशवोस्तन्नित्त्यासोव्वा
जिनऽइषंँस्तोतृब्भ्यऽआभर ॥ ४१ ॥ सोऽअग्निः[1] ॥ सोऽ
अग्निर्य्योव्वसुर्गृणेसँय्यमायन्तिधेनवंः ॥ समर्व्वन्तोरघु
द्रुवंःसँसुजातासंःसूरयऽइषंँस्तोतृब्भ्यऽआभर ॥ ४२ ॥
उभेसुश्चन्द्र । सर्प्पिषोदर्व्वीश्श्रीणीषऽआसनिं ॥ उतोनऽउत्पु

1 सोऽअग्निः । अत्र "व्यञ्जने" च (शु. य. प्रा. ३ अ. १७ सू.) इति सूत्रे व्यञ्जने परे एव विसर्गस्य लोपविधानान्न लोपस्ततो विसर्गस्य सत्वे

॥१५६॥ पूर्व्याऽउक्थेषुंशवसस्पतऽइषᳪंस्तोतृभ्युऽआभंर ॥ ४३ ॥ ॥ १५ ॥

अग्नेतम् ॥ अग्नेतमुद्याश्वुन्नस्तोमैंःक्रतुन्नभुद्रꣳहृंदिस्पृ

शम् ॥ ऋुध्यामांतुऽओहैंः ॥ ४४ ॥ अधाुहि ॥ अधाु

ह्यग्नेक्रतोंर्भुद्रस्युदक्षंस्यसाुधोः ॥ रथीर्ऋुतस्यंबृहुतो

बुभूथ ॥ ४५ ॥ एुभिर्न्नः ॥ एुभिर्न्नोऽअुर्कैर्भवांनोऽअुर्वा

ङ्स्वुर्ण्णज्ज्योतिः ॥ अग्नेुविश्वेंभिःसुमनाुऽअनींकैः ॥ ४६ ॥ ॥१५६॥

ओत्वे सोऽअग्निः इति पदम् । २ सुश्चन्द्रः । अत्र "चन्द्रेसु शकारेण" (शु. य. प्रा. ३ अ. ५४ सू.) इत्यनेन चन्द्रशब्दे परे सुशब्दः शकारेण व्यवधीयते । तत "ऊष्मान्तस्थाभ्यश्च" स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन चकारस्य द्वित्वम् ।

अग्निꣳहोतारम् ॥ अग्निꣳहोतारम्मन्न्येदास्वन्तंव्वसुꣳसूनुꣳ
सहसोजातवेदसंव्विप्प्रन्नजातवेदसम् ॥ यऽऊर्द्ध्वयास्वध्वरोदेवो
देवाच्याकृपा ॥ घृतस्यविब्भ्राष्टिमनुवष्टिशोचिषाजुह्वानस्य
सर्प्पिषः ॥ ४७ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वन्नोऽअन्तमऽउत
त्त्राताशिवोभवावरूत्थ्यः ॥ व्वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षि
द्युमत्तमꣳरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवःसुम्न्नायनूनमी
सं. २७ महेसखिब्भ्यः ॥ ४८ ॥ [ २९-५ ] येनऽऋषयः ॥ येनऽऋषय

स्तपसासत्रमायन्निन्धानाऽअग्निᳪस्वराभरन्तः ॥ तस्मिन्न
हन्निदधेनाकेऽअग्निर्यमाहुर्म्मनवस्तीर्ण्णबर्हिषम् ॥ ४९ ॥
तम्पत्नीभिः ॥ तम्पत्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्भ्रातृभिरुत
वाहिरण्ण्यैः ॥ नाकङ्गृब्भ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधि
रोचनेदिवः ॥ ५० ॥ आवाचः ॥ आवाचोमद्ध्यमरुहद्भुर
ण्ण्युरयमग्निःसत्त्पतिश्चेकितानः ॥ पृष्ठेपृथिव्व्यानिहितोदवि ॥ १५७ ॥
द्युतदधस्पदङ्कृणुताँय्येपृतन्न्यवः ॥ ५१ ॥ अयमग्निः ॥

अयमग्निर्व्वीरतमोव्वयोधाःसहस्रियोद्द्योततामप्प्रयुच्छन्॥ वि
भ्राजमानꣳसरिरस्यमद्ध्यऽउपप्प्रयाहिदिव्यानिधाम ॥ ५२॥
सम्प्रच्यवध्वमुप। सम्प्रयाताग्नेपथोदेवयानाङ्कृणुध्वम्॥ पुनः
कृण्वानापितरायुवानान्वाताꣳसीत्त्वयितन्तुमेतम् ॥ ५३॥
उद्बुध्यस्व ॥ उद्बुध्यस्वाग्नेप्प्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथा
मयञ्च॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमा
नश्चसीदत ॥ ५४॥ येनवहसि। सहस्रँय्येनाग्नेसर्व्ववेद

सम् ॥ तेनेमँ२ँ यज्ञन्नोनयस्वर्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते ॥
अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽअरोचथाः ॥ तञ्जानन्न
ग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५६ ॥ [ ८-६ ] तपश्च ॥
तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्या
वापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्मम
ज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽ ॥ १५८ ॥
इमे ॥ शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसं

विंशन्तुतयांदेवतंयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ५७ ॥ परमेष्ठी

त्त्वां । सादयतुदिवस्पृष्ठेज्ज्योतिष्मतीम् ॥ व्विश्वंस्मैप्प्राणा

यांपानायंव्यानायव्विश्वञ्ज्योतिर्य्यच्छ ॥ सूर्य्यस्तेधिपतिस्त

यांदेवतंयाङ्गिरस्वद्ध्रुवासीद ॥ ५८ ॥ लोकम्पृण । च्छिद्रम्पृ

णाथोसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्नीत्त्वाबृहस्प्पतिरस्मिन्न्योनां

वसीषदन् ॥ ५९ ॥ ताऽअंस्य ॥ ताऽअस्यसूददोहसंसोमंᳫं

१ दिवस्पृष्ठे । इत्यत्र "दिवोऽककुत्पृथिव्योः" (शु. य. प्रा. ३ अ. २४ सू.) इत्यनेन दिवः सम्बन्धिनः विसर्गस्य षकारत्वम् ।

श्रीणन्तिपृश्नंयं ॥ जन्मंन्देवानांविशस्त्रिष्ष्वारोचनेदिवः
॥ ६० ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वांऽअवीवृधन्त्समुद्रव्यंच
सङ्गिरः ॥ रथीतंमᳫं रथीनांवाजांनाᳫं सत्पंतिम्पतिम् ॥ ६१ ॥
प्रोथदश्वः ॥ प्रोथदश्वोनयवंसेविष्ष्यन्यदामहः संवरंणाद्व्य
स्त्थांत् ॥ आदंस्यवातोऽअनुंवातिशोचिरधंस्म्मतेव्व्रजंनङ्कृष्णम्
मंस्ति ॥ ६२ ॥ आयोष्ट्वा ॥ आयोष्ट्वासदंनेसादयाम्म्यवंत
श्छायायांᳫं समुद्रस्यहृदंये ॥ रश्म्मीवतीम्भास्वंतीमायाद्या



॥१५८

म्भास्या पृथिवीमोर्वन्तरिक्षम् ॥ ६३॥ पुरमेष्ठीत्त्वां । सादय
तुदिवस्पृष्ठेव्यचस्वतीम्प्रथस्वती न्दिवँय्यच्छदिवन्दृ६ँहदिव
म्मा हिँ६ँसीः ॥ व्विश्वस्म्मैप्प्राणायापानायव्यानायोदानाय
प्प्रतिष्ठायैचरित्राय ॥ सूर्य्यस्त्त्वाभिपातुमह्यास्वस्त्याच्छर्द्दि
षाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६४ ॥ सहस्रं
स्यप्प्रमासि । सहस्रंस्यप्प्रतिमासिसहस्रंस्योन्मासिसाहस्रोसि
सहस्रायत्त्वा ॥ ६५ ॥ [९-७] इतिश्रीवाजसनेयसंहितायां

४०१

पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक-
सूत्रम् ॥ नमस्तेषोडश, हिरण्यबाहव, ऽउष्णीषिणे, तक्षभ्यो,
ज्येष्ठायपञ्चकाः, स्रुत्यायचतस्रः, शंभवायैका, पार्य्यायपञ्च,
द्रापेऽअंधसोविꣳशति, र्नवषट्षष्टिः [अ. १६ मं. ६६ अनु.
९]॥ हरिः ॐ॥ नमस्ते ॥ नमस्तेरुद्रमन्यवंऽउतोतऽइषवेन
मंः ॥ बाहुभ्यांमुततेनमंः ॥ १ ॥ यातें । रुद्रशिवातनूरघो ॥१६०॥

१ नमस्ते। इत्यत्र "तथयोः सम्" (शु. य. प्रा. ३ अ. ८ सू.) इत्यनेन मकारोत्तरवर्तिनो विसर्जनीयस्य तकारे परे सकारे कृते नमस्ते इति सिद्ध्यति।

रापांपकाशिनी ॥ तयांनस्तन्न्वाशन्तंमयागिरिशन्ताभिचाक
शीहि ॥२॥ यामिषुंम् ॥ यामिषुङ्गिरिशन्तहस्त्तेबिभर्ष्यस्त्तवे ॥
शिवाङ्गिरित्रताङ्कुरुमाहिंᳬसीᳬंपुरुषञ्जगत् ॥ ३ ॥ शिवेनत्व
चंसा । त्त्वागिरिशाच्छांवदामसि ॥ यथांनᳬंसर्व्वमिज्जगदय
क्ष्मᳬंसुमनाऽअसंत् ॥ ४ ॥ अद्ध्यवोचत् ॥ अद्ध्यवोचदधिव
क्त्काप्प्रंथमोदैव्व्योभिषक् ॥ अहींश्र्श्चसर्व्वाञ्जम्भयन्त्सर्व्वाश्र्चयातु

१ अहीन् च । इत्यत्र "चच्छयोः शम्" (शु. य. प्रा. ३ अ. १३५ सू.) इत्यनेन नकारस्य चछयोः परयोः शकारं विधीयते उपधायामनुनासिकमपि । तथा अहींश्र्च इति कृते "ऊष्मान्तस्थास्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यने चकारस्य द्वित्वम् ।

धान्न्योधराचीꣳपरासुव ॥ ५ ॥ असौयः ॥ असौयस्ताम्म्रोऽ
॥१६१॥ अरुणऽउतबब्भ्रुःसुमङ्गलः ॥ येचैनꣳरुद्राऽअभितोदिक्क्षु[1]
श्रिताःसहस्रशोवैषाꣳहेडऽईमहे ॥ ६ ॥ असौयः ॥ असौयो
वसर्प्पतिनीलग्ग्रीवोव्विलोहितः ॥ उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्र
न्नुदहार्य्यꣳसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तु ॥ नमोस्तु
नीलग्ग्रीवायसहस्राक्क्षायमीढुषे॥अथोयेऽअस्यसत्त्वानोहन्ते ॥१६१॥

१ दिक्षुश्श्रिताः । अत्र दिक्षु इति पदम् । "करेफाभ्याञ्च" (शु. य. प्रा. ३ अ. ५८ सू.) इत्यनेन करेफाभ्यां सरस्य षकारस्य षत्वं विधीयते । तेनात्र सकारस्य षत्वे कषसंयोगे क्षः इति क्षत्वे रूपम् । "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र" (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन शकारस्य द्वित्वम् ।

ब्भ्योकरन्नमः ॥ ८ ॥ प्रमुंञ्च ॥ प्रमुंञ्चधन्न्वंनस्त्त्वमुभयो
रार्त्न्योंज्ज्याम् ॥ याश्चंतेहस्त्तऽइषवःपरातांभगवोव्वप ॥ ९ ॥
व्विज्ज्यन्धनुः कपर्द्दिनोव्विशंल्ल्योबाणवाँ२॥ऽउत ॥ अनेश
न्नस्ययाऽइषवऽआभुरंस्यनिषङ्गधिः ॥ १० ॥ यातें । हेति
र्म्मीढुष्ट्टमहस्त्तेबभूवंतेधनुः ॥ तयास्म्मान्विश्वतस्त्त्वमंय
क्ष्मयापरिंभुज ॥ ११ ॥ परिंते ॥ परिंतेधन्न्वंनोहेतिरस्म्मा
न्वृंणक्कुव्विश्वतंः ॥ अथोयऽइषुधिस्त्तवारेऽअस्म्मन्निधेहि

तम् ॥ १२ ॥ अवतत्त्यधनुं ॥ अवतत्त्यधनुष्ट्व ᳬ सहस्राक्क्षशत
तेषुधे ॥ निशीर्य्यशल्ल्यानाम्मुखाशिवोनं सुमनाभव ॥ १३ ॥
नमस्त्ते ॥ नमस्त्तऽआयुधायानातताय धृष्ण्णवे ॥ उभा
भ्याम्मुततेनमोबाहुभ्यान्तवधन्न्वने ॥ १४ ॥ मानं ॥
मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्क्षन्तमुतमानऽउ
क्क्षितम् ॥ मानोव्वधीः पितरम्मोतमातरम्मानं प्प्रियास्त्तन्वो
रुद्ररीरिषः ॥ १५ ॥ मानस्त्तोके । तनयेमानऽआयुषिमानो

गोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हु
विष्मन्तः सदमित्त्वाहवामहे ॥ १६ ॥ [१६-१] शतम्
॥ ८०० ॥ नमोहिरण्ण्यबाहवे । सेनान्न्येदिशाञ्चपतयेनमो
नमोव्वृक्षेब्भ्योहरिकेशेब्भ्यः पशूनाम्पतयेनमोनमः शष्प्पिञ्ज
राय त्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपु
ष्टानाम्पतयेनमोनमोबब्भ्लुशाय ॥ १७ ॥ नमोबब्भ्लु
शाय । व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्त्यैजगताम्पत

सं. २८

१ त्विषिमते । अत्र शृणुतत्विषिप्रजिभवतपिवेतसतिष्ठरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे परे एते दीर्घा भवन्ति ।

शु. य. संहि. येनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमः सूताया पू. अ.
हन्त्यैवनानाम्पतयेनमोनमोरोहिताय ॥ १८ ॥ नमोरोहि ॥ १६ ॥
॥१६२॥ ताय । स्थपतयेवृक्षाणाम्पतयेनमोनमोभुवन्तयेवारिवस्कृ
तायौषधीनाम्पतयेनमोनमोमन्त्रिणेवाणिजायकक्षाणाम्पत
येनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः
कृत्स्नायतया ॥ १९ ॥ नमः कृत्स्नायतया । धावतेसत्त्व ॥ १६२ ।
नाम्पतयेनमोनमः सहमानायनिव्याधिनऽआव्याधिनीनाम्प

तयेनमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनि
चेरवेपरिचरायारण्यानाम्पतयेनमोनमोवञ्चते ॥ २० ॥ नमो
वञ्चते । परिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधि
मतेतस्कराणाम्पतयेनमोनमः सृकायिभ्योजिघांᳬसद्भ्यो
मुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्ता
नाम्पतयेनमः ॥ २१ ॥ [ ५-२ ] नमऽउष्णीषि
णे । गिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वा

यिभ्यश्चवोनमोनमऽआतन्वानेभ्यःप्रतिदधानेभ्यश्चवो
नमोनमऽआयच्छद्भ्योऽस्यद्भ्यश्चवोनमोनमोविसृजद्
भ्यः ॥ २२ ॥ नमोविसृजद्भ्यो । विध्यद्भ्यश्चवो
नमोनमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमःशयानेभ्य
ऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो
नमःसभाभ्यः ॥ २३ ॥ नमःसभाभ्यः । सभापति ॥१६४॥
भ्यश्चवोनमोनमोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽआव्या

धिनीभ्योविविध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृꣳह
तीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्यो
गणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोन
मोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरू
पेभ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमःसेनाभ्यः
सेनानिभ्यश्चवोनमोनमो रथिभ्योऽअरथेभ्यश्चवोनमोन
मःक्षत्तृभ्यःसङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भके

॥१६५॥ भ्य॑श्च वो नमः॑ ॥ २६ ॥ [ ५-३ ] नम॒स्तक्ष॑भ्यो ।
र॒थका॒रेभ्य॑श्च वो॒ नमो॒ नम॒ः कुला॑लेभ्य॒ः कुम्मा॒रेभ्य॑श्च वो॒ नमो॒
नमो॑ निषा॒देभ्य॑ः पु॒ञ्जिष्टे॑भ्यश्च वो॒ नमो॒ नम॑ः श्व॒निभ्यो॑ मृग॒यु
भ्य॑श्च वो॒ नमो॒ नम॒ः श्वभ्य॑ः ॥ २७ ॥ नम॒ः श्वभ्य॒ः ।
श्वप॑तिभ्यश्च वो॒ नमो॒ नमो॑ भ॒वाय॑ च रु॒द्राय॑ च॒ नमः॑ श॒र्वाय॑ च पशु ॥१६५॥
पत॑ये च॒ नमो॒ नील॑ग्रीवाय च शिति॒कण्ठा॑य च॒ नमः॑ कप॒र्दिने॑
॥ २८ ॥ नमः॑ कप॒र्दिने॑ । च॒ व्यु॑प्तकेशाय च॒ नमः॑ सहस्रा

क्षायं॑चश॒तध॑न्वने॑च॒नमो॑गिरिश॒याय॑चशिपिवि॒ष्टाय॑च॒नमो॑
मी॒ढुष्ट॑माय॒चेषु॑मते॒चनमो॑ह्र॒स्वाय॑ ॥ २९ ॥ नमो॑ह्र॒स्वाय॑ ।
चवा॒म॒नाय॑च॒नमो॑बृह॒ते॒च॒वर्षी॑यसे॒चनमो॑वृ॒द्धाय॑चस॒वृधे॑च॒न
मो॒ग्र्या॑यच॒प्र॒थ॒माय॑च॒नम॑ऽआ॒श॒वे॑ ॥ ३० ॥ नम॑ऽआ॒
शवे॑ । चाजि॒राय॑च॒नम॒श्शीघ्र्या॑यच॒शी॒भ्या॑यच॒नम॒ऽऊ
र्म्या॑यचावस्व॒न्या॒य॒च॒नमो॑नादे॒याय॑च॒द्वीप्या॑यच ॥ ३१ ॥
[५-४] नमो॒ज्ये॒ष्ठाय॑ । चक॒नि॒ष्ठाय॑च॒नमः॑ पू॒र्व॒जाय॑चाप॒र

जायंचनमोमद्ध्यमायंचापगल्भायंचनमोजघन्न्यायचबु

॥१६६॥ द्ध्न्यायचनमःसोब्भ्यांय ॥ ३२ ॥ नमःसोब्भ्यांय । चप्प्रति

सर्य्यायचनमोयाम्म्यांयचक्षेम्म्यांयचनमःश्लोक्यांयचा

वसान्न्यायचनमंऽउर्व्वर्य्यांयचखल्ल्यांयचनमोवन्न्यांय ॥ ३३ ॥

नमोवन्न्यांय । चकक्ष्यांयचनमःश्रवायंचप्प्रतिश्श्रवायंचन

मंऽआशुषेणायचाशुरंथायचनमःशूरांयचावभेदिनेंचनमोंबि ॥१६६॥

ल्मिनें ॥ ३४ ॥ नमोंबिल्मिनें । चकवचिनेंचनमोंवर्म्मि

णेचवरूथिनेचनमः श्रुतायचश्रुतसेनायचनमोदुन्दुभ्या
यचाहनन्यायचनमोधृष्णवे ॥ ३५॥ नमोधृष्णवे । चप्र
मृशायचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिने
चनमः स्वायुधायचसुधन्वनेच ॥ ३६॥ [ ५-५ ] नमः स्रुत्या
य । चपथ्यायचनमः काट्यायचनीप्यायचनमः कुल्यायच
सरस्यायचनमोनादेयायचवैशन्तायचनमः कूप्याय ॥ ३७॥
नमः कूप्याय । चावट्यायचनमोवीध्यायचातप्यायचन

मोमेघ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्यायचनमो
वात्याय ॥ ३८ ॥ नमोवात्याय । चरेष्म्यायचनमोवास्त
व्यायचवास्तुपायचनमःसोमायचरुद्रायचनमस्ताम्राय
चारुणायचनमःशङ्गवे ॥ ३९ ॥ नमःशङ्गवे । चपशुपत
येचनमऽउग्रायचभीमायचनमोऽग्रेवधायचदूरेवधायचन
मोहन्त्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय
॥ ४० ॥ [ ४-६ ] नमःशम्भवाय । चमयोभवायचनमःश

ङ्करा॑यच मयस्करा॑यच॒नम॑ःशि॒वा॑यचशि॒वत॑रायच ॥ ४१ ॥
[१-७] नम॒ःपार्या॑य । चावा॒र्या॑यच॒नम॑ःप्र॒तर॑णायचो॒त्तर॑
णायच॒नम॒स्तीर्थ्या॑यच॒कूल्या॑यच॒नम॒ःशष्प्या॑यच॒फेन्या॑य
च॒नम॑ःसिक॒त्या॑य ॥ ४२ ॥ नम॑ःसिक॒त्या॑य । चप्रवा॒ह्या॑य
च॒नम॑ःकिँशि॒ला॑यचक्षय॒णा॑यच॒नम॑ःकप॒र्दिने॑चपुल॒स्तये॑
च॒नम॑ऽइरि॒ण्या॑यचप्रप॒थ्या॑यच॒नमो॒व्रज्या॑य ॥ ४३ ॥ नमो॒
व्रज्या॑य । च॒गोष्ठ्या॑यच॒नम॒स्तल्प्या॑यच॒गेह्या॑यच॒नमो॑हृद॒

॥१६८॥

स्थ्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च नमः शु
ष्क्याय ॥ ४४ ॥ नमः शुष्क्याय । च हरित्याय च नमः
पाꣳसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम
ऊर्व्याय च सूर्व्याय च नमः पर्णाय ॥ ४५ ॥ नमः पर्णाय ।
च पर्णशदाय च नमऽउद्गुरमाणाय चाभिघ्नते च नमऽआखिदते
चेप्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो व
किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो ॥१६८॥

व्विकिक्षणत्त्केब्भ्योनमंऽआनिर्हुतेब्भ्यं÷ ॥ ४६ ॥ [५-८]
द्रापेऽअन्धंसः ॥ द्रापेऽअन्धंसस्प्पतेदरिंद्रनीलंल्लोहित ॥
आसाम्प्रजानांमेषाम्पंशूनाम्माभेम्मांरोङ्मोचंनःकिञ्चनामं
मत् ॥ ४७ ॥ इमारुद्रायं । तवसेंकपर्द्दिनेंक्षयद्द्वीरा
यप्प्रभंरामहेमतीः ॥ यथाशमसंद्द्विपदेचतुंष्प्पदेव्विश्श्वम्पुष्ट
ङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ याते । रुद्रशिवा
सं. २९ तनूश्शिवाव्विश्श्वाहाभेषजी ॥ शिवारुतस्यंभेषजीतयांनोमृड
४१९

शुः य. जीवसे ॥ ४९ ॥ परिनः ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्त्वेष पू. अ.
संहि. स्यंदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्ष्वमीढ्वस्तो ॥ १६ ।
॥१६९॥ कायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतम । शिवोनःसुम
नाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाक
म्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहित ॥ विकिरिद्रवि
लोहितनमस्तेऽअस्तुभगवः॥ यास्तेसहस्रंहेतयोन्यमस्म ॥ १६९
न्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशः ॥ सहस्राणिसह

स्त्रशोबाह्वोस्त्तवंहेतयः ॥ तासामीशानोभगवःपराचीनामु
खांकृधि ॥ ५३ ॥ असंङ्ख्यातासहस्राणि ॥ असंङ्ख्यातासह
स्राणियेरुद्राऽअधिभूम्म्याम्॥ तेषाᳫंसहस्रयोजनेवधन्न्वानि
तन्न्मसि ॥ ५४ ॥ अस्म्मिन्मन्न्महति ॥ अस्म्मिन्मन्न्महत्त्यर्ण्णवे
न्तरिक्क्षेभवाऽअधि ॥ तेषाᳫंसहस्रयोजनेवधन्न्वानितन्न्मसि
॥५५॥नीलंग्ग्रीवाःशितिकण्ठाः ॥ नीलंग्ग्रीवाःशितिकण्ठा
दिवᳫंरुद्राऽउपश्श्रिताः ॥ तेषाᳫंसहस्रयोजनेवधन्न्वानित

शु. य. संहि. न्न्मसि ॥ ५६ ॥ नीलंग्ग्रीवाः शितिकण्ठाः । शर्व्वाऽअधः पू. अ.
क्षमाचराः ॥ तेषांᳫं सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५७ ॥ ॥ १६ ॥
॥१७०॥ येवृक्षेषु । शष्पिञ्जरानीलंग्ग्रीवाव्विलोहिताः ॥ तेषांᳫं सहस्र
योजनेवधन्न्वानितन्न्मसि ॥ ५८ ॥ येभूतानाम् ॥ येभूताना
मधिपतयोव्विशिखासः कपर्द्दिनः ॥ तेषांᳫं सहस्रयोजनेवध
न्न्वानितन्न्मसि ॥ ५९ ॥ येपथाम् ॥ येपथाम्पथिरक्षयऽऐलबृदाऽ ॥१७०॥
आयुर्य्युधः ॥ तेषांᳫं सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६० ॥

येतीर्त्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषाᳪंसह
स्रयोजनेवधन्वानितन्मसि ॥ ६१ ॥ येन्नेषु । विविध्यन्तिपा
त्रेषुपिबतोजनान् ॥ तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि
॥ ६२ ॥ यऽएतावन्तः ॥ यऽएतावन्तश्चभूयाᳪंसश्चदिशो
रुद्रावितस्थिरे ॥ तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥
नमोस्तु । रुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्रा
चीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योन

 

॥१७१॥ मोऽअस्तु तेनोवन्तु तेनोमृडयन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमे
षाञ्जम्भेदद्ध्मः ॥६४॥ नमोस्तु । रुद्रेभ्योयेन्तरिक्षेयेषां
वातऽइषवः॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशो
दीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तु तेनोवन्तु तेनोमृडयन्तु ते
यन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥६५॥ नमोस्तु ।
रुद्रेभ्योयेपृथिव्यांय्येषामन्नमिषवः ॥ तेभ्योदशप्प्राचीर्दश ॥१७१.
दक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेभ्योनमोऽअस्तु

तेनौवन्तुतेनौमृडयन्तुतेयन्द्विष्मोयश्चंनोद्वेष्टितमेषाञ्जम्भेद
द्ध्मः॥६६॥[२०-९]इतिश्रीवाजसनेयसंहितायांषोडशोऽ
ध्याय: ॥ १६ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
अश्मन्नूर्जंदश, नमस्तेपञ्चा, श्रितिग्मेननव, चक्षुषःपिताष्टा,
वाशुःशिशानःसप्तदशो, देनंकमध्वमाग्निनापञ्चदशकौ, शुक्र
ज्योतिश्चसप्ते, मꣳस्तनंत्रयोदश, नवैकोनशतं [ मं. ९९
अ. १७ अनु. ९ ] ॥ हरिःॐ ॥ अश्मन्नूर्जम् ॥ अश्मन्नू

ऊर्ज्जम्पर्व्वतेशिश्श्रियाणामद्द्भ्यऽओषधीब्भ्योवनस्पतिब्भ्योऽ
अधिसम्भृतम्पयः ॥ तान्नऽइषमूर्ज्जन्धत्तमरुतःसᳬंरराणाऽ
अश्श्मँस्तेक्षुन्मयितऽऊर्ग्यन्द्विष्मस्तन्तेशुगृच्छतु ॥ १ ॥
इमामे । ऽअग्नऽइष्टकाधेनवःसन्त्वेकाचदशचदशचशतञ्च
शतञ्चसहस्रञ्चसहस्रञ्चायुतञ्चायुतञ्चनियुतञ्चनियुतञ्चप्प्रयुत
ञ्चार्बुदञ्चन्न्यर्बुदञ्चसमुद्रश्चमद्ध्यञ्चान्तश्चपरार्द्धश्चैतामेऽअग्नऽ ॥१७२॥
इष्टकाधेनवःसन्त्वमुत्रामुष्मिँल्लोके ॥२॥ ऋतवस्त्थ । ऽऋता

वृधंऽऋतुष्ठास्त्थंऽऋतावृधंः॥ घृतश्च्चुतोंमधुश्च्चुतोंव्विराजोनामं
कामदुघाऽअक्क्षीयमाणाः॥३॥ समुद्रस्यंत्त्वा॥समुद्रस्यत्त्वावं
कयाग्ग्नेपरिंव्ययामसि॥ पावकोऽअस्म्मब्भ्यंꣳशिवोभंव॥४॥
हिमस्यंत्त्वा । जरायुणाग्ग्नेपरिंव्ययामसि॥ पावकोऽअस्म्म
ब्भ्यंꣳशिवोभंव॥५॥ उपज्ज्मन्॥ उपज्ज्मन्नुपंव्वेतसेवंतरन्नदी
ष्ष्वा॥ अग्ग्नेंपित्तमपामंसिमण्डूकिताभिरागंहिसेमन्नोंयज्ञ
म्पांवकवंर्ण्णꣳशिवङ्कृधि॥६॥ अपामिदम्॥ अपामिदन्न्ययंनꣳ

समुद्रस्यनिवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पाव

॥१७३॥ कोऽअस्मभ्यंशिवोभव ॥ ७ ॥ अग्नेपावक । रोचिषा ॥ १७ ॥

मन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८ ॥ सनः

पावकदीदिवोग्नेदेवाँ २ ॥ इहावह ॥ उपयज्ञꣳहविश्चनः

॥ ९ ॥ पावकयायः ॥ पावकयायश्चितयन्त्याकृपाक्षामन्न्रु

रुचऽउषसोनभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणे ॥१७३॥

नतंतृषाणोऽअजरः ॥ १० ॥ [ १०-१ ] नमस्ते ॥ नम

४२८

स्त्तेहरंसेशोचिषेनमंस्त्तेऽअस्त्त्वर्च्चिषे ॥ अन्याँस्त्तेऽअस्म्मत्त्तं
पन्तुहेतयंः पावकोऽअस्म्मभ्यंᳪ शिवोभंव ॥ ११ ॥ नृषदे
वेट् ॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२ ॥
येदेवाः ॥ येदेवादेवानाँय्यज्ञियांयज्ञियांनाᳪ संवत्त्सरीणमु
पंभागमासंते ॥ अहुतादोहविषोयज्ञेऽअस्म्मिन्त्स्वयम्पिबन्तु
मधुंनोघृतस्यं ॥ १३ ॥ येदेवाः ॥ येदेवादेवेष्वधिंदेवत्त्व
मायन्येब्रह्मणंः पुरऽएतारोंऽअस्य ॥ येभ्योनऽऋतेपवंतेधाम

शु. य. संहि.

किञ्चनन्नतेदिवोनपृथिव्याऽअधिस्नुषु ॥ १४ ॥ प्राणदाऽअं पू. अ.

॥१७४॥ पानुदाः ॥ प्राणदाऽअंपानुदाव्यानुदावर्चोदावरिवोदाः ॥ ॥ १७ ॥

अन्याँस्तेऽअस्मत्तंपन्तुहेतयंः पावकोऽअस्मभ्यᳪशिवो

भव ॥ १५ ॥ [५-२] अग्निस्तिग्मेन[1] । शोचिषायासद्वि

श्वन्युत्त्रिणम् ॥ अग्निर्नोवनतेरयिम् ॥ १६ ॥ यऽइमा ।

विश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानंः ॥ सऽआशि ॥१७४॥

१ अग्निस्तिग्मेन । अत्र विसर्गस्य सत्वे कृते "वायुरग्निरशेरेकाक्षरे" (शु. य. प्रा. ३ अ. ७७ सू.) इत्यनेन अग्निशब्दात्परस्य सस्य षत्वं न । अग्नेः परस्य तिग्मशब्दस्य एकाक्षराभावात् ।

षाद्रविणमिच्छमानःप्रथमच्छदवराँ२॥ऽआविवेश ॥ १७ ॥
किꣳस्वित् ॥ किꣳस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वि
त्कथासीत् ॥ यतोभूमिञ्जनयन्विश्वकर्म्माविद्यामौर्णोन्म
हिनाविश्वचक्षाः॥ १८॥ विश्वतश्चक्षुरुत । विश्वतोमुखो
विश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पत
त्रैर्द्यावाभूमीजनयन्देवऽएकः॥ १९॥ किꣳस्वित् ॥ किꣳ
सं. २० स्विद्वनङ्कऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः॥ मनी
४३१

शु. य. संहि. ॥१७५॥

षिणोमनंसापृच्छतेदुतद्यदुध्यातिष्ठुद्भुवंनानिधारयंन् ॥ २० ॥

यातें ॥ यातेधामानिपरमाणियावमायामंद्ध्यमाव्विश्वकर्म्मंन्नु

तेमा ॥ शिक्क्षासखिंब्भ्योहुविषिंस्वधावःस्वुयँय्यंजस्वतुन्वंव्वृ

धानः ॥ २१ ॥ व्विश्वंकर्म्मंन्हुविषा । व्वावृधानःस्वुयँय्यंजस्व

पृथिवीमुतद्याम् ॥ मुह्यंन्त्वन्न्येऽअभितंः सुपत्नाऽइहास्म्मा

कंम्मुघवासुरिरंस्त्तु ॥ २२ ॥ व्वाचस्प्पतिंम् ॥ व्वाचस्प्पतिंव्वि

श्वकंर्म्माणमूतयेंमनोजुवंव्वाजेंऽअद्याहुवेम ॥ सनोव्विश्वांनि



पृ. अ. ॥ १७ ॥ ॥ १७५ ॥

हवंनानिजोषद्विश्वशंम्भूरवंसेसाधुकंम्र्मा ॥ २३ ॥ व्विश्वंक
र्म्मंन्हविषा ॥ व्विश्वंकर्म्मन्हविषाव्वर्द्धनेनत्त्रातारमिन्द्रंमकृणो
रवद्ध्यम् ॥ तस्म्मैव्विशःसमंनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्योय
थासंत् ॥ २४ ॥ [ ९-३ ] चक्क्षुषःपिता । मनंसाहिधीरोघृ
तमेनेऽअजनन्नम्म्नंमाने ॥ यदेदन्ताऽअदंदृहन्तपूर्व्वऽआदि
द्यावापृथिवीऽअंप्प्रथेताम् ॥ २५ ॥ व्विश्वकंम्र्माव्विमंनाः ॥ व्वि
श्वकंम्र्माव्विमंनाऽआद्विहायाधाताव्विधातापरमोतसन्दृक् ॥

तेषामिष्टानिसमिषामदन्तियत्रा[1]सप्तऽऋषीन्परऽएकमाहुः
॥ २६ ॥ योनः । पिताजनितायोविधाताधामानिवेदभुवना
निविश्वा ॥ योदेवानान्नामधाऽएकऽएवतꣳसम्प्रश्नम्भुवना
यन्त्यन्या ॥ २७ ॥ तऽआयजन्तद्रविणꣳसमस्माऽऋषयः पू
र्वेजरितारोनभूना ॥ असूर्त्तेसूर्त्तेरजसिनिषत्तेयेभूतानिसमकृ
ण्वन्निमानि ॥ २८ ॥ परोदिवा । परऽएनापृथिव्यापरोदेवेभि ॥१७६॥

1 यत्रासप्तऽऋषीन् । अत्र सप्तऋषीन् परे यत्रशब्दस्य ह्रस्वाकारस्य "नरस्सप्तऋषीन्०" (शु. य. प्रा. ३ अ. १२२ सू.) इत्यनेन दीर्घः ।

रसुरैर्य्यदस्ति ॥ कँस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाः समपश्यन्तपूर्व्वे ॥ २९ ॥ तमित् ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमगच्छन्तविश्वे ॥ अजस्यनाभावद्ध्येकमर्प्पितँय्यस्मिन्विश्वानिभुवनानितस्थुः ॥ ३० ॥ नतम् ॥ नतंविदाथयऽइमाजजानान्यद्युष्माकमन्तरम्बभूव ॥ नीहारेणप्रावृताजल्प्यांचासुतृपऽउक्थशासश्चरन्ति ॥ ३१ ॥

---

१ अत्र परं तु रेफहकाराभ्याम् (शु. य. प्रा. ४ अ. १०१ सू.) इत्यनेन रकारात्परस्य यकारस्य द्वित्वम् ।

विश्वकर्म्मा॑हि ॥ विश्वकर्म्मा॒ह्यजनिष्ट देवऽआदिद्गन्धर्वोऽ
अभवद्द्वितीयः ॥ तृतीयः पिताजनितौषधीनामपाङ्गर्भं
व्यदधात्पुरुत्रा ॥ ३२ ॥ [८-४] आशुःशिशानः ॥
आशुःशिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥
सङ्क्रन्दनो निमिषऽएकवीरः शतᳬं सेनाऽअजयत्साकमिन्द्रः
॥ ३३ ॥ सङ्क्रन्दनेनानिमिषेण । जिष्णुनायुत्कारेण ॥१७७॥

१ "आशुःशिशानः" इत्यत्र "प्रत्ययसवर्णं मुदि शाकटायनः" (शु. य. प्रा. ३ अ. ९ सू.) इत्यनेन मुत्संज्ञकेषु शषसान्यतरवर्णपरेषु विसर्जनीयस्य परसवर्णे शकारे प्राप्ते "अविकारं शाकल्यः शषसेषु" (शु. य. प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णो निषिध्यते। एतादृशोऽन्यन्यस्थलेष्वेवमेव निषेधो ज्ञेयः।

दुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्संहध्वंय्युधोनरऽ
इषुंहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुंहस्तैः ॥ सऽइषुह
स्तैःसनिंषङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्ट
जित्सोमपाबाहुशर्ध्युग्रधन्वाप्प्रतिहिताभिरस्ता ॥ ३५॥ बृह
स्पतेपरि । दीयारथेनरक्षोहामित्राँ २॥ऽअपबाधमानः ॥
प्रभञ्जन्त्सेनाःप्प्रमृणोयुधाजयन्नस्माकमेध्यविताथानाम्
॥ ३६ ॥ बलविज्ञायस्स्थविरः ॥ बलविज्ञायस्स्थविरःप्प्रवीरः

सहस्वान्वाजीसहमानऽउग्रः ॥ अभिवीरो[1]ऽअभिसत्त्वा[2]सहो
जाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदम् ॥
गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्प्रमृणन्तमोजसा ॥
इमꣳसजाताऽअनुवीरयध्वमिन्द्रꣳसखायोऽअनुसꣳरभध्वम्
॥ ३८ ॥ अभिगोत्राणि ॥ अभिगोत्राणिसहसागाहमानोदु



१ अभिवीरः । अत्र "अक्षरस्मि०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकारे प्राप्ते "अभिविश्वेषंवीर०" (शु. य. प्रा. ३ अ. १०० सू.) इत्यनेन वीरपरे अभेर्दीर्घनिषेधः । २ अभिसत्त्वा । अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते "अनुसन्तनोतुस्तृहस्पतिसुतस्य सुसमिद्धायसुसन्दशमभिसत्त्वा" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वाभावः ।

योव्वीरश्शतमन्न्युरिन्द्रः ॥ दुश्च्यवनश्पृतनाषाडयुद्ध्योस्म्मा
कङ्सेनाऽअवतुप्प्रयुत्सु ॥ ३९ ॥ इन्द्रऽआसाम् ॥ इन्द्रऽ
आसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञश्पुरऽएतुसोमः ॥ देवसेना
नामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥ ४० ॥
इन्द्रस्यवृष्ण्णः ॥ इन्द्रस्यवृष्ण्णोव्वरुणस्यराज्ञऽआदित्यानां
म्मरुताᳪंशर्द्धऽउग्ग्रम् ॥ महामनसाम्भुवनच्च्यवानाङ्घोषोदे
वानाञ्जयतामुदस्त्थात् ॥ ४१ ॥ उद्धर्षय । मघवन्नायुधा

॥१७९॥ न्व्युत्त्सत्त्वंनाम्मामकानाम्मनांᳬसि ॥ उद्वृंत्रहन्वाजिनांवाजि
नान्व्युद्द्र्थांनाञ्जयंतांन्यन्तुघोषाः ॥ ४२ ॥ अस्माकमि
न्द्रंः ॥ अस्माकमिन्द्रःसमृंतेषुध्वजेष्वस्माकंय्याऽइषंव
स्त्ताजंयन्तु ॥ अस्माकंव्वीराऽउत्तंरेभवन्त्वस्म्माँ२॥ऽउंदेवाऽ
अवताहवेंषु ॥ ४३ ॥ अमीषांचित्तम् ॥ अमीषांचित्तम्प्रंति
लोभयंन्तीगृहाणाङ्गांन्यप्प्वेपरेंहि ॥ अभिप्प्रेहिनिर्दहहृत्त्सु ॥१७९॥
शोकैरन्धेनामित्राुस्तमंसासचन्ताम् ॥ ४४ ॥ अवंसृष्टापरा

पतशरव्येब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्क
ञ्चनोच्छिषः ॥ ४५ ॥ प्रेतं[1] ॥ प्रेताजयंतानरऽइन्द्रोवःशर्म्म
यच्छतु ॥ उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥ ४६ ॥
असौया। सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥ ४७ ॥
यत्रबाणाः। सम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृह

१ प्रेताजयतानरः। अत्र जयतशब्दस्य ह्रस्वाकारस्य "धारयामयोजाव" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन नकारे परे दीर्घाकारः।

स्प्पतिरदितिꣳशर्म्मयच्छतुव्विश्वाहा[1]शर्म्मयच्छतु ॥४८॥ मर्म्मा
णिते ॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानु
वस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु
॥४९॥ [१७-५] उदेनम् ॥ उदेनमुत्तरान्नयाग्ग्नेघृतेनाहुत ॥
रायस्प्पोषेणसꣳसृजप्प्रजयाचबहुङ्कृधि ॥५०॥ शतम् ॥९००॥
इन्द्रेमम् ॥ इन्द्रेमम्प्रतरान्नयसजातानामसद्वशी ॥ समेनंव्व
र्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्यंकुर्म्मः ॥

---

१ विश्वाहा । अत्र नरहामित्रेषु च (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन हा परे विश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकारः ।

यस्यंकुम्भोंगृहेहुविस्त्तमंग्ग्नेवर्द्धयात्त्वम् ॥ तस्म्मैदेुवाऽअधिब्र
वन्नयञ्चब्रह्मंणुस्प्पतिं÷ ॥ ५२ ॥ उदुंत्त्वा ॥ उदुंत्त्वाव्विश्श्वे
देुवाऽअग्ग्नेभरंन्तुचित्तिंभिः ॥ सनोंभवशिुवस्त्त्वꣳसुप्प्रतींको
व्विभावंसुः ॥ ५३ ॥ पञ्चदिशं÷ ॥ पञ्चदिशोंदैवींर्य्यज्ञमंव
न्तुदेुवीरपामंतिन्दुर्म्मुतिम्बाधंमानाः ॥ रायस्प्पोषेंयुज्ञपंतिमा
भजंन्तीरायस्प्पोषेुऽअधिंयुज्ञोऽअंस्त्थात् ॥ ५४ ॥ समिंद्धेऽअ
ग्ग्नौ॥समिंद्धेऽअुग्ग्नावधिंमामहुानऽउुक्क्थपंत्त्रुऽईड्योंगृभीतः॥

सं. २१

शु. य. संहि. तप्मङ्कर्म्मम्परिगृह्यायजन्तोर्ज्जांयद्यज्ञमयजन्तदेवाः ॥ ५५ ॥ पू. अ.
॥१८९॥ दैव्यायधर्त्रे । जोष्ट्रेदेवश्रीःश्रीमनाꣳशतपयाꣳ ॥ परिगृह्यदे ॥ १७ ॥
वाऽयज्ञमायन्देवादेवेभ्योऽअध्वर्यन्तोऽअस्थुꣳ ॥ ५६ ॥
वीतꣳहविः । शमितꣳशमितायजध्यैतुरीयोयज्ञोयत्रहव्यमे
ति ॥ ततोवाकाऽआशिषोनोजुषन्ताम् ॥ ५७ ॥ सूर्य्यर
श्मिर्हरिकेशꣳ । पुरस्तात्सविताज्योतिरुदयाँ२॥ऽअजस्रम् ॥ ॥१८१।
तस्यपूषाप्रसवेयातिविद्वान्सम्पश्यन्विश्वाभुवनानिगोपाः

४४४

॥ ५८ ॥ व्विमानऽएषः ॥ व्विमानऽएषदिवोमध्यऽआस्तऽ
आपप्प्रिवान्न्रोदसीऽअन्तरिक्क्षम्॥सव्विश्वाचीरभिचष्टेघृताची
रन्तरापूर्व्वमपरञ्चकेतुम् ॥५९॥ उक्क्षासमुद्रः ॥ उक्क्षासमु
द्द्रोऽअरुणःसुपर्ण्णःपूर्व्वस्ययोनिम्पितुराविवेश ॥ मध्येदिवोनि
हितःपृश्निरश्माव्विचक्क्रमे[1]रजसस्प्पात्यन्तौ ॥ ६० ॥ इन्द्रं
व्विश्वाः ॥ इन्द्रंव्विश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथी

---

१ रजसस्पात्यन्तौ इति पदं "अध्वनो रजसो रिपः स्पृशस्पातौ" (शु. य. प्रा. ३ अ. २८ सू.) इत्यनेन रजसपरस्य विसर्जनीयस्य पाति पदे परे सकारे रूपम्।

तंमꣳरथीनांव्वाजानाꣳसत्त्पतिम्पतिम् ॥ ६१ ॥ देवहूर्य्यज्ञः ॥
देवहूर्य्यज्ञऽआचव्वक्षत्सुम्नहूर्य्यज्ञऽआचव्वक्षत् ॥ यक्षदु
ग्निर्देवोदेवाँ२ ॥ऽआचव्वक्षत् ॥ ६२ ॥ व्वाजस्यमा । प्प्रसवऽ
उद्ग्राभेणोदग्ग्रभीत् ॥ अधासपत्नानिन्द्रोमेनिग्ग्राभेणाधराँ
२ ॥ऽअकः ॥ ६३ ॥ उद्ग्राभञ्च । निग्ग्राभञ्चब्रह्मदेवाऽअवी
वृधन् ॥ अधासपत्नानिन्द्राग्नीमेव्विषूचीनान्व्यस्यताम् ॥ ६४ ॥ ॥१८२॥
[१५-६] कमन्द्धुमग्निना ॥ कमन्द्धुमग्निनानाकमुक्ख्यꣳ

हस्त्तैषुबिब्भ्रतः ॥ दिवस्पृष्ठᳬस्वर्ग्गत्त्वामिश्श्रादेवेभिराद्ध्वम्
॥ ६५ ॥ प्राचीमनु । प्प्रदिशम्प्रेहिविद्द्वानग्नेरग्नेपुरोऽअग्नि
र्ब्भवेह ॥ व्विश्श्वाऽआशादीद्यानोव्विभाह्यूर्ज्जन्नोधेहिद्द्विपदेच
तुष्प्पदे ॥ ६६ ॥ पृथिव्याऽअहम ॥ पृथिव्याऽअहमुदन्तरि
क्क्षमारुहमन्तरिक्क्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्स्व
र्ज्ज्योतिरगामहम् ॥६७॥ स्वर्य्यन्तः ॥ स्वर्य्यन्तोनापेक्क्षन्तऽ
आद्याᳬरोहन्तिरोदसी ॥ यज्ञँय्येव्विश्श्वतोधारᳬसुविद्द्वाᳬसो

व्विते॒नि॒रे ॥ ६८॥ अग्ने॒प्प्र ॥ अग्ने॒प्प्रेहि॒प्प्र॒थ॒मोदे॑वय॒ताञ्चक्षु॒
र्द्दे॒वाना॑मु॒तमर्त्या॑नाम् ॥ इयं॑क्षमा॒णा॒भृगु॑भि॒ᳪ᳭स॒जोषाः॒ᳪ᳭स्व॒र्य्य
न्तु॒यज॑माना॒ᳪ᳭स्व॒स्ति ॥ ६९ ॥ नक्तो॒षासा॑ ॥ नक्तो॒षासा॒स
म॑नसा॒विरू॑पेधा॒पये॑ते॒शिशु॒मेक॒ᳪ᳭सम्मी॒ची ॥ द्यावा॒क्षामा॑रु
क्मोऽअ॒न्तर्व्वि॒भा॑तिदे॒वाऽअ॒ग्निन्धा॑रयन्द्रविणो॒दाः ॥ ७० ॥
अग्ने॑सहस्राक्ष । शतमूर्द्ध॒ञ्छ॒तन्ते॑प्रा॒णाःस॒हस्र॑व्या॒नाः ॥
त्वᳪ᳭सा॑ह॒स्रस्य॑रा॒यऽई॑शि॒षेत॒स्मै॑तेव्वि॒धेम॒व्वाजा॑य॒स्वाहा॑॥७१॥

सुपर्णोऽसि । गरुत्मान्पृष्ठेपृथिव्याःसीद ॥ भासान्तरिक्ष
मापृणज्ज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृꣳह ॥ ७२॥
आजुह्वानःसुप्रतीकः । पुरस्तादग्नेस्वंय्योनिमासीदसाधु
या ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमान
श्चसीदत ॥ ७३ ॥ ताꣳसवितुः ॥ ताꣳसवितुर्वरेण्यस्यचि
त्रामाहंवृणेसुमतिंविश्वजन्याम् ॥ यामस्यकण्वोऽअदुहत्प्र
पीनाꣳसहस्रधाराम्पयसामहीङ्गाम् ॥ ७४ ॥ विधेमते ।

परमेजन्मन्नग्ने॒विधेमस्तोमैरवरेसधस्थै ॥ यस्माद्योनेरुदा
॥१८४॥ रिंथायजेतम्प्रत्वेहुवींऽषिंजुहुरेसमिंद्धे ॥ ७५ ॥ प्रेद्धोऽ
अग्ने ॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजंस्रयासूर्म्यायविष्ठ ॥
त्वाऽशश्वन्तऽउपयन्तिवाजाः ॥ ७६ ॥ अग्नेतम् ॥
अग्नेतमद्याश्वन्नस्तोमैःक्रतुन्नभद्रऽहंदिस्पृशंम् ॥ ऋध्यामां
तऽओहैः ॥ ७७ ॥ चित्तिंञ्जुहोमि ॥ चित्तिंञ्जुहोमिमनंसा ॥१८४॥

१ रिथ यजेतम् । इति पदे । अत्र "अथोदारिथ." ( शु. य. प्रा. ३ अ. ११३ सू. ) इत्यनेन रिथशब्दस्य यकारे परे दीर्घविधानात् रिथायजेतम् ।

घृतेनयथादेवाऽइहागमंव्वीतिहोत्राऽऋतावृधः ॥ पत्त्येव्विश्व
स्यभूमनोजुहोमिव्विश्वकर्म्मणेव्विश्वाहादाब्भ्यꣳहविः ॥७८॥
सप्तते । ऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयꣳसप्तधाम
प्प्रियाणि ॥ सप्तहोत्राꣳसप्तधात्त्वायजन्तिसप्तयोनीरापृण
स्वघृतेनस्वाहा ॥ ७९ ॥ [१७-७] शुक्रज्ज्योतिश्च । चित्र
ज्ज्योतिश्चसत्त्यज्ज्योतिश्चज्ज्योतिष्म्माँश्च ॥ शुक्रश्चऽऋतपा
श्चात्त्यꣳहाः ॥ ८० ॥ ईदृङ्च ॥ ईदृङ्चान्न्यादृङ्चसदृङ्च

प्प्रतिसदृङ्ङ् ॥ मितश्चसम्मितश्चसभंराः ॥८१॥ ऋतश्चसत्य
श्चंध्रुवश्चंधरुणश्च ॥ धर्त्ताचविधर्त्ताचंविधारयः ॥ ८२ ॥
ऋतजिच्चं। सत्यजिच्चंसेनजिच्चंसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअ
मित्रश्चगणः ॥८३॥ ईदृक्षासऽएतादृक्षासः ॥ ईदृक्षासऽए
तादृक्षासऽऊषुणंःसदृक्षासः[2]प्प्रतिसदृक्षासऽएतंन ॥ मिता
संश्चसम्मितासोनोऽअद्यसभंरसोमरुतोयज्ञेऽअस्म्मिन् ॥८४॥ ॥१८५॥

१ प्रतिसदङ्ङ्च अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षकारे प्राप्ते "अनुसन्तनोतु" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषिद्ध्यते। २ प्रतिसदृक्षासः। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५४ सू.) इत्यनेन मूर्धन्यषत्वापत्तौ "अनुसन्तनोतु" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषेधे न षत्वम्।

स्वतवाँश्च । प्रघासीचसान्तपनश्चगृहमेधीचं ॥ क्रीडीचंशा
कीचोञ्जेषी ॥ ८५ ॥ इन्द्रन्दैवीः ॥ इन्द्रन्दैवीर्व्विशोमरुतो
नुवत्मर्नोभवन्यथेन्द्रन्दैवीर्व्विशोमरुतोनुवत्मर्नोभवन् ॥
एवमिमँय्यजमानन्दैवीश्चविशोमानुषीश्चानुवत्मर्नोभव
न्तु ॥ ८६ ॥ [७-८] इमꣳस्तनम् ॥ इमꣳस्तनमूर्ज्जस्व
न्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्संजुषस्वमधुमन्त
मर्व्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे ।
४५३

घृतम॑स्य॒योनि॑र्घृ॒तेश्रि॒तोघृ॒तंव॑स्य॒धाम॑ ॥ अनु॑ष्व॒धमावे॑हमा॒ ॥ १७ ।

॥१८६॥ द॒यं॑स्व॒स्वाहा॑कृतंवृ॒षभव॒क्षिह॒व्यम् ॥ ८८ ॥ स॒मु॒द्रादू॒र्म्मिः॥

स॒मु॒द्राद्दू॒र्म्मिर्म्म॑धुमाँ॒ २॥ऽउदा॑र॒दुपा॒ᳪ᳖शुना॒सम॑मृ॒त॒त्त्वमा॑नट्॥

घृ॒तस्य॒नाम॒गुह्यँ॒य्यद॒स्ति॒जि॒ह्वादे॒वाना॑म॒मृत॑स्य॒नाभि॑ः ॥८९॥

व॒यन्नाम॑ ॥ व॒यन्नाम॒प्रब्र॑वामाघृ॒तस्या॒स्मिन्य॒ज्ञेधा॑रयामान

मो॑भिः ॥ उप॑ब्र॒ह्माशृ॑णवच्छ॒स्यमा॑नञ्च॒तुः॑शृङ्गोवमीद्गौ॒रऽ ॥१८७

---

१ धारयामानमोभिः। अत्र धारयाम नमोभिः इति पदे। अत्र "धारयाम योजात" ( शु.य.प्रा. ३ अ. १०८ सू.) इत्यनेन धारयाम इत्यादिपदेभ्यः परे नकारे सति पूर्वह्रस्वाकारस्य दीर्घो भवति। तेन धारयामानमोभिः।

एतत् ॥ ९० ॥ चत्वारिशृङ्गा ॥ चत्वारिशृङ्गात्त्रयोऽअस्य
पादाद्द्वे[2]शीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीति
महोदेवोमर्त्त्याँ२॥ऽआविवेश ॥ ९१॥ त्रिधाहितम् ॥ त्रिधा
हितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽ
एकꣳसूर्य्यऽएकञ्जजानव्वेनादेकꣳस्वधयानि[3]ष्टतक्षुः ॥९२॥
एताऽअर्षन्ति ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणा

१ चत्वारि शृङ्गाणि इति पदे "निशब्दो बहुलम्" (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन पदान्तीयशृङ्गाणिपदस्य निशब्दस्य लोपः। २ अस्य पादानि इत्यत्रापि "निशब्दो बहुलम्" इत्यनेन पादानिपदस्य निशब्दस्य लोपः। ३ निष्टतक्षुः अत्र "तत्तक्षौ" (शु. य. प्रा. ३ अ. ७१ सू.) इत्यनेन तत्क्षूत्तरपदे निरुपसर्गस्य विसर्गस्य षकारे "ऊष्मान्तस्थाऽभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ष्टुत्वेन जातस्य टकारस्य द्वित्वम्।

शु. य. संहि. ॥१८७॥

नावचक्क्षे॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोम ॥ १७ ॥
द्धर्यऽआसाम् ॥ ९३ ॥ सम्म्यक्स्रवन्ति । सरितोनधेनाऽ
अन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्युर्म्मयोघृतस्यमृगाऽ
इवक्क्षिपणोरीषमाणाः ॥९४॥ सिन्धोरिवप्प्राद्ध्वने । शूघना
सोव्वातप्प्रमियःपतयन्तियह्वाः॥ घृतस्यधाराऽअरुषोनव्वाजी
काष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ९५ ॥ अभिप्प्रवन्त ॥ ॥ १८७ ॥
अभिप्प्रवन्तसमनेवयोषाःकल्ल्याण्ण्यःस्मयमानासोऽअग्निं

म् ॥ घृतस्यधारांꣳसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाꣳ
॥ ९६ ॥ कन्न्याऽइववहतुम् ॥ कन्न्याऽइववहतुमेतवाऽउंऽअ
ञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमंꣳसूयतेयत्रयज्ञोघृत
स्यधाराऽअभितत्त्पवन्ते ॥ ९७॥ अभ्यर्षत । सुष्टुतिङ्ग
व्यमाजिमस्म्मासुभद्राद्रविणानिधत्त॥ इमँय्यज्ञन्नयतदेवता
नोघृतस्यधारामधुमत्त्पवन्ते ॥ ९८ ॥ धामन्ते ॥ धामन्ते

१ अत्र "परं तु रेफहकाराभ्याम्" (शु. य. प्रा.अ. सू.) इत्यनेन यकारस्य द्वित्वम् । यत्र रेफहकारात्परः स्पर्शवर्णस्तत्र तु "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेनैव द्वित्वं भवति । तथैव यत्र रेफहकाराभ्यां परः स्पर्शातिरिक्तवर्णस्तत्र तु "परं तु रेफहकाराभ्याम्" इत्यनेन द्वित्वम् ।

विश्श्वम्भुवनमाधिश्श्रितमन्तःसमुद्द्रेहृद्द्यन्तरायुषि ॥ अपामनीके समिथेयऽआभृतस्त्तमश्श्यामम धुमन्तन्तऽऊर्म्मिम् ॥९९॥
[१३-९]इतिश्रीवाजसनेयसंहितायांसप्तदशोऽध्याय:॥१७॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ व्वाजः, सत्त्य, मूर्द्धे चतुष्का, अश्श्मा, ऽग्निस्त्रिका, वर्श्शुः पञ्चै, काचतस्रो, व्वाजायद्वे, व्वाजस्यन्वष्टा, ऽऋताषाट्त्रयोदशा, ग्निंयुनज्मि सप्त, यदाकूता, द्वात्रेहत्त्यायदशकौ, त्रयोदशसप्तसप्ततिः ॥ ॥१८८॥

[अ. १८ मं. ७७ अनु. १३] हरिः ॐ ॥ वाजंश्च । मेप्प्रसव
श्चंमेप्प्रयंतिश्चमेप्प्रसिंतिश्चमेधीतिश्चंमेक्रतुंश्चमेस्वरंश्चमेश्श्लो
कंश्चमेश्श्रवश्चंमेश्श्रुतिंश्चमेज्ज्योतिंश्चमेस्वश्चमेयज्ञेनंकल्प
न्ताम् ॥१॥ प्राणश्चं । मेपानश्चंमेव्यानश्चमेसुंश्चमेचित्तञ्चंमऽ
आधींतञ्चमेव्वाक्चंमेमनंश्चमेचक्क्षुंश्चमेश्श्रोत्रंञ्चमेदक्क्षंश्चमे
बलंञ्चमेयज्ञेनंकल्पन्ताम् ॥ २ ॥ ओजंश्च । मेसहंश्चमऽ

१ अत्र वाजश्च इत्यत्र जकारोत्तरवर्तिनो विसर्जनीयस्य चकारे परे "चछयोः शम्" (शु. य. प्रा. ३ अ. ८ सू.) इत्यनेन शकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन शकारात्परस्य स्पर्शवर्णस्य चकारस्य द्वित्वम् । एवमेतादृशोऽप्यन्येषु स्थलेषु बोध्यम् ।

।१८९।। आत्माचंमेतनूश्चंमेशर्म्मंचमेवर्म्मंचमेङ्गानिचमेस्थीनिच ।। १८ ।।
मेपरूᳬंषिचमेशरीराणिचमऽआयुश्चमेजराचंमेयज्ञेनंकल्प
न्ताम् ॥ ३ ॥ ज्यैष्ठ्यंञ्च । मऽआधिपत्यञ्चमेमन्युश्चंमेभा
मंश्चमेमंश्चमेम्भंश्चमेजेमाचंमेमहिमाचंमेवरिमाचंमेप्प्रथि
माचंमेवर्षिमाचंमेद्राघिमाचंमेवृद्धञ्चमेवृद्धिंश्चमेयज्ञेनंकल्प
न्ताम् ॥ ४ ॥ [४-१] सत्यञ्चं । मेश्श्रद्धाचंमेजगंच्चमेध ।।१८९।।
नंञ्चमेविश्वंञ्चमेमहंश्चमेक्क्रीडाचंमेमोदंश्चमेजातञ्चमेजनिष्य

माणञ्चमेसुक्तञ्चमेसुकृतञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ५ ॥ ऋतञ्च ।
मेमृतंञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्ग्घायुत्त्वञ्चमेन
मित्रञ्चमेभयञ्चमेसुखञ्चमेशयनञ्चमेसुषाश्चमेसुदिनञ्चमेयुज्ञे
नंकल्पन्ताम् ॥ ६ ॥ यन्ताचं । मेधर्त्ताचंमेक्षेमंश्चमेधृति
श्चमेविश्वंञ्चमेमहश्चमेसंविच्चमेज्ञात्रंञ्चमेसूश्चमेप्प्रसूश्चमेसीरं
ञ्चमेलयश्चमेयुज्ञेनंकल्पन्ताम् ॥ ७ ॥ शञ्च । मेमयश्चमे
प्प्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्द्रविण

ञ्चमेभद्रञ्चमेश्श्रेयश्चमेवसीयश्चमेयशश्चमेयज्ञेनकल्पन्ताम्
॥ ८ ॥ [ ४-२ ] ऊर्क्च ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृ
तञ्चमेमधुचमेसग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रं
ञ्चमऽऔद्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरा
यश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्च
मेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम्॥१०॥ ॥१९०॥
वित्तञ्च । मेवेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसुगञ्चमेसुपत्थ्य

ञ्चमऽऋद्धञ्चमऽऋद्धिश्चमेकृष्टञ्चमेकृष्टिश्चमेमतिश्चमेसुमति
श्चमेयज्ञेनकल्प्पन्ताम् ॥ ११ ॥ व्रीहयश्च । मेयवाश्चमेमा
षाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्प्रियङ्गवश्चमेणवश्चमे
श्श्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेनक
ल्प्पन्ताम् ॥ १२ ॥ [४-३] अश्म्मा च । मेमृत्तिकाचमे
गिरयश्चमेपर्व्वताश्चमेसिकताश्चमेव्वनस्प्पतयश्चमेहिरण्यञ्चमे

१ नीवाराः । अत्र नि वारहारयोरनवग्रहे (शु. य. प्रा. ३ अ. १०६ सू.) इत्यनेन अवग्रहवर्जिते वारहारयोरन्यतरे परे पूर्वो नीत्युपसर्गो दीर्घो भवति । तेन नीवाराः ।

शु. य. संहि. यंश्चमेश्श्यामञ्चमेलोहञ्चमेसीसञ्चमेत्रपुंचमेयज्ञेनंकल्पन्ता पू. अ.
॥१९१॥ म् ॥ १३ ॥ अग्निश्च । मऽआपश्चमेवीरुधश्चमऽओषधयश्च ॥ १८ ॥
मेकृष्टपच्याश्चमेकृष्टपच्याश्चमेग्राम्म्याश्चमेपशवऽआरण्या
श्चमेवित्तञ्चमेवित्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनंकल्पन्ताम्
॥ १४ ॥ वसुंच । मेवसतिश्चमेकर्म्मचमेशक्तिश्चमेर्त्थश्च
मऽएमश्चमऽइत्याचमेगतिश्चमेयज्ञेनंकल्पन्ताम् ॥ १५ ॥ ॥१९१॥
[ ३-४ ] अग्निश्च । मऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविता

चंमुऽइन्द्रंश्चमेसरस्वतीचमुऽइन्द्रंश्चमेपूषाचमुऽइन्द्रंश्चमेबृह
स्पतिंश्चमुऽइन्द्रंश्चमेयुज्ञेनंकल्पन्ताम् ॥१६॥ मित्रश्चं। मुऽ
इन्द्रंश्चमेवरुंणश्चमुऽइन्द्रंश्चमेधाताचंमुऽइन्द्रंश्चमेत्त्वष्टांचमु
ऽइन्द्रंश्चमेमुरुतंश्चमुऽइन्द्रंश्चमेविश्वेंचमेदेवाऽइन्द्रंश्चमेयुज्ञेनं
कल्पन्ताम्॥१७॥ पृथिवीचं। मुऽइन्द्रंश्चमेन्तरिंक्षञ्चमुऽइन्द्रं
श्चमेद्यौश्चंमुऽइन्द्रंश्चमेसमांश्चमुऽइन्द्रंश्चमेनक्षंत्राणिचमुऽ
इन्द्रंश्चमेदिशंश्चमुऽइन्द्रंश्चमेयुज्ञेनंकल्पन्ताम्॥१८॥[३-५]

४६५

अꣳशुश्च । मेरश्मिश्च मेदाभ्यश्च मेधिपतिश्च मऽउपाꣳशुश्च मे
॥१९२॥ न्तर्य्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे
प्प्रतिप्प्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्प्पन्ताम् । १९ ॥
आग्ग्रयणश्च । मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्न
श्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्र
श्च मे सारस्वतश्च मे पात्क्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्प्प ॥१९२॥
66 न्ताम् ॥ २० ॥ स्रुचश्च । मे चमसाश्च मे वायव्यानि च मे द्रोण

कलशश्चमेग्रावाणश्चमेधिषणेचमेपूतभृच्चमऽआधवनीयश्च
मेवेदिश्चमेबर्हिश्चमेवभृथश्चमेस्वगाकारश्चमेयज्ञेनंकल्पन्ता
म् ॥ २१ ॥ अग्निश्च । मेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्प्राण
श्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयः
शक्करयोदिशश्चमेयज्ञेनंकल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽ
ऋतवश्चमेतपश्चमेसंवत्सरश्चमेहोरात्रेऽऊर्वष्ठीवेबृहद्रथन्तरेच
मेयज्ञेनंकल्पन्ताम् ॥२३॥ [ ५-६ ] एकाच । मेतिस्रश्चमेति

स्त्रश्चंमेपञ्चंचमेपञ्चंचमेसप्तचंमेसप्तचंमेनवंचमेनवंचमऽए
॥१९२॥ कांदशचमऽएकांदशचमेत्रयोंदशचमेत्रयोंदशचमेपञ्चंदशच ॥ १७ ॥
मेपञ्चंदशचमेसप्तदंशचमेसप्तदशचमेनवंदशचमेनवंदशच
मऽएकंविꣳशतिश्चमऽएकंविꣳशतिश्चमेत्रयोंविꣳशतिश्चमेत्र
योंविꣳशतिश्चमेपञ्चंविꣳशतिश्चमेपञ्चंविꣳशतिश्चमेसप्तविꣳ
शतिश्चमेसप्तविꣳशतिश्चमेनवंविꣳशतिश्चमेनवंविꣳशतिश्च ॥ १९२ ॥
मऽएकंत्रिꣳशच्चमऽएकंत्रिꣳशच्चमेत्रयंस्त्रिꣳशच्चमेयज्ञेनंक

ल्पन्ताम् ॥२४॥ चतस्रश्च । मेऽष्टौचमेऽष्टौचमेद्वादशचमेद्वादश
चमेषोडश[1]चमेषोडशचमेविꣳशतिश्चमेविꣳशतिश्चमेचतु
र्व्विꣳशतिश्चमेचतुर्व्विꣳशतिश्चमेऽष्टाविꣳशतिश्चमेऽष्टाविꣳशति
श्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेच
त्वारिꣳशच्चमेचत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेचतुश्चत्वा
रिꣳशच्चमेऽष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २५ ॥

---

१ षोडशशब्दे षट् दश इति पदद्वयम् । अत्र षड्दशदन्तयोः संख्यावयोऽर्थयोश्च (शु. य. प्रा. ३ अ. ४७ सू.) इत्यनेन षट्शब्दघटितान्त्यवर्णस्य डकारस्य सोपधे ओकारे षो इति कृते ततः परस्य संख्यावाचिनो दशशब्दस्य दकारस्य मूर्द्धन्ये क्रमेण डकारे च कृते षोडश इति ॥

त्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमेपञ्चाविश्चमेप
ञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्य्यवाट्चमेतुर्य्यौहीचमे
यज्ञेनकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्च॥ पष्ठवाट्चमेपष्ठौहीचमऽ
उक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञे
नकल्पन्ताम् ॥२७॥ [४-७] वाजायस्वाहा। प्रसवायस्वाहा
पिजायस्वाहाक्रतवेस्वाहावसवेस्वाहाहर्पतयेस्वाहाह्नेमुग्धा
यस्वाहामुग्धायवैनꣳशिनायस्वाहाविनꣳशिनऽआन्त्यायना

यस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतये
स्वाहाम्प्रजापतयेस्वाहा ॥ इयन्तेराण्णिमत्रायंयन्तासियमनऽ
ऊर्ज्जैत्त्वावृष्ट्यैत्त्वाप्प्रजानान्त्वाधिपत्त्याय ॥ २८ ॥ आयुर्य्य
ज्ञेन । कल्प्पताम्प्राणोयज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताᳬं
श्रोत्रँय्यज्ञेनकल्प्पतांव्वाग्ग्यज्ञेनकल्प्पताम्मनोयज्ञेनकल्प्पता
मात्त्मायज्ञेनकल्प्पताम्ब्रह्मायज्ञेनकल्प्पताञ्ज्योतिर्य्यज्ञेनक
ल्प्पताᳬंस्वर्य्यज्ञेनकल्प्पताम्पृष्ठँय्यज्ञेनकल्प्पताँय्यज्ञोयज्ञेन

॥१९५॥ कल्पताम् ॥ स्तोमंश्चयजुंश्चऽऋक्चसामंचबृहच्चंरथन्तरञ्चं ॥

स्वंर्देवाऽअगन्मामृताऽअभूमप्प्रजापतेः प्प्रजाऽअभूमव्वेट्स्वा

हा ॥२९॥ [२-८] व्वाजंस्यनु । प्प्रसवेमातरंम्महीमदितिन्नामव्व

चंसाकरामहे ॥ यस्यामिदंव्विश्श्वम्भुवनमाविवेशतस्यान्नोदेवः

संविताधर्म्मसाविषत् ॥ ३० ॥ व्विश्श्वेऽअद्य । मरुतोव्विश्श्वऽऊ

तीव्विश्श्वेभवन्त्वग्नयः समिद्धाः ॥ व्विश्श्वेनोदेवाऽअवसागमन्तु ॥१९५॥

व्विश्श्वमस्तुद्रविणंव्वाजोऽअस्म्मे ॥ ३१ ॥ व्वाजोनः । सप्तप्प्र

दिशश्चतंस्रोवापरावतंः ॥ व्वाजोनोव्विश्वैर्द्देवैर्द्धनंसाताविहावं
तु ॥ ३२ ॥ व्वाजोनं ॥ व्वाजोनोऽअद्यप्प्रसुंवातिदानंव्वाजो
देवाँ२॥ऽऋतुभिंःकल्प्पयाति ॥ व्वाजोहिमासव्वंवीरञ्जजानु
व्विश्वाऽआशाव्वाजंपतिर्ज्जयेयम् ॥ ३३ ॥ व्वाजंःपुरस्त्तात् ॥
व्वाजंःपुरस्त्तादुतमंद्ध्यतोनोव्वाजोदेवाँन्हविषांव्वर्द्धयाति॥ व्वा
जोहिमासव्वंवीरञ्चकारसर्व्वाऽआशाव्वाजंपतिर्ब्भवेयम् ॥ ३४ ॥
सम्मां । सृजामिपयंसापृथिव्व्याःसम्मांसृजाम्म्यद्भिरोषंधी

शु. य. संहि. भिꣳ ॥ सोऽहंव्वाजꣳसनेयमग्ने ॥ ३५ ॥ पयः पृथिव्याम् ॥ पू. अ.
॥ १८ ॥
॥१९६॥ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाꣳ ॥
पयस्वतीꣳप्प्रदिशः सन्तुमह्यम् ॥३६॥ देवस्यत्त्वा । सवितुः
प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ सरस्वत्यैव्वा
चोयन्तुर्य्यन्त्रेणाग्नेश्साम्म्राज्ज्येनाभिषिञ्चामि ॥३७॥ [८-९]
ऋताषाडृतधामा ॥ ऋताषाडृतधामाग्निर्ग्गन्धर्व्वस्तस्यौषध ॥१९६॥
योप्प्सरसोमुदोनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहा

वाट्ताभ्यᳫंस्वाहा ॥ ३८ ॥ सꣳहितोविश्वसामा ॥ सꣳहितो
विश्वसामासूर्य्योगन्धर्वस्तस्यमरीचयोप्सरसऽआयुवोनाम॥
सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट्ताभ्यᳫंस्वाहा ॥ ३९ ॥
सुषुम्णःसूर्य्यरश्मिमᳫं ॥ सुषुम्णःसूर्य्यरश्मिश्चन्द्रमागन्ध
र्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम॥ सनऽइदम्ब्रह्मक्षत्र
म्पातुतस्मैस्वाहावाट्ताभ्यᳫंस्वाहा ॥ ४० ॥ इषिरोविश्वव्यं
चाᳫं ॥ इषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोऽअप्सरसऽऊ

र्ज्जोनाम॑ ॥ सन॑ऽइ॒दम्ब्रह्म॒क्ष॒त्रम्पा॑तु॒तस्मै॒स्वाहा॒व्वाट्ताभ्य॒ḥ

स्वाहा॑ ॥ ४१ ॥ भु॒ज्युः सु॑प॒र्ण्णः ॥ भु॒ज्युः सु॑प॒र्ण्णो य॒ज्ञो ग॑

न्ध॒र्व्वस्तस्य॒ दक्षि॑णाऽअ॒प्स॒रसः स्त्ता॒वा नाम॑ ॥ सन॑ऽइ॒दम्ब्रह्म॒क्ष॒

त्रम्पा॑तु॒तस्मै॒स्वाहा॒व्वाट्ताभ्यः॒स्वाहा॑ ॥ ४२ ॥ प्र॒जाप॑ति॒र्व्वि

श्वक॑र्म्मा ॥ प्र॒जाप॑ति॒र्व्विश्वक॑र्म्मा॒ मनो॑ ग॒न्ध॒र्व्वस्तस्य॑ऽऋक्सा॒

मान्य॑प्स॒रस॒ऽएष्ट॑यो॒ नाम॑ ॥ सन॑ऽइ॒दम्ब्रह्म॒क्ष॒त्रम्पा॑तु॒तस्मै॒स्वा ॥१९७॥

हा॒व्वाट्ताभ्यः॒स्वाहा॑ ॥ ४३ ॥ सन॑ः ॥ सनो॒ भुव॑नस्य पते॒ प्र

जापतेयस्यंतऽउपरिगृहायस्यंवेह ॥ अस्म्मैब्ब्रह्मणेस्म्मैक्षत्राय
माहिशर्म्मयच्छस्वाहा ॥ ४४ ॥ समुद्रोसि ॥ समुद्रोसिन
भंस्वानार्द्रदानुःशम्भूम्मयोभूरभिमांव्वाहिस्वाहामारुतोसिम
रुतांङ्गणःशम्भूर्म्मयोभूरभिमांव्वाहिस्वाहावस्यूरंसिदुवस्वाञ्छ
म्भूर्म्मयोभूरभिमांव्वाहिस्वाहा ॥ ४५ ॥ यास्त्ते ॥ यास्त्तेऽ
अग्ग्नेसूर्य्यरुचोदिवंमातन्न्वन्तिरश्म्मिभिः ॥ ताभिर्न्नोऽअद्य
सर्व्वाभीरुचेजनायनस्कृधि ॥४६॥ यावः ॥ यावोदेवाःसूर्य्ये

रुचोगोष्ष्वश्श्वेषुयारुचः ॥ इन्द्राग्नीताभिᳬसर्व्वाभीरुचन्नोधत्त 
॥१९८॥ बृहस्प्पते ॥४७॥ रुचन्नᳬ ॥ रुचन्नोधेहिब्ब्राह्मणेषुरुचᳬराजसुन ॥ १८ ॥
स्कृधि ॥ रुचंव्विश्श्येषुशूद्द्रेषुमयिधेहिरुचारुचम् ॥४८॥ तत्त्वा ।
यामिब्ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्ब्भिः ॥ अहे
डमानोव्वरुणेहबोद्ध्युरुशᳬसमानऽआयुᳬप्प्रमोषीः ॥ ४९ ॥
स्वर्ण्ण ॥ स्व[१]र्ण्णघर्म्मःस्वाहास्वर्ण्णार्क्कःस्वाहास्वर्ण्णशुक्रःस्वाहा ॥१९८॥

१ स्वः नः इति पदे । अत्र समानपदत्वाभावेन "ऋषरेभ्यो नकारो णकारं समानपदे" (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन णत्वाप्राप्तौ निषण्णाय रथ० (शु. य. प्रा. ३ अ. ८७ सू.) इत्यनेन णत्वनिपातः ।

स्वर्ण्णज्ज्योतिꣳस्वाहास्वर्ण्णसूर्य्यꣳस्वाहा ॥ ५० ॥ [ १३-१० ]
अग्निँर्युनज्मि ॥ अग्निँर्युनज्मिशवसाघृतेनदिव्यꣳसु
पर्ण्णँव्वयंसाबृहन्तम् ॥ तेनव्वयङ्गमेमब्रध्नस्यव्विष्टपꣳस्वोरुहा
णाऽअधिनाकमुत्तमम् ॥५१॥ शतम् ॥१०००॥ इमौते । पक्षा
वजरौपतत्रिणौयाभ्याꣳरक्षाꣳस्यपहꣳस्यग्ने ॥ ताभ्यां
म्पतेमसुकृतामुलोकँय्यत्रऽऋषयोजग्मुःप्प्रथमजाःपुराणाः
सं. २४ ॥५२॥ इन्दुर्दक्षः । श्येनऽऋतावाहिरण्यपक्षꣳशकुनोभु

रण्णयुः ॥ मुहान्त्सुधस्त्थेध्रुवऽआनिषत्तोनमंस्त्तेऽअस्त्तुमा
मांहिंᳲसीः ॥ ५३ ॥ दिवोमूर्द्धा । सिंपृथिव्व्यानाभिरूर्ग्गपा
मोषधीनाम् ॥ व्विश्वायुःशर्म्मसप्प्रथानमंस्प्पथे ॥ ५४ ॥
व्विश्वंस्यमूर्द्धन् ॥ व्विश्वंस्यमूर्द्धन्नधितिष्ठसिश्रितःसंमुद्द्रेतेहृदय
मप्प्स्वायुंरपोदंत्तोदधिम्भिन्त ॥ दिवस्प्पुर्ज्जन्न्यादुन्तरिक्क्षात्प्पृ
थिव्व्यास्त्ततोंनोवृृष्ट्यांव ॥ ५५ ॥ इष्टोयज्ञः ॥ इष्टोयज्ञोभृ ॥ १९९ ।

१ नमस्प्पथे अत्र "सदो द्यौर्नमस्कृतम्पिता पथेषु" (शु. य. प्रा. ३ अ. ३५ सू.) इत्यनेन कृतं पिता पथ इत्येतेषु परेषु यथासंख्यं सदः द्यौः नमः एतेषां विसर्गस्य सकारो विधीयते । तेनात्र पथे परे नमःपदघटितविसर्जनीयस्य सकारे "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

गुंभिराशीर्हाव्वसुंभिं ॥ तस्यंनऽइष्टस्यंप्प्रीतस्यद्द्रविंणेहागंमेः ॥ ५६ ॥ इष्टोऽअग्निः ॥ इष्टोऽअग्निराहुंतःपिपर्त्तुनऽइष्टः हुविः ॥ स्वुगेदन्दुवेब्भ्योनमंः ॥ ५७ ॥ [ ७-११ ] यदा कूंतात् ॥ यदाकूंतात्त्समसुंस्स्रोद्धृदोवामनंसोवासम्भृंतञ्चक्क्षुंषो वा ॥ तदंनुप्प्रेतंसुकृतांमुलोकँय्यत्रऽऋषंयोजग्ग्मुःप्प्रंथमजाः पुंराणाः ॥ ५८ ॥ एतङ्संधस्त्थ ॥ एतङ्संधस्त्थपरिंतेददा म्मियमावहांच्छेवधिञ्जातवेंदाः ॥ अन्न्वागन्तायज्ञपंतिर्व्वोऽअ

त्त्रतꣳस्म्मंजानीतपरमेव्योमन् ॥ ५९ ॥ एतञ्जांनाथ । परमे
व्व्योमुन्देवां॑ःसधस्त्थाव्विदरूपमंस्य ॥ यदागच्छात्त्पथिभि
र्हेवयानैरिष्टापूर्त्तेकृणवाथाविरस्म्मै ॥ ६० ॥ उद्बुध्यस्व ॥
उद्बुध्यस्वाग्ग्नेप्प्रतिजागृहित्त्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च ॥ अ
स्मिन्त्सधस्त्थेऽअध्युत्तरस्मिन्व्विश्वेदेवायजमानश्चसीदत
॥ ६१ ॥ येनुव्वहांसि । सुहस्रुंग्येनाग्ग्नेसर्व्ववेदुसम् ॥ तेनेमँ
य्यज्ञन्नोनयस्स्वर्हेवेषुगन्तवे ॥ ६२ ॥ प्रस्त्तरेणंपरिधिना । ॥२००॥

स्रुचाब्वेद्यांचबर्हिषां ॥ ऋचेमँव्यज्ञन्नोनयस्वर्द्देवेषुगन्तवे
॥ ६३ ॥ यद्दत्तम् ॥ यद्दत्तँव्यत्त्परादानँव्यत्त्पूर्त्तँव्याश्चद
क्षिणाः ॥ तदग्निर्व्वैश्वकर्म्मणस्वर्द्देवेषुनोदधत् ॥ ६४ ॥
यत्रधाराः ॥ यत्रधाराऽअनपेतामधोर्घृतस्यंचयाः ॥ तद
ग्निर्व्वैश्वकर्म्मणस्वर्द्देवेषुनोदधत् ॥ ६५ ॥ अग्निरस्मि ॥
अग्निरस्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतम्मऽआसन् ॥
अर्कस्त्रिधातूरजसोविमानोजस्त्रोघर्म्मोहविरस्मिनाम ॥ ६६ ॥

ऋचोनामं ॥ ऋचोनामास्मियजूंषिनामास्मिसामानि
नामास्मि ॥ येऽअग्नयःपाञ्चजन्याऽअस्याम्पृथिव्यामधि ॥
तेषामसित्वमुत्तमःप्रनोजीवातवेसुव ॥ ६७ ॥ [१०-१२]
वार्त्रंहत्यायशवसे [१]पृतनाषाह्यायच ॥ इन्द्रत्वावर्त्तया
मसि ॥ ६८ ॥ सहदानुम्पुरुहूत । क्षियन्तमहस्तमिन्द्रस
म्पिणक्कुणारुम् ॥ [२]अभिवृत्रंवर्द्धमानम्पियारुमपादमिन्द्रतव ॥२०१॥

१ पृतनाषाह्याय च अत्र "सहेः पृतनायाः" (शु. य. प्रा. ३ अ. ७५ सू.) इत्यनेन पृतनाशब्दात्परस्य सस्य षत्वं निपात्यते। २ अभिवृत्रम्। अत्र "अश्वरदिम" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन प्राप्तो अभि इत्यस्य ह्रस्वेकारस्य दीर्घाकारो "अभिविश्वेषुवीरविश्ववत्सवृत्रवाजवन्तेषु" (शु. य. प्रा. ३ अ. १०० सू.) इत्यनेन अभेः परेषु एतेषु पदेषु निषिध्यते तेनात्र वकारे परेऽपि दीर्घो न भवति।

साञ्जघन्थ ॥ ६९ ॥ विनः ॥ विनऽइन्द्रमृधोजहिनीचाय
च्छपृतन्यतः ॥ योऽअस्माँ२॥ऽअभिदासत्त्यधरङ्गमयात
मः ॥ ७० ॥ मृगोन । भीमःकुचरोगिरिष्ठाःपरावतऽआ
जगन्थापरस्याः ॥ सृकᳬसᳬशायपविमिन्द्रतिग्मंविशत्रून्ता
ढिविमृधोनुदस्व ॥ ७१ ॥ वैश्वानरोनः ॥ वैश्वानरोनऽ
ऊतयऽआप्प्रयातुपरावतः ॥ अग्निर्न्नःसुष्टुतीरुप ॥ ७२ ॥
पृष्टोदिवि । पृष्टोऽअग्निःपृथिव्याम्पृष्टोविश्वाऽओषधीरावि

वेश ॥ वैश्वानरश्सहंसापृष्टोऽअग्निश्सनोदिवासरिषस्प्पातुन
क्तम् ॥ ७३ ॥ अश्श्यामतम् ॥ अश्श्यामतङ्कामंमग्नेतवो
तीऽअश्श्यामंरयिꣳरंयिवꣳसुवीरंम् ॥ अश्श्यामवाजमभिवा
जयंन्तोऽश्श्यामंद्युम्नमंजराजरंन्ते ॥ ७४ ॥ वयन्ते ॥ वय
न्तेऽअद्यरंरिमाहिकामंमुत्तानहंस्तानमंसोपसद्य ॥ यजिष्ठेन
मनंसायक्षिदेवानस्स्रैधतामन्मंनाविप्प्रोऽअग्ने ॥ ७५ ॥ धा ॥२०२॥

1 रिषस्प्पातु इति पदम् । अत्र "अध्वनो रजसो रिषः स्पृशस्पातौ" (शु. य. प्रा. ३ अ. २८ सू.) इत्यनेन रिषः पदस्य विसर्जनीयस्य पातु पदे परे सत्वे परेषेच "ऊष्मान्तस्थाभ्वश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पातुघटितपकारस्य द्वित्वे रूपम् ।

मुच्छदुग्ग्निः ॥ धामुच्छदुग्ग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥
सचेतसोव्विश्वेदेवायुज्ञम्प्रावन्तुनःशुभे ॥ ७६ ॥ त्वँय्यंविष्ठ ।
दाशुषोनॄःपांहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ ७७ ॥
[१०-१३] इतिश्रीवाजसनेयसंहितायामष्टादशोऽध्यायः १८॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ स्वाह्वीन्त्वैकादश,
देवायज्ञंविᳪशतिः, सुरावन्तᳪसप्तदशो, दीरताञ्चयोदशा,
च्याजानुर्दश, सोमोराजाष्टौ, सीसेनतन्त्रᳪषोडश, सप्त पञ्च

नवतिः ॥ [अ. १९ मं. ९५ अनु. ७] हरिःॐ ॥ स्वाद्वी
न्त्वा । स्वादुनांतीव्रान्तीव्रेणामृतांममृतेन ॥ मधुमतीम्मधु
मतासृजामिसꣳसोमेन ॥ सोमोस्यश्विभ्यांम्पच्यस्वसरस्व
त्यैपच्यस्वेन्द्रांयसुत्राम्णेपच्यस्व ॥ १ ॥ परीतः[1] ॥ परीतो
षिञ्चतासुतꣳसोमोयऽउत्तमꣳहविः ॥ दधन्वायोनर्योऽअ
प्स्वन्तरासुषावसोममद्रिभिः ॥ २ ॥ वायोःपूतः । पवित्रे ॥२०३॥

१ परीतः सिञ्चता इति पदे । अत्र "उकारमितः सिञ्चता सोपधः" (शु. य. प्रा. ३ अ. ४६ सू.) इत्यनेन इतःसंबन्धिविसर्गस्य सिञ्चतौ परे सोपध उकारो विधीयते परस्य मूर्धन्यो भवति इति । सोपधे ओकारे सकारस्य मूर्धन्यत्वे च परीतोषिञ्चता इति सिद्धम् ।

नवतिः ॥ [अ. १९ मं. ९५ अनु. ७] हरिःॐ ॥ स्वाद्वी
न्त्वा । स्वादुनातीव्रान्तीव्रेणामृतामृतेन ॥ मधुमतीम्मधु
मतासृजामिसꣳसोमेन ॥ सोमोस्यश्विभ्याम्पच्यस्वसरस्व
त्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ १ ॥ परीतः[1] ॥ परीतो
षिञ्चतासुतꣳसोमोयऽउत्तमꣳहविः ॥ दधन्वायोनर्य्योऽअ
प्स्वन्तरासुषावसोममद्रिभिः ॥ २ ॥ वायोःपूतः । पवित्रे ॥२०२॥

१ परीतः सिञ्चता इति पदे । अत्र "उकारमितः सिञ्चता सोपधः" (शु. य. प्रा. ३ अ. ४६ सू.) इत्यनेन इतःसंबन्धिविसर्गस्य सिञ्चतौ परे सोपध उकारो विधीयते परश्च मूर्धन्यो भवति इति । सोपधे ओकारे सकारस्य मूर्धन्यत्वे च परीतोषिञ्चता इति सिद्धम् ।

णप्प्रत्यङ्क्सोमोऽअतिद्द्रुतः ॥ इन्द्रस्ययुज्ज्यःसखा ॥ व्वायोः
पूतःपवित्रेणप्प्राङ्क्सोमोऽअतिद्द्रुतः ॥ इन्द्रस्ययुज्ज्यःसखा
॥ ३ ॥ पुनातिते । परिस्स्रुतꣳसोमꣳसूर्य्यस्यदुहिता ॥ व्वारेण
शश्वतातना ॥ ४ ॥ ब्रह्मक्षत्रम् ॥ ब्रह्मक्षत्रम्पवतेतेजऽइन्द्रि
यꣳसुरयासोमः सुतऽआसुतोमदाय ॥ शुक्क्रेणदेवदेवताः पि
पृग्ग्धिरसेनान्नँय्यजमानायधेहि ॥ ५ ॥ कुविदङ्ग । यवम

१ अत्र "परं तु रेफहकाराभ्याम्" (शु. य. प्रा. ३ अ. १०१ सू.) इत्यनेन हकारात्परस्य मकारस्य द्वित्वे प्राप्तेऽपि "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन द्वित्वविधानात्तेनैवात्र स्पर्शवर्णपरे मकारे तस्य द्वित्वम्।

 

न्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंविंयूयं ॥ इहेहैषाङ्कृणुहिभोजना
॥२०४॥ नियेबर्हिषोनमऽउक्तिंय्यजन्ति ॥ उपयामगृहीतोस्याश्वि ॥ १९ ॥
ब्भ्यान्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णऽएषतेयोनिस्त्तेज
सेत्त्वावीर्य्यायत्त्वाबलायत्त्वा ॥ ६ ॥ नानाहि । वान्देवहि
तꣳसदंस्कृतम्मासꣳसृक्षाथाम्परमेव्व्योमन् ॥ सुरात्त्वमसिशु
ष्मिणीसोमऽएषमामाहिꣳसीःस्वाँय्योनिमाविशन्ती ॥ ७ ॥ ॥२०४॥
उपयामगृहीतोसि ॥ उपयामगृहीतोस्याश्विनन्तेजःसारस्व

तंवीर्य्यमैन्द्रम्बलम् ॥ एषतेयोनिर्म्मोदायत्त्वानन्दायत्त्वाम
हसेत्त्वा ॥ ८ ॥ तेजोऽसि ॥ तेजोऽसितेजोमयिधेहिवीर्य्यम
सिवीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोऽस्योजोमयिधे
हिमन्युरसिमन्युम्मयिधेहिसहोऽसिसहोमयिधेहि ॥ ९ ॥
याव्याघ्रम् ॥ यांव्याघ्रंविषूचिकोभौवृकञ्चरक्षति ॥ श्येन
म्पतत्रिणꣳसिꣳहꣳसेमम्पात्त्वꣳहसः ॥ १० ॥ सदापि
पेषं । मातरम्पुत्रश्प्रमुदितोधयन् ॥ एतत्तदग्नेऽअनृणोभवा

१ अत्र "परं तु रेफहकाराभ्याम्" (शु. य. प्रा. अ. सू.) इत्यनेन यकारस्य द्वित्वम् । एवं वीर्य्यमसि ।

म्म्यहंतौपितरौमया ॥ सम्पृचंस्त्थसम्मांभद्रेणपृङ्क्तविपृचंस्त्थ
विमांपाप्मनापृङ्क्त ॥ ११ ॥ [ ११-१ ] देवायज्ञम् ॥ देवाय
ज्ञमंतन्वतभेषजम्भिषजाश्विना ॥ वाचासरस्वतीभिषगिन्द्रा
येन्द्रियाणिदधंतः ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपꣳश
ष्प्पाणिप्प्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपꣳसोमस्यलाजाः
सौमाꣳशवोमधु ॥ १३ ॥ आतित्थ्यरूपम्मासरम् ॥ आति
त्थ्यरूपम्मासरम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतत्ति

स्त्रोरात्रीꣳसुरासुता ॥ १४ ॥ सोमस्यरूपम् ॥ सोमस्यरूप
क्रीतस्यपरिस्रुत्परिषिच्यते ॥ अश्विभ्यान्दुग्धम्भेषजमि
न्द्रायैन्द्रꣳसरस्वत्या ॥ १५ ॥ आसन्दीरूपम् ॥ आसन्दी
रूपꣳराजासन्द्यैवेद्यैकुम्भीसुराधानी ॥ अन्तरऽउत्तरवेद्यारू
पङ्कारोतरोभिषक् ॥ १६ ॥ वेद्यावेदिः ॥ वेद्यावेदिꣳसमा
प्यतेबर्हिषाबर्हिरिन्द्रियम् ॥ यूपेनयूपऽआप्यतेप्रणीतोऽ
अग्निरग्निना ॥ १७ ॥ हविर्धानय्यत् ॥ हविर्धानय्यद

श्विनाग्नीध्रँय्यत्सरस्वती ॥ इन्द्रायैन्द्रꣳसदस्कृतम्पत्नीशा
लङ्गार्हपत्त्यः ॥ १८ ॥ प्रैषेभिःप्प्रैषान् ॥ प्रैषेभिःप्प्रैषा
नाप्नोत्याप्रीभिराप्रीर्य्यज्ञस्य ॥ प्रयाजेभिरनुयाजान्वषट्
कारेभिराहुतीः ॥ १९ ॥ पशुभिःपशून् ॥ पशुभिःपशूना
प्नोतिपुरोडाशैर्हवीꣳष्या ॥ छन्दोभिःसामिधेनीर्य्या
ज्याभिर्वषट्कारान् ॥ २० ॥ धानाःकरम्भः । सक्तवःपरी ॥२०६॥

१ पुरः दाशैः इति पदम् । अत्र "पुरोदाशे" (शु. य. प्रा. ३ अ. ४४ सू.) इत्यनेन पुरशब्दघटितविसर्गस्य उकारे दाशशब्दघटितस्य दकारस्य मूर्धन्ये डकारे "उवर्ण ओकारम्" (शु. य. प्रा. ४ अ. ५४ सू.) इत्यनेन कंठ्यादकारादुत्तरे उवर्णे उभयो रकारोकारयोरोकारे पुरोडाशैः इति पदम् ।

वापःपयोदधि ॥ सोमस्यरूपꣳहविषऽआमिक्षाव्वाजिनम्म
धु ॥ २१ ॥ धानानांꣳरूपम् ॥ धानानांꣳरूपङ्कुवलम्परी
वापस्यगोधूमाꣳ ॥ सक्तूनाꣳरूपम्बदरमुपवाकाꣳकरम्भस्य
॥ २२ ॥ पयसोरूपम् ॥ पयसोरूपँय्यद्यवादध्नोरूपङ्कर्कन्धू
नि ॥ सोमस्यरूपंव्वाजिनꣳसौम्म्यस्यरूपमामिक्षा ॥ २३ ॥
आश्श्रावय ॥ आश्श्रावयेतिस्तोत्रियाꣳप्प्रत्याश्श्रावोऽअनु
रूपꣳ ॥ यजेतिधाय्यारूपम्प्रगाथायेयजामहाः ॥ २४ ॥

 

अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानां᳚रूपम्पदैरा
प्नोतिनिविदंः ॥ प्रणवैःशस्त्राणां᳚रूपम्पयंसासोमंऽआ
प्यते ॥ २५ ॥ अश्विभ्यांम्प्रातᳲसवनम् ॥ अश्विभ्यांम्प्रा
तᳲसवनमिन्द्रैणैन्द्रम्माध्यंन्दिनम् ॥ वैश्वदेवᳲसरंस्वत्त्यात्
तीयंमाप्तᳲसवंनम् ॥ २६ ॥ वायव्यैर्वायव्यानि ॥ वायव्यैर्वा
यव्यान्याप्नोतिसतेंनद्रोणकलशम् ॥ कुम्भीभ्यांमम्भृणौ
सुतेस्त्थालीभिस्त्थालीराप्नोति ॥ २७ ॥ यजुंर्भिराप्यन्ते ॥

 

यजु॑र्भिराप्यन्ते॒ ग्रहा॒ ग्रहै॒स्तोमा॑श्च॒ विष्टु॑तीः ॥ छन्दो॑भिरु
क्थाश॒स्त्राणि॒ साम्ना॑वभृ॒थऽआ॑प्यते ॥ २८ ॥ इडा॑भिर्भ॒
क्षान् ॥ इडा॑भिर्भ॒क्षाना॑प्नोति सू॒क्तवा॒केना॒शिषः॑ ॥ शँय्यु
ना॑पत्नीसँय्याजान्त्स॑मिष्टयजु॒षा सँ॒स्थाम् ॥ २९ ॥ व्रतेन॑
दी॒क्षाम् ॥ व्रतेन॑ दी॒क्षामा॑प्नोति दी॒क्षया॑प्नोति दक्षि॑णाम् ॥
दक्षि॑णा श्र॒द्धामा॑प्नोति श्र॒द्धया॑ स॒त्यमा॑प्यते ॥ ३० ॥ एताव॑

१ पत्नी संय्याजान्। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन प्राप्तस्य षत्व "अनुसन्तनोतु" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषेधे न षत्वम्। ततः "अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम्। (शु. य. प्रा. ४ अ. १० सू.) इत्यनेन समः मकारस्य अन्तस्थे याजान्पदे अन्तस्थामनुनासिकामापद्यते। इति यस्य यकारे अनुनासिके रूपम्।

शु. य. संहि.

॥२०८॥ द्रूपम् ॥ एतावंद्रूपँय्यज्ञस्यंयद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वं पू. अ.
माप्नोतियज्ञेसौत्रामणीसुते ॥ ३१ ॥ [२०-२] सुरांवन्त ॥ १९ ॥
म्बर्हिषदंम् ॥ सुरांवन्तम्बर्हिषदꣳसुवीरँय्यज्ञꣳहिन्वन्तिम
हिषानमोभिः ॥ दधानाःसोमंन्दिविदेवतांसुमदेमेन्द्रँय्यज
मानाःस्वर्काः ॥ ३२ ॥ यस्ते ॥ यस्तेरसःसम्भृतऽओषधी
षुसोमंस्यशुष्मःसुरंयासुतस्यं ॥ तेनंजिन्वयजमानम्मदेनस ॥२०८॥
रस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥ यमश्विना ॥ यम

श्विनानमुचेरासुरादधिसरंस्वत्त्यसुनोदिन्द्रियाय ॥ इमन्त६ं
शुक्कम्मधुमन्तमिन्दुꣳसोमꣳराजानमिहभंक्क्षयामि ॥ ३४ ॥
यदत्रं । रिप्तꣳरसिनंः सुतस्ययदिन्द्रोऽअपिबच्छचीभिः ॥
अहन्तदंस्यमनंसाशिवेनसोमꣳराजानमिहभंक्क्षयामि ॥ ३५ ॥
पितृभ्यंः स्वधायिभ्यंः । स्वधानमंः पितामहेभ्यंः स्वधा
यिभ्यंः स्वधानमःप्प्रपितामहेभ्यःस्वधायिभ्यंः स्वधान
मंः ॥ अक्षंन्पितरोमीमदन्तपितरोतीतृपन्तपितरःपितरः

शुन्धध्वम् ॥ ३६ ॥ पुनन्तुंमा । पितरंःसोम्म्यासंःपुनन्तु
मापितामहाःपुनन्तुप्प्रपिंतामहाः ॥ पवित्रेंणशतायुंषा ॥
पुनन्तुंमापितामहाःपुनन्तुप्प्रपिंतामहाः ॥ पवित्रेंणशतायु
षाव्विश्वमायुर्व्यंश्नवै ॥ ३७ ॥ अग्नुऽआयूᳫंषि । पवसुऽ
आसुवोर्ज्जमिषंञ्चनः ॥ आरेबांधस्वदुच्छुनांम् ॥ ३८ ॥
पुनन्तुंमा । देवजुनाःपुनन्तुमनंसाधियंः ॥ पुनन्तुव्विश्वां
भूतानिजातंवेदःपुनीहिमां ॥ ३९ ॥ पवित्रेंणपुनीहि ।

यत्ते । पवित्रमर्च्चिष्यग्नेवितंतमन्तरा ॥ ब्रह्मतेनंपुनातुमा
॥ ४१ ॥ पवंमानःसः ॥ पवंमानःसोऽअद्यनः पवित्रेण
विचर्षणिः ॥ यःपोतासपुंनातुमा ॥ ४२ ॥ उभाभ्यांन्देव ।
सवितःपवित्रेणसवेनंच ॥ माम्पुंनीहिविश्वतः ॥ ४३ ॥
वैश्वदेवीपुंनती । देव्यागाद्यस्यामिमाबह्वयस्तन्वोवीतपृष्ठाः ॥
तयामदंन्तःसधमादेषुवयंस्यामपतंयोरयीणाम् ॥ ४४ ॥



माधुनकोऽदिवुदीद्योत ॥ अग्नेस्कान्त्वाल्काहूं १ ॥ इन्दु ॥ ४० ॥

येसंमानाः । समंनसःपितरोयमराज्ये ॥ तेषाँल्लोकःस्वधा
॥२१०॥ नमोयज्ञोदेवेषुकल्प्पताम् ॥ ४५ ॥ येसंमानाः । समंनसो
जीवाजीवेषुमामकाः ॥ तेषाᳬंश्रीर्म्मयिकल्प्पतामस्मिँल्लो
केशतᳬंसमाः ॥ ४६ ॥ द्वेसृती ॥ द्वेसृतीऽअशृणवम्पितॄ
णामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्समे
तियदन्तरापितरम्मातरञ्च ॥ ४७ ॥ इदᳬंहविः ॥ इदᳬंहु ॥२१०॥
विःप्रजननम्मेऽअस्तुदशवीरᳬंसर्व्वगणᳬंस्वस्तये ॥ आत्मस

सनिःप्रजासनिः[2]पशुसनिर्लोकसन्यभयसनिः ॥ अग्निः प्रजाम्बहुलाम्मेकरोत्त्वन्नम्पयोरेतोऽअस्मासुधत्त ॥४८॥ [ १७-३ ]
उदीरताम् ॥ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुँय्यऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तुपितरोहवेषु ॥ ४९ ॥ अङ्गिरसोनः । पितरोनवग्वाऽअथर्वाणोभृगवः सोम्यासः ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमन

१-२ प्रजासनि पशुसनि "आविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षकारप्राप्तौ "अनुसन्तनोतु०" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन निषिध्यते ।

सं. ३६

सेस्याम ॥ ५० ॥ येनः ॥ येनंपूर्वेपितरःसोम्म्यासोनूहि

रेसोमपीथंवसिष्ठाः ॥ तेभिर्य्यमश्संरराणोहवीᳪंष्युशन्नु

शद्भिःप्प्रतिकाममत्तु ॥ ५१ ॥ त्वᳪंसोम ॥ त्वᳪंसोमप्प्र

चिकितोमनीषात्त्वᳪंरजिष्ठमनुनेषिपन्थाम् ॥ तवप्प्रणीती

पितरोनऽइन्द्रोदेवेषुरत्नमभजन्तधीराः ॥ ५२ ॥ त्वयाहि ॥

त्वयाहिनःपितरःसोमपूर्वेकर्म्माणिचक्रुश्पवमानधीराः ॥

वन्वन्नवातःपरिधीँ १ ॥ रपोर्णुवीरेभिरश्वैर्म्मघवाभवानः

॥ ५३ ॥ त्वꣳसोम । पितृभिःसंविदानोनुद्यावापृथिवीऽ
आततन्थ ॥ तस्मैतऽइन्दोहविषाव्विधेमव्वयꣳस्यामपतयो
रयीणाम् ॥ ५४ ॥ बर्हिषदःपितरः ॥ बर्हिषदःपितरऽऊत्त्य
र्व्वागिमावोहव्याचकृमाजुषद्ध्वम् ॥ तऽआगतावसाशन्तमेना
थानःशँय्योररपोदधात ॥ ५५ ॥ आहम् ॥ आहम्पितृन्त्सु
विदत्राँ२॥ऽअवित्त्सिनपातञ्चविक्क्रमणञ्चविष्ण्णोः ॥ बर्हिष
दोयेस्वधयासुतस्यभजन्तपित्त्वस्तऽइहागमिष्ठाः ॥ ५६ ॥

उपहूताःपितरः । सोम्म्यासोबर्हिष्ष्येषुनिधिषुप्प्रियेषु ॥
तऽआगमन्तुतऽइहश्श्रुवन्त्वधिब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५७ ॥
आयन्तु । नःपितरःसोम्म्यासोग्निष्ष्वात्ताःपथिभिर्द्देवया
नैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तुतेवन्त्वस्म्मान्
॥ ५८ ॥ अग्निष्ष्वात्ताःपितरः ॥ अग्निष्ष्वात्ताःपितरऽ
एहगच्छतसदःसदःसदतसुप्प्रणीतयः ॥ अत्ताहवीᳬंषि
प्प्रयतानिबर्हिष्ष्यथारयिᳬंसर्व्ववीरन्दधातन ॥ ५९ ॥ येऽ

॥२१२॥

अग्निष्वात्ताः ॥ येऽअग्निष्वात्तायेऽअनग्निष्वात्ता मध्येदिवःस्वधयामादयन्ते ॥ तेभ्यःस्वराडसुनीतिमेतांयथावशन्तन्वङ्कल्पयाति ॥ ६० ॥ अग्निष्वात्तानृतुमतः ॥ अग्निष्वात्तानृतुमतोहवामहेनाराशंसेसोमपीथंयऽआशुः ॥ तेनोविप्रासःसुहवाभवन्तुवयंस्यामपतयोरयीणाम् ॥ ६१ ॥ [१३-४] आच्याजानु । दक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिंसिष्टपितरःकेन

शु. य. संहि. चिन्नोयद्वऽआगःपुरुषताकराम ॥ ६२ ॥ आसीनासोऽअरु पू. अ.
२१३॥ णीनाम् ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषेम ॥ १९ ॥
र्त्याय ॥ पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छतत्तऽइहोर्जन्द
धात ॥ ६३ ॥ यमग्ने । कव्यवाहनत्वञ्चिन्मन्यसेरयिम् ॥
तन्नोगीर्भिःश्रवाय्यन्देवत्रापनयायुजम् ॥ ६४ ॥ योऽअ
ग्निः । कव्यवाहनःपितॄन्यक्षदृतावृधः ॥ प्रेदुहव्यानिवोच ॥२१३॥
तिदेवेभ्यश्चपितृभ्यऽआ ॥ ६५ ॥ त्वमग्ने ॥ त्वमग्नऽई

१ पनय युजम् इति पदम्। अत्र "अथोत्तारिथरनय०" (शु. य. प्रा. ३ अ. ११३ सू.) इत्यनेन सूत्रोक्तपदानां यकारे परे दीर्घो विधीयते। तेन पनयायुजम्।

डितः कं॒व्यवा॑ह॒नावा॑ड्ढ्व्या॒नि॑सु॒र॒भीणि॑ कृ॒त्वी ॥ प्रादाः पि॒तृ॒भ्यं॑ स्व॒धया॒ते॒ऽअ॑क्षन्न॒द्धि॒त्वन्दे॑व॒ प्प्र॒यं॑ता ह॒वी॑ᳬषि ॥ ६६ ॥
ये च॑ ॥ ये चे॒ह पि॒तरो॒ ये च॒ नेह याँश्च॑ वि॒द्म याँ २॥ऽउं॑च॒ न प्प्र॑वि॒द्म ॥ त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञᳬ सुकृ॑तञ्जुषस्व ॥६७॥ इ॒दम्पि॒तृभ्यं॑ ॥ इ॒दम्पि॒तृभ्यो॒ नमो॑ऽअस्त्व॒द्य ये पूर्वा॑सो॒ यऽउप॑रास॒ऽई॒युः ॥ ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒नᳬ सु॑वृ॒जना॑सु वि॒क्षु ॥६८॥ अधा॒ यथा॑ । नः पि॒तरः॒ परा॑सः प्प्र॒त्नासो॑ऽ
५०९

अग्नऽऋतमांशुषाणाः ॥ शुचीदयन्दीधितिमुक्थशासःक्षामा
भिन्दन्तोऽअरुणीरपव्व्रन् ॥ ६९॥ उशन्तस्त्वा ॥ उशन्तस्त्वा
निधीमह्युशन्तꣳसमिधीमहि ॥ उशन्नुशतऽआवहपितॄन्हवि
षेऽअत्तवे ॥ ७० ॥ अपाम्फेनेन ॥ अपाम्फेनेननमुचेःशिरऽ
इन्द्रोदवर्त्तयः ॥ विश्वायदजयस्पृधः ॥ ७१ ॥ [ १०-५ ]
सोमोराजा ॥ सोमोराजामृतꣳसुतऽऋजीषेणाजहान्मृत्युम् ॥ ॥२१४॥

१ पितॄन्हविषे । अत्र पितॄन् पदस्य नस्य "ऋपरेभ्यः" (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन समानपदे विधीयमानं णत्वं प्राप्तम् । परन्तु "प्रकृत्या पदान्तीयः" (शु. य. प्रा. ३ अ. ९० सू.) इत्यनेन पदान्तीयस्य नकारस्य णत्वं नोपपद्यते । इति निषेधान्न णत्वम् ।

ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिद
म्पयोमृतम्मधु ॥ ७२ ॥ अद्भ्यःक्षीरम् ॥ अद्भ्यःक्षीरंव्य
पिबत्क्रुङ्ङाङ्गिरसोधिया ॥ ऋतेनसत्यमिन्द्रियंविपानꣳ
शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७३ ॥ सो
मंमद्भ्यः ॥ सोमंमद्भ्योव्यपिबच्छन्दसाहꣳसःशुचिषत् ॥
ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमि
दम्पयोमृतम्मधु ॥ ७४ ॥ शतम् ॥ ११०० ॥ अन्नात्परिस्रु

तं ॥ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्र
॥२१५॥ जापतिः ॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस ऽइन्द्र
स्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७५ ॥ रेतो मूत्रम् ॥ रेतो मूत्रं
विजहाति योनिम्प्रविशदिन्द्रियम् ॥ गर्भो जरायुणावृत ऽउ
ल्वं जहाति जन्मना ॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रम
न्धस ऽइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७६ ॥ दृष्ट्वा रूपे ॥२१५॥
व्याकरोत्सत्यानृते प्रजापतिः ॥ अश्रद्धामनृतेऽदधाच्छ्र

द्वाᳬसत्त्ये प्रजापतिः॥ ऋतेन सत्त्यमिन्द्रियं विपानᳬ शुक्रम न्धंस ऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७७ ॥ वेदेन रू
पे । व्यपिबत्सुतासुतौ प्रजापतिः ॥ ऋतेन सत्त्यमिन्द्रियं वि
पानᳬ शुक्रमन्धंस ऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥७८॥
दृष्ट्वा परिस्रुतः ॥ दृष्ट्वा परिस्रुतो रसᳬ शुक्रेण शुक्रं व्यपिब
त्पयः सोमम्प्रजापतिः॥ ऋतेन सत्त्यमिन्द्रियं विपानᳬ शुक्रम
न्धंस ऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७९ ॥ [८-६]

५१२

सीसेनतन्त्रम् ॥ सीसेनतन्त्रम्मनसामनीषिणऽऊर्ण्णासूत्रेणक
वयोव्वयन्ति ॥ अश्विनायज्ञꣳसवितासरस्वतीन्द्रस्यरूपंव्वरुणो
भिषज्ज्यन् ॥ ८० ॥ तदस्य । रूपममृतꣳशचीभिस्तिस्रोद
धुर्द्देवताꣳसꣳरराणाः ॥ लोमानिशष्प्पैर्ब्बहुधानतोक्मभि
स्त्त्वगस्यमाꣳसमभवन्नलाजाः ॥ ८१ ॥ तदश्विना । भिष
जारुद्रवर्त्तनीसरस्वतीव्वयतिपेशोऽअन्तरम् ॥ अस्त्थिमज्जान



१ सीसेन तन्त्रम् । अत्र "भाविभ्यः सः षं समानपदे" ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन षत्वापत्तौ "अनुमन्तनोतु" । ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन निषिध्यते । अतो न षकार इत्यर्थः ।

म्मासंरैहंकारोतरेणदधंतोगवान्त्वचि ॥ ८२ ॥ सरंस्वतीम
नंसा । पेशलंव्वसुनासंत्त्याब्भ्यांव्वयतिदर्शतंव्वपुं÷ ॥ रसंम्प
रिस्त्रुतानरोहितन्नग्ग्नहुर्द्धीरस्त्तसंरन्नवेमं ॥ ८३ ॥ पयंसाशुक्क
म् ॥ पयंसाशुक्कममृतंञ्जनित्र्ठसुरंयामूत्त्रांज्जनयन्तरेतं÷ ॥
अपामंतिन्दुर्म्मतिम्बाधंमानाऽऊवंद्ध्यंव्वातं६सव्वुन्तदारात्
॥ ८४ ॥ इन्द्रं÷सुत्रामा ॥ इन्द्रं÷सुत्रामाहृदंयेनसत्त्यम्पुंरो
डाशेनसवितांजंजान ॥ यकृंत्क्क्लोमानंव्वरुणोभिषज्ज्यन्मतंस्न्ने

व्वायव्यैर्न्नमिनातिपित्तम्॥८५॥ आन्त्राणिस्स्थालीः॥ आन्त्रा
णिस्स्थालीर्म्मधुपिन्न्वमानागुदाःपात्राणिसुदुघानधेनुः॥ श्ये
नस्यपत्रन्नप्लीहाशचीभिरासन्दीनाभिरुदरन्नमाता॥८६॥ कु
म्भोव्वनिष्ठुः॥ कुम्भोव्वनिष्ठुर्ज्जनिताशचीभिर्य्यस्मिन्नग्ग्रेयो
न्याङ्गर्भोऽअन्तः॥ प्लाशिर्व्यक्तःशतधारऽउत्सोदुहेनकु
म्भीस्वधाम्पितृभ्यः॥८७॥ मुखꣳसत्॥ मुखꣳसदस्यशिरऽ ॥ २१७ ॥
इत्त्सतेनजिह्वापवित्रमश्विनासन्त्सरस्वती॥ चप्पन्नपायुर्भि

पर्गस्यवालोर्व्वस्तिर्न्नशेपोहरसातरस्वी ॥ ८८ ॥ अश्विभ्या
ञ्चक्षुः ॥ अश्विभ्याञ्चक्षुरमृतङ्ग्रहाभ्याञ्छागेनतेजोहवि
षाशृतेन ॥ पक्ष्माणिगोधूमैःकुवलैरुतानिपेशोनशुक्रमसितं
व्वसाते ॥ ८९ ॥ अविर्न्न । मेषोनसिव्वीर्य्यायप्राणस्यपन्थाऽ
अमृतोग्ग्रहाभ्याम् ॥ सरस्वत्युपवाकैर्व्यानन्नस्यानिबर्हिर्व्व
दरैर्ज्जजान ॥ ९० ॥ इन्द्रस्यरूपम् ॥ इन्द्रस्यरूपमृषभोब
लायकर्णाभ्याᳬश्रोत्रममृतङ्ग्रहाभ्याम् ॥ यवानबर्हिर्भ्रु

विकेसराणिकर्कन्धुंजज्ञेमधुंसारघम्मुखात् ॥ ९१ ॥ आत्कम
न्नुपस्त्थैं ॥ आत्कमन्नुपस्त्थेनवृकंस्यलोममुखेश्म्मश्श्रूणिन
व्यांग्घ्रलोम ॥ केशानशीर्षन्यशंसेश्रियैशिखांसिठहस्यलोम
त्त्विषिरिन्द्रियाणिं ॥ ९२ ॥ अङ्गांन्यात्कमन् ॥ अङ्गांन्या
त्कमन्भिषजातदुश्श्विनात्क्मानुमङ्गैःसमंधात्त्सरंस्वती ॥ इन्द्रं
स्यरूपठःशतमांनमायुंश्चन्द्रेणज्योतिरमृतन्दधांनाः ॥ ९३ ॥
सरंस्वतीयोन्यांम् ॥ सरंस्वतीयोन्यांङ्गर्भमन्तरश्श्विभ्यांम्प

त्क्वीसुकृतम्बिभर्त्ति ॥ अपाꣳरसेनवरुणोनसाम्नेन्द्रꣳश्रियै
जनयन्नप्सुराजा ॥ ९४ ॥ तेजः पशूनाम् ॥ तेजः पशू
नाꣳहविरिन्द्रियावत्परिस्रुतापयसासारघम्मधु ॥ अश्वि
भ्यान्दुग्धम्भिषजासरस्वत्यासुतासुताभ्याममृतꣳसोमऽइ
न्दुः ॥ ९५ ॥ [ १६-७ ] इतिश्रीवाजसनेयसंहितायामेकोन
विंशतितमोऽध्यायः ॥ १९ ॥ श्रीवेदपुरुषायनमः ॥ अनु

१ अपाꣳरसेन । अत्र "ऋषरेभ्यो नकारो णकारं समानपदे" ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन विधीयमानं "स्वरयवहकपेषु" ( शु. य. प्रा. ३ अ. ८६ सू. ) इत्यनेन एतैर्व्यवधानेऽप्यत्र णत्वं सकारस्य तदतिरिक्तवर्णस्य व्यवधानेनाप्राप्तमपि "शिलिसिमध्य०" ( शु. य. प्रा. ३ अ. ९१ सू. ) इत्यनेन णत्वमेतेषु व्यवहितेषु निषिध्यते तच्छिष्यबुद्धिव्युत्पत्त्यर्थम् । स्वरयवहकपातिरिक्तवर्णव्यवधाने ऋषरेभ्यो णत्वप्राप्त्यभावात् ।

वाकसूत्रम् ॥ क्षत्रस्ययोनिस्त्रयोदश, यद्देवादश, म्यादधा
॥२११॥ म्यष्टौ, योभूतानाञ्चतस्त्रः, समिद्धऽइन्द्रऽएकादश, ऽआया ॥ २०. ॥
त्वष्टौ, समिद्धोऽअग्निर्द्वादश, श्विनाहविस्त्रयोदश, श्विना
तेजसैकादश, नव नवतिः ॥ [अ. २० मं. ९० अ. ९]
हरिः ॐ ॥ क्षत्रस्ययोनिं ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभि
रसि ॥ मात्त्वाहिꣳसीन्मामाहिꣳसीः ॥ १ ॥ निषसाद । ॥२११॥
धृतव्रतोवरुणःपस्त्त्यास्वा ॥ साम्राज्यायसुक्रतुः ॥ मृत्त्योः

पाहिविद्योत्पाहि ॥ २ ॥ देवस्यत्त्वा । सवितुःप्प्रसवेऽश्विनो
र्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अश्विनोर्भैषज्ज्येनतेजसे
ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्त्यैभैषज्ज्येनवीर्य्यायान्नाद्या
याभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्श्रियैयशसेभिषिञ्चामि
॥ ३ ॥ कोसि । कतमोसिकस्म्मैत्त्वाकायत्त्वा ॥ सुश्श्लोक
सुमङ्गलसत्त्यराजन् ॥ ४ ॥ शिरोमे ॥ शिरोमेश्श्रीर्य्यशोमु
खन्त्विषिःकेशाश्चश्म्मश्श्रूणि ॥ राजामेप्प्राणोऽअमृतꣳसम्म्रा

ड्चक्षुर्व्विराट्श्रोत्रंम् ॥ ५ ॥ जिह्वामें । भुद्रंवाङ्महोमनोमु
 न्युःस्वराड्भामं÷ ॥ मोदांःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मे 
सहं÷ ॥ ६ ॥ बाहूमें ॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मं
वीर्य्यम् ॥ आत्माक्षत्रमुरोममं ॥ ७ ॥ पृष्टीर्म्मे । राष्ट्रमु
दरमꣳसौग्ग्रीवाश्चश्रोणी । ऊरूऽअंरत्नीजानुंनीविशोमेङ्गा
निसर्व्वतं÷ ॥ ८ ॥ नाभिर्म्मे । चित्तंविज्ञानम्पायुर्म्मेपंचिति 
र्भसत् ॥ आनन्दनन्दावाण्डौमेभगꣳसौभाग्ग्यम्पसं÷ ॥

जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्म्मिविशिराजाप्प्रतिष्ठितः ॥ ९ ॥
प्रतिक्षत्रे । प्प्रतितिष्ठामिराष्ट्रेप्प्रत्त्यश्श्वेषुप्प्रतितिष्ठामिगोषु ॥
प्रत्त्यङ्गेषुप्प्रतितिष्ठाम्म्यात्त्मन्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टे
प्प्रतिद्यावापृथिव्व्योःप्प्रतितिष्ठामियज्ञे ॥ १० ॥ त्र्यादेवाः ॥
त्र्यादेवाऽएकादशत्रयस्त्रिह्शाःसुराधसः ॥ बृहस्प्पतिपुरोहि
तादेवस्यंसवितुःसवे ॥ देवादेवैरवन्तुमा ॥ ११ ॥ प्रथमाद्वि
तीयैः ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाःसत्त्येनस

त्वय्यँय्यज्ञेनयज्ञोयजुर्ब्भिर्य्यजूᳬंषिसामाभिᳲ सामान्यृग्भिर्ऋ
चᳬं॑पुरोनुवाक्याभिᳲपुरोनुवाक्यायाज्याभिर्य्याज्यावषट्का
रैर्व्वषट्कारा॑आहुतिभिराहुतयोमेकामान्त्समर्द्धयन्तुभूᳬःस्वा
हा ॥ १२ ॥ लोमानिप्प्रयतिᳲ ॥ लोमानिप्प्रयतिर्म्ममत्त्वङ्म॑
आनतिरागतिᳲ ॥ माᳬंसम्म॑उपनतिर्व्वस्वस्त्थिमज्जाम॑आ
नतिᳲ ॥ १३ ॥ [ १३-१ ] यद्देवाᳲ ॥ यद्देवादेवहेडनन्देवा ॥२२१॥

१ पुरोनुवाक्याभिः । अत्र समानपदे "ऋपरेभ्यो णकारं समानपदे" ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन णत्वप्राप्तौ "इन्द्राग्नी चित्रमान्ते" ( शु. य. प्रा. ३ अ. ९३ सू. ) इत्यनेन निषेधान्न णत्वम् ।

सश्चकृमावयम् अग्निर्म्मातस्म्मादेनसोविश्वान्मुञ्चत्वꣳहꣳ
सः ॥ १४॥ यदिदिवा ॥ यदिदिवायदिनक्तमेनाꣳसिचकृ
मावयम् ॥ वायुर्म्मातस्म्मादेनसोविश्वान्मुञ्चत्वꣳहसः
॥ १५ ॥ यदिजाग्रत् ॥ यदिजाग्रद्यदिस्वप्नऽएनाꣳ
सिचकृमावयम् ॥ सूर्य्योमातस्म्मादेनसोविश्वान्मुञ्चत्वꣳ
हसः ॥ १६ ॥ यद्ग्रामे ॥ यद्ग्रामेयदरण्येयत्सभायाँ
य्यदिन्द्रिये ॥ यच्छूद्रेयदर्य्येयदेनश्चकृमावयँय्यदेकस्या

धिधर्म्मीणितस्यांवयजंनमासि ॥ १७ ॥ यदापं ॥ यदा
पोंऽअग्घ्याऽइतिव्वरुणेतिशपामहेततोंव्वरुणनोमुञ्च ॥ अवं
भृथनिचुम्पुणनिचेरुरंसिनिचुम्पुणः ॥ अवंदुवैर्हेवकृतमेनोंय
क्ष्यवमर्त्यैर्म्मर्त्यंकृतम्पुरुराव्णोंदेवरिषस्प्पांहि ॥ १८ ॥ समु
द्रेतें ॥ समुद्रेतेह्रदंयमुप्प्स्वुन्तःसन्त्वांव्विशन्त्वोषंधीरुताप ॥
सुमित्रियानऽआपऽओषधयः सन्तुदुर्म्मित्रियास्त्तस्म्मैस
न्तुयोस्म्मान्द्वेष्टियञ्चंव्वयन्द्विष्म्मः ॥ १९ ॥ द्रुपदादिवमुमु

॥२२२॥

चानः । स्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापः
शुन्धन्तुमैनसः ॥ २० ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः
पश्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम
॥ २१ ॥ अपोऽअद्य ॥ अपोऽअद्यान्वचारिषंरसेनसमसृ
क्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासंसृजवर्च्चसाप्रजया
चधनेनच ॥ २२ ॥ एधोसि ॥ एधोस्येधिषीमहिसमिदसि
तेजोसितेजोमयिधेहि ॥ समाववर्त्तिपृथिवीसमुषाःसमुसू

ऽयीँ÷ ॥ समुद्विश्श्वंमिदञ्जगंत् ॥ वैश्श्वानरज्ज्योतिर्भूयासंव्वि
भूँक्कामाँन्व्यश्श्नवैभूःस्वाहां ॥ २३ ॥ [ १०-२ ] ॥ अब्भ्या
दंधामि । समिधमग्ग्नेव्व्रतपतेत्त्वयिं ॥ व्व्रतञ्चंश्श्रद्धाञ्चोपैमी
न्धेत्त्वांदीक्षितोऽअहम् ॥ २४ ॥ यत्त्रब्ब्रह्मं । चक्षत्त्रञ्चंसम्म्य
ञ्चौचरंतःसह ॥ तँल्लोकम्पुण्ण्यम्प्प्रज्ञेषँऽयत्त्रंदेवाःसहाग्ग्निना
॥ २५ ॥ यत्त्रेन्द्रं÷ ॥ यत्त्रेन्द्रंश्च्चव्वायुश्च्चंसम्म्यञ्चौचरंतःसह ॥ ॥ २२३ ॥
तँल्लोकम्पुण्ण्यम्प्प्रज्ञेषँऽयत्त्रंसेदिर्न्नव्विद्यतें ॥ २६ ॥ अहःशुना

ते ॥ अꣳशुनांतेऽअꣳशुश्पृञ्चयताम्परुषापरुः ॥ गन्धस्त्तेसो
मंमवतुमदांयरसोऽअच्युतः ॥ २७ ॥ सिञ्चन्तिपरि । षिञ्च
न्त्युत्सिञ्चन्तिपुनन्तिच ॥ सुरायैबभ्र्वैमदेंकिन्त्वोवंदतिकि
न्त्वः ॥ २८ ॥ धानावन्तङ्करम्भिणम् ॥ धानावन्तङ्करम्भि
णमपूपवन्तमुक्थिनम् ॥ इन्द्रप्प्रातर्ज्जुषस्वनः ॥ २९ ॥ बृह
दिन्द्राय । गायतमरुतोवृत्रहन्तमम् ॥ येनज्ज्योतिरजनयन्नृ
तावृधोदेवन्देवायजागृवि ॥ ३० ॥ अध्वर्य्योऽअद्रिभिः ।

शु. य. संहि.

पू. अ.

सुतꣳ सोमम्पवित्त्रऽआनय ॥ पुनाहीन्द्रायपातवे ॥ ३१ ॥ ॥ २० ॥

॥२२४॥ [ ८-३ ] योभुतानाम् ॥ योभूतानामधिपतिर्य्यस्मिँल्लोकाऽ

अधिश्श्रिताः ॥ यऽईशेमहतोमहाँस्तेनगृह्णामित्त्वामहम्म

यिगृह्णामित्त्वामहम् ॥ ३२ ॥ उपयामगृहीतोसि ॥ उपयाम

गृहीतोस्यश्श्विभ्यान्त्वासरस्वत्त्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णऽएष

तेयोनिरश्श्विभ्यान्त्वासरस्वत्त्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णे ॥ ३३ ॥ ॥२२४॥

प्राणपामे ॥ प्राणपामेऽअपानपाश्चक्षुष्पाःश्श्रोत्त्रपाश्चमे ॥

वाचोमेंविश्वभेषजोमनसोसिविलायकः ॥ ३४ ॥ अश्विनं
कृतस्यते ॥ अश्विनंकृतस्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्णाकृ
तस्य ॥ उपहूतऽउपहूतस्यभक्षयामि ॥ ३५ ॥ [ ४-४ ]
समिद्धऽइन्द्रः ॥ समिद्धऽइन्द्रऽउषसामनीकेपुरोरुचापूर्वकृ
द्वावृधानः ॥ त्रिभिर्देवैस्त्रिंशताव्वज्रबाहुर्जघानवृत्रंविदु
रोव्ववार ॥३६॥ नराशꣳसंप्रति ॥ नराशꣳसंप्रतिशूरोमि

१ इन्द्रऽउषसा । अत्र "उषमहोभिः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेनास्मिन्परिगणितेभ्यः परेभ्य एव उषशब्दाकारस्य दीर्घविधानादत्र दीर्घः ।

शु. य. संहि. मोनस्त्तनूनपात्प्रतियज्ञस्यधाम ॥ गोभिर्वपावान्मधुनासम पू. अ.
॥२२५॥ ञ्जन्हिरंण्यैश्चन्द्रीयंजतिप्प्रचेताः ॥ ३७ ॥ ईडितोदेवैः ॥ ॥२०॥
ईडितोदेवैर्हरिवाँ२॥ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः ॥
पुरन्दरोगोत्रभिद्वज्ज्रबाहुरायांतुयज्ञमुपनोजुषाणः ॥ ३८ ॥
जुषाणोबर्हिः ॥ जुषाणोबर्हिर्हरिवान्नऽइन्द्रः प्प्राचीनंᳪसीद
त्प्रदिशांपृथिव्याः ॥ उरुप्प्रथाः प्प्रथमानᳪस्योनमादित्यैर ॥२२५॥
क्तंवसुभिःसजोषाः ॥ ३९ ॥ इन्द्रन्दुरः । कवष्योधावमा

नावृषाणँव्यन्तुजनंयꣳसुपत्नीः ॥ द्वारौदेवीरभितोव्विश्श्रय

न्ताꣳसुवीरांव्वीरम्प्रथमानामहोभिः ॥ ४० ॥ उषासानक्ता ।

वृहतीबृहन्तम्पयंस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तुन्ततम्पेशंसा

संवयन्तीदेवानान्देवँव्यंजतꣳसुरुक्मे ॥ ४१ ॥ दैव्यामिमा

ना ॥ दैव्यामिमानामनुषꣳपुरुत्राहोतारावन्द्रंप्प्रथमासुवा

चां ॥ मूर्द्धन्यज्ञस्यमधुनादधानाप्प्राचीनञ्ज्योतिर्हविषावृधा

१ प्रथमानामहोभिः उषासा । अत्र "उषमहोभिः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन उष इत्ययं ह्रस्वो दीर्घमापद्यते महोभिः नक्त इम् इकार-एकारौकारनकारेभ्यः परश्चेत् । तेन महोभिः परस्य उषशब्दाकारस्य दीर्घाकारः । अत्र महोभिःशब्दात्पर उषशब्दो वर्तते । २ प्राचीनज्योतिः । अत्र "स्वरयवहकपैश्च" इत्यनेनैतैरेवव्यवधाने समानपदे "ऋपरेभ्यो नकारो णकारं समानपदे" (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन विधीयमानस्य णत्वस्यात्र

तं ॥ ४२ ॥ तिस्रोदेवीः ॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइ
न्द्रञ्जुषाणाजनयोनपत्नीः ॥ अच्छिन्नन्तन्तुम्पयसासरस्व
तीडादेवीभारतीविश्वतूर्त्तिः ॥ ४३ ॥ त्वष्टादधत् ॥ त्वष्टाद
धच्छुष्ममिन्द्रायवृष्णेपाकोचिष्टुर्यशसेपुरूणि ॥ वृषाय
जन्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमनक्तुदेवान् ॥ ४४ ॥ वन
स्पतिरवसृष्टः ॥ वनस्पतिरवसृष्टोनपाशैस्त्मन्यासमञ्ज



व्यवधानोक्तातिरिक्तचवर्गस्य व्यवधानेनाप्राप्तं णत्वं "शलिसिवर्गमध्यमव्यवहितोऽपि" (शु. य. प्रा. ३ अ. ९६ सू.) इत्यनेन शकार-लकार-सकार-व्यवहितो मध्यमवर्गैश्चान्तवर्गैर्व्यवहित ऋषरेभ्य उत्तरो नकारः प्रकृत्या भवति। इति णकारो निषिध्यते तच्छिष्यबुद्धिव्युत्पत्त्यर्थम्।

ऽर्छमितानदेवः ॥ इन्द्रस्यहव्यैर्जठरम्पृणानःस्वदातियज्ञ
म्मधुनाघृतेन ॥ ४५ ॥ स्तोकानामिन्दुम् ॥ स्तोकाना
मिन्दुम्प्रतिशूरऽइन्द्रोवृ[1]षायमाणोवृषभस्तुराषाट् ॥ घृतप्रु
षामनसामोदमानाःस्वाहादेवाऽअमृतामादयन्ताम् ॥ ४६ ॥
[११-५] आयातु ॥ आयात्विन्द्रोवसऽउपनऽइहस्तु
तःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्य्यस्यपूर्व्वीर्द्यौर्न
क्षत्रमभिभूतिपुष्यात् ॥ ४७ ॥ आनः ॥ आनऽइन्द्रो

१ वृषायमाणः । अत्र यकारे परे वृषशब्दाकारस्य ''अयोदारिथ'' (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन दीर्घः ।

दूरादानऽआसादंभिष्टिकृदवंसेयासदुग्ग्रः ॥ ओजिंष्ठेभिर्न्नृपति
र्व्वज्ज्रंबाहुःसङ्गेसमत्त्सुतुर्व्वणिःपृतन्न्यून् ॥ ४८ ॥ आनः ॥
आनऽइन्द्रोहरिंभिर्य्यात्त्वच्छार्व्वाचीनोवंसेराधंसेच ॥ तिष्ठाति
वज्ज्रीमघवांव्विरप्प्शीमँय्यज्ञमनुनोव्वाजंसातौ ॥ ४९ ॥
त्रातारमिन्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳ
शूरमिन्द्रम् ॥ ह्वयामिशक्क्रम्पुरुहूतमिन्द्रꣳस्वस्त्तिनोमघवा
धात्त्विन्द्रः ॥ ५० ॥ इन्द्रःसुत्रामा ॥ इन्द्रःसुत्रामास्व ॥२२७॥

वाँ२॥ऽअवोभिः सुमृडीकोभवतुविश्ववेदाः ॥ बाधंतान्द्वेषोऽ
अभयङ्कृणोतुसुवीर्य्यस्यपतयःस्याम ॥ ५१ ॥ तस्यंवयम् ॥
तस्यंवयᳬसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ ससुत्रा
मास्ववाँ२॥ऽइन्द्रोऽअस्मेऽआराच्चिद्द्वेषः सनुतर्युयोतु ॥ ५२ ॥
आमन्द्रैः ॥ आमन्द्रैरिन्द्रहरिभिर्य्याहिमयूररोमभिः ॥
मात्वाकेचिन्नियमन्विन्नपाशिनोतिधन्वेवताँ२॥ऽइहि॥ ५३ ॥
एवेत् ॥ एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चन्त्य

शु. य. संहि. कैः ॥ सनंस्तुतोवीरवंद्धातुगोमंद्युयम्पांतस्वस्तिभिःसदांनः पू. अ.

॥२२८॥ ॥ ५४ ॥ [ ८-६ ] समिद्धोऽअग्निः ॥ समिद्धोऽअग्निरंश्वि ॥ २० ।

नातप्तोघर्मोविराट्सुतः ॥ दुहेधेनुःसरंस्वतीसोमꣳशुक्रमि

हेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा । सुतेश्विनोभासरंस्वती ॥

मध्वारजाꣳसीन्द्रियमिन्द्रायपथिभिर्वहान् ॥ ५६ ॥ इन्द्रा

येन्दुम् ॥ इन्द्रायेन्दुꣳसरंस्वतीनराशꣳसेननग्नहुम् ॥ अधा ॥२२८।

ताम्श्विनामधुंभेषजम्भिषजांसुते ॥ ५७ ॥ आजुह्वानासरं

स्वती ॥ आजुह्वांनासरंस्वतीन्द्रायेन्द्रियाणिंवीर्य्यम् ॥ इडां
भिरश्विनाविषह्सम्र्जंहसᳬरयिन्दंधुᳬ ॥ ५८ ॥ अश्विनान
मुंचेᳬ । सुतᳬसोमᳬशुक्कम्पंरिस्नुतां ॥ सरंस्वतीतमाभंरद्ब
र्हिषेन्द्रांयपातंवे ॥५९॥ कवष्योन । व्यचंस्वतीरश्विभ्यान्न
दुरोदिशंः ॥ इन्द्रोनरोदंसीऽउभेदुहेकामान्त्सरंस्वती ॥६०॥
उपासानक्तंम् ॥ उपासानक्तंमश्विनादिवेन्द्रᳬसायमिंन्द्रि
यैः॥ सञ्ज्ञानानेसुपेशंसासमंञ्ज्ञातेसरंस्वत्त्या ॥६१॥ पातन्नंः ॥
सं. ३९ ५३९

पातन्नोऽअश्विनादिवांपाहिनक्कꣳसरस्वति ॥ दैव्यांहोतारा
भिषजापातमिन्द्रꣳसचासुते ॥ ६२ ॥ तिस्रस्त्रेधा । सरस्वत्य
श्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम्
॥ ६३ ॥ अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभेषजन्नꣳ
सरस्वती ॥ इन्द्रेत्त्वष्टायशꣳश्रियꣳरूपꣳरूपमधुꣳसुते ॥६४॥
ऋतुथेन्द्रः ॥ ऋतुथेन्द्रोवनस्पतिःशशमानःपरिस्रुता ॥
कीलालमश्विभ्याम्मधुदुहेधेनुःसरस्वती ॥ ६५ ॥ गोभिर्न्न ।

सोमंमाश्विनामासंरेणपरिस्नुतां ॥ समंधातह्ंसरंस्वत्त्यास्वाहे

न्द्रंसुतम्मधुं ॥ ६६ ॥ [१२-७] अश्विनांहविः ॥ अश्वि

नांहविरिन्द्रियन्नमुंचेर्द्धियासरंस्वती ॥ आशुक्क्रमांसुराद्वसुंम

घमिन्द्रांयजभ्रिरे ॥ ६७ ॥ यमश्विनां ॥ यमश्विनासरं

स्वतीहविषेन्द्रमवंर्द्धयन् ॥ सबिंभेदब्बलम्मघन्नमुंचावासुरेस

चां ॥ ६८ ॥ तमिन्द्रंम् ॥ तमिन्द्रम्पशवंहंसचाश्विनोभासरं

स्वती ॥ दधांनाऽअभ्यनूषतहविषायज्ञऽइंन्द्रियैः ॥ ६९ ॥

५४१

यऽइन्द्रे ॥ यऽइन्द्रऽइन्द्रियन्दधुःसविताव्वरुणोभगः ॥ ससु
॥२३०॥ त्रामाहविष्प्पतिर्य्यजमानायसश्चत ॥७०॥ सविताव्वरुणं ॥
सविताव्वरुणोदधद्यजमानायदाशुषे ॥ आदत्तनमुचेर्व्वसुसुत्रा
माबलमिन्द्रियम् ॥ ७१ ॥ व्वरुणंक्क्षत्रम् ॥ व्वरुणंक्क्षत्रमि
न्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशसाबलन्दधानाय
ज्ञमाशत ॥ ७२ ॥ अश्विनागोभिः ॥ अश्विनागोभिरिन्द्रि ॥२३०॥
यमश्वेभिर्व्वीर्य्यम्बलम् ॥ हविषेन्द्रंसरस्वतीयजमानमवर्द्ध

यन् ॥ ७३ ॥ तानासंत्त्या । सुपेशंसाहिरंण्ण्यवर्त्तनीनरां ॥
सरंस्वतीहविष्म्मतीन्द्रकर्म्मंसुनोवत ॥ ७४ ॥ ताभिषजा ।
सुकर्म्मंणासासुदुघासरंस्वती ॥ सवृंत्रहाशतक्क्रंतुरिन्द्रांयदधु
रिन्द्रियम् ॥ ७५ ॥ युवꣳसुरामंम् ॥ युवꣳसुरामंम
श्विनानमुंचावासुरेसचां ॥ विपिपानाꣳसंरस्वतीन्द्रङ्कर्म्मं
स्वावत ॥ ७६ ॥ पुत्त्रमिंवपितरौ ॥ पुत्त्रमिंवपितरांव
श्विनोभेन्द्रावथुꣳकाव्यैर्दꣳसनांभिः ॥ यत्त्सुरामंव्यपिबꣳश

चौभिꣳसरस्वतीत्त्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्न
श्वासꣳ ॥ यस्मिन्नश्वासऽऋषभासऽउक्षणोव्वशामेषाऽअवसृ
ष्टासऽआहुताꣳ ॥ कीलालपेसोमपृष्ठायव्वेधसेहृदामतिञ्जनय
चारुमग्नये ॥ ७८ ॥ अहाव्यग्ने । हविरास्येतेस्रुचीवघृत
ञ्चम्वीवसोमः ॥ व्वाजसनिꣳरयिमस्मेसुवीरम्प्रशस्तन्धे
हियशसम्बृहन्तम् ॥ ७९ ॥ [१३-८] शतम् १२०० ॥ ॥२२१॥
अश्विनातेजसा ॥ अश्विनातेजसाचक्षुःप्राणेनसरस्वतीव्वी

र्य्यम् ॥ वाचेन्द्रोबलेनेन्द्रांयदधुरिन्द्रियम् ॥ ८० ॥ गोमं
दूषुणासत्त्या ॥ गोमंदूपुणासत्त्याश्वांवद्यातमश्विना ॥ वृत्तीं
रुद्रान्नृपाय्यम् ॥ ८१ ॥ नयत ॥ नयत्त्परोनान्तरऽआदध
र्षद्धृषण्वसू ॥ दुꣳशꣳसोमर्त्त्यौरिपुः ॥ ८२ ॥ तानꣳ ॥
तानऽआवोढमश्विनारयिम्पिशङ्गसन्दृशम् ॥ धिष्ण्यांवरि
वोविदम् ॥ ८३ ॥ पावकानꣳ ॥ पावकानꣳसरस्वतीवाजे

१ गोमदूपु णासत्या । अत्र समानपदत्वाभावेन णत्वाप्राप्तौ "निपण्णाय" (शु. य. प्रा. ३ अ. ८७ सू.) इत्यनेन णत्वस्य निपातः ।

॥२३२॥ भिर्व्वाजिनीवती ॥ युज्ञंव्वष्टुधियावसुं ॥ ८४ ॥ चोदयित्री
सूनृतानाम् ॥ चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥
युज्ञन्दधेसरस्वती ॥ ८५ ॥ महोऽअर्ण्णः ॥ महोऽअर्ण्णं
सरस्वतीप्प्रचेतयतिकेतुना ॥ धियोव्विश्वाव्विराजति ॥ ८६ ॥
इन्द्रायाहि । चित्रभानोसुताऽइमेत्त्वायवः ॥ अण्वीभिस्त्त
नापूतासः ॥ ८७ ॥ इन्द्रायाहि । धियेषितोव्विप्प्रजूतं ॥२३२॥

१ चित्रभानो । अत्र समानपदे "ऋषरेभ्यः" इत्यनेन भस्य व्यवधानेनाप्राप्तौ "स्वरयवहकपेश्च" इत्यनेन पवर्गव्यवधानेऽपि णत्वप्रतिप्रसवेन पुनर्णत्वप्राप्तौ "इन्द्राग्नी चित्रभानो०" ( शु. य. प्रा. ३ अ. ९३ सू. ) इत्यनेन निषिध्यते ।

सुतावतः[1] ॥ उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्रायाहि ॥
इन्द्रायाहितूतुजानऽउपब्रह्माणिहरिवः ॥ सुतेदधिष्वनश्च
नः ॥ ८९ ॥ अश्विनापिबताम् ॥ अश्विनापिबताम्मधुसरं
स्वत्यासजोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषन्ताᳬंसोम्यम्म
धुं ॥ ९० ॥ [११-९] इतिश्रीवाजसनेयसंहितायांविंशति-
तमोऽध्यायः ॥ २० ॥ पूर्वविंशतौ मंत्रसंख्या १२११ ॥

---

१ सुतावतः । अत्र "अध्वरश्मिमतिसुमतिध्वसुत" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे सुतस्याकारस्य दीर्घः ।

# अथ श्रीवाजसनेयसंहितोत्तरविंशतिप्रारम्भः ॥

शु. य. संहि. ॥ १ ॥ ॥ श्रीगणेशायनमः ॥ अनुवाकसूत्रम् ॥ इमम्मे, समिद्धोऽ उ. वि. अ.
अग्निरेकादशकौ, व्वसन्तेनऽऋतुना षड्, होतायक्षत्त्समिधा ॥ २१ ॥
म्मिन्द्रद्वादशा, श्विनौछागस्य सप्त, देवम्बर्हिश्चतुर्दश, षडेक
षष्टिः [अ. २१ मं. ६१ अनु. ६]॥ हरिः ॐ ॥ इमम्मे। व्वरु
णश्श्रुधीहवमुद्याचमृडय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वां ।
यामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ ॥ १ ॥
अहेडमानोव्वरुणेहबोद्ध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ २ ॥

त्वन्नः ॥ त्वन्नोऽअग्ग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासि[1]

सीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशुचानोव्विश्वाद्वेषाᳬसिप्रमुमु

ग्ध्यस्म्मत् ॥ ३ ॥ सत्त्वम् ॥ सत्त्वन्नोऽअग्ग्नेवमोभवोतीनेदि

ष्ठोऽअस्याऽउषसोव्व्युष्टौ ॥ अवयक्ष्वनोव्वरुणᳬरराणोव्वीहिमृ

डीकᳬसुहवोनऽएधि ॥ ४ ॥ महीमूषु । मा[2]तरᳬसुव्रतानामृत

---

१ अवयासिसीष्ठाः । अत्र "भाविभ्यः स पं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन षत्वमाप्तौ "पृथिविदिद्युपरिचर्षणिशकुनियासिभ्यः" (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन प्रकृतिभावे न षत्वम् । २ मातरᳬसुव्रतानाम् । वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिकः । या. शि. । मात्रिके

सं. ४० ह्रस्ववर्णपूर्वेऽनुस्वारो द्विमात्रिको दीर्घᳬइत्याकारको ज्ञेयः। अत्र "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्धमात्रा" (शु. य. प्रा. ४ अ. १४८ सू.) इति लिङ्गम् ।

शु. य. संहि. ॥ २ ॥

स्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳसुशर्म्मा — उ. वि. अ.

णमदितिꣴसुप्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रा — ॥ २१ ॥

माणम्पृथिवीन्द्यामनेहसꣴसुशर्म्माणमदितिꣴसुप्रणीतिम् ॥

दैवीन्नाव[१]ꣳस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॥ ६ ॥

सुनावमारुहेयम् ॥ सुनावमारुहेयमस्रवन्तीमनागसम् ॥

शतारित्रा[२]ꣳस्वस्तये ॥ ७ ॥ आनः ॥ आनोमित्रावरुणाघृ — ॥ २ ॥

१-२ संयोगाद्यश्च यो भवेत्। या. शि.। यत्र संयोगाद्यो मात्रिको द्विमात्रिको वा वर्णः सोऽपि ऋवर्णव्यञ्जनादिगं संयोगाद्यं वर्जयित्वा ह्रस्व एकमात्रिको भवति न तु गुरुभूतः। तत्र ह्रस्वोच्चारणप्रदर्शकं ꣳ इत्याकारकं चिह्नं ज्ञेयम्। दीर्घस्य ꣴ इत्याकारकं चिह्नम्।

तैर्गव्यूतिमुक्षतम् ॥ मद्ध्वारजाꣳसिसुक्क्रतू ॥ ८ ॥ प्रबाहवा ।
सिसृतञ्जीवसेनऽआनोगव्यूतिमुक्षतङ्घृतेन ॥ आमाजनैश्श्र
वयतँय्युवानाश्रुतम्मेमित्रावरुणाहवेमा ॥ ९ ॥ शन्नः ॥
शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्द्रवःस्वर्काः ॥ जम्भय
न्तोहिंवृकꣳरक्षा[1]ꣳसिसनेम्यस्म्मद्युयवन्नमीवाः ॥ १० ॥
वाजेवाजेवत । वाजिनोनोधनेषुविप्प्राऽअमृताऽऋतज्ञाः ॥

१ रक्षाꣳसि । द्विमात्रे मात्रिकः स्यात् । या. शि. । यत्र द्विमात्रिकः पूर्ववर्णस्तत्र मात्रिको ह्रस्वोऽनुस्वारः ꣳ इत्याकारकः । अत्र "दीर्घाद्द्विमात्रा पूर्वा चाऽऽर्धा" (शु. य. प्रा. ४ अ. १४९ सू.) लिङ्गम् ।

शु. य. संहि. अस्यमद्ध्वं᳖ पिबतमादयंद्ध्वन्तृप्तायातपथिभिर्द्देवयानैःꣳ॥ ११ ॥ उ. वि. अ.
[ ११-१ ] समिद्धोऽअग्निः । समिधासुसमिद्धो
॥२॥ वरेण्यꣳ ॥ गायत्रीच्छन्दऽइन्द्रियन्त्र्यविर्ग्गौर्व्वयोदधुꣳ ॥ २१ ॥
॥ १२ ॥ तनूनपाच्छुचिव्रतꣳ॥ तनूनपाच्छुचिव्रतस्तनूपा
श्चसरस्वती ॥ उष्णिहाच्छन्दऽइन्द्रियन्दित्यवाड्गौर्व्वयो
दधुꣳ ॥ १३ ॥ इडाभिरग्निः ॥ इडाभिरग्निरीड्यꣳसोमो ॥ २ ॥
देवोऽअमर्त्त्यꣳ ॥ अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्ग्गौर्व्वयो

दधुः ॥१४॥ सुबर्हिरग्निः । पूषण्वान्त्स्तीर्ण्णबर्हिरमर्त्त्यः ॥
बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्व्वयोदधुः ॥ १५ ॥ दुरो
देवीः ॥ दुरोदेवीर्द्दिशोमहीर्ब्रह्मादेवोबृहस्पतिः ॥ पङ्क्तिश्छ
न्दऽइहेन्द्रियन्तुर्य्यवाड्गौर्व्वयोदधुः ॥ १६ ॥ उषेयह्वी ॥
उषेयह्वीसुपेशसाविश्वेदेवाऽअमर्त्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रि
यम्पष्ठवाड्गौर्व्वयोदधुः ॥ १७ ॥ दैव्याहोतारा । भिषजेन्द्रे
णसयुजायुजा ॥ जगतीच्छन्दऽइन्द्रियमनड्वान्गौर्व्वयोदधुः

॥ १८ ॥ तिस्रऽइडा ॥ तिस्रऽइडासरस्वतीभारतीमरुतो
॥ ४ ॥ विशः ॥ विराड्छन्दऽइहेन्द्रियन्धेनुर्गौर्न्नवयोदधुः ॥ १९ ॥
त्वष्टातुरीपः ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ ॥ २१ ॥
द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥ २० ॥ शमि
तारः ॥ शमितानोवनस्पतिःसवितापप्रसुवन्भगम् ॥ ककु
प्छन्दऽइहेन्द्रियंवशावेहद्वयोदधुः ॥ २१ ॥ स्वाहायज्ञम् ॥ ॥ ४ ॥
स्वाहायज्ञंवरुणःसुक्षत्रोभेषजङ्करत ॥ अतिच्छन्दाऽइन्द्रि

यंबृहत्प्रभोगौर्व्वयोदधुः ॥ २२ ॥ [११-२] व्वसन्तेनऽऋ
तुना । देवाव्वसवस्त्रिवृतास्तुताः ॥ रथन्तरेणतेजसाहविरि
न्द्रेव्वयोदधुः ॥ २३ ॥ ग्रीष्मेणऽऋतुना । देवारुद्राःपञ्च
दशेस्तुताः ॥ बृहतायशसाबलꣳहविरिन्द्रेव्वयोदधुः ॥२४॥
व्वर्षाभिर्ऋतुना । दित्यास्तोमेसप्तदशेस्तुताः ॥ व्वैरूपेण
व्विशौजसाहविरिन्द्रेव्वयोदधुः ॥ २५ ॥ शारदेनऽऋतुना ।
देवाऽएकविꣳशऽऋभवस्तुताः ॥ व्वैराजेनश्श्रियाश्श्रियꣳहवि

रिन्द्रे वयो दधुः ॥ २६ ॥ हेमन्तेन ऽऋतुना । देवास्त्रिणवे मरुतं

स्तुताः ॥ बलेन शक्करीः सहो हविरिन्द्रे वयो दधुः ॥ २७ ॥ शैशि

रेण ऽऋतुना । देवास्त्रयस्त्रिंशे मृतास्तुताः ॥ सत्त्येन रेवतीः क्ष

त्रꣳ हविरिन्द्रे वयो दधुः ॥ २८ ॥ [ ६-३ ] होता यक्षत् ॥ होता य

क्षत्त्समिधाग्निमिडस्पदेश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गो

धूमैः कुवलैर्भेषजम्मधु शष्पैर्न तेज ऽइन्द्रियम्पयः सोमः परि

स्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्य्यज ॥ २९ ॥ होता यक्षत्त ॥ ५ ॥

१ पादादौ च पदादौ च संयोगावग्रहेषु यः । जशब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः । या. शि. । अत्र पदादौ यकारस्य सत्त्वाज्जकारोच्चारणम् ।

नूनपात्त्सरंस्वतीम् ॥ होतायक्षत्तनूनपात्त्सरंस्वतीमविर्म्मे
षोनभैषजम्पथामधुंमताभरंन्नाश्विनेन्द्रायवीर्य्यम्बदंरैरुपवा
काभिर्भ्भैषजन्तोक्मभिꣳपयꣳसोमः परिस्रुताघृतम्मधुव्य
न्त्वाज्ज्यंस्यहोतर्य्यज ॥ ३० ॥ होतायक्षन्नराशꣳसन्न ।
नग्नहुम्पतिꣳसुरंयाभेषजम्मेषःसरंस्वतीभिषग्ग्रथोनचन्द्र्यु
श्विनोर्व्वपाऽइन्द्रंस्यवीर्य्यम्बदंरैरुपवाकाभिर्भैषजन्तोक्मभिꣳ
पयꣳसोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यंस्यहोतर्य्यज ॥ ३१ ॥

१ अत्र रकारयकारयोः संयोगाअकारोच्चारणम् । एवं होतर्य्यजेत्यादौ ।

होतायक्षदिडेडितः ॥ होतायक्षदिडेडितऽआजुह्वानꣳसर
॥ ६ ॥ स्वतीमिन्द्रम्बलेनवर्द्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्रायभेषजँ ॥ २१ ॥
य्यवैःकर्कन्धुभिर्म्मधुलाजैर्न्मासरम्पयꣳसोमःपरिस्रुताघृत
म्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३२ ॥ होतायक्षद्बर्हि
रूर्णम्म्रदाꣳ ॥ होतायक्षद्बर्हिरूर्णम्म्रदाभिषङ्नासत्त्या
भिषजाश्विनाश्वाशिशुमतीभिषग्धेनुःसरस्वतीभिषग्दुहऽइ ॥ ६ ॥
न्द्रायभेषजम्पयꣳसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोत

र्य्यज ॥ ३३ ॥ होतायक्षद्दुरोदिशः । कवष्योनव्यचस्व
तीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुःसरस्वत्य
श्विनेन्द्रायभेषजꣳशुक्रन्नज्योतिरिन्द्रियम्पयꣳसोमःपरिस्रु
ताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३४ ॥ होतायक्ष
त्सुपेशसोषे । नक्तन्दिवाश्विनासमञ्जातेसरस्वत्यात्त्विषिमि
न्द्रेनभेषजꣳश्येनोनरजसाहृदाश्रियानमासरम्पयꣳसोमः
परिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३५ ॥ होताय

क्षद्दैव्याहोतारा । भिषजाश्विनेन्द्रन्नजागृविदिवानक्तन्नभै
षजैःशूषꣳसरस्वतीभिषक्सीसेनदुहऽइन्द्रियम्पयꣳसोमः परि
स्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३६ ॥ होतायक्ष
त्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषजन्त्रयस्त्रिधात
वोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचासरस्वती
महऽइन्द्रायदुहऽइन्द्रियम्पयꣳसोमः परिस्रुताघृतम्मधुव्य ॥ ७ ॥
न्त्वाज्यस्यहोतर्य्यज ॥ ३७ ॥ होतायक्षत्सुरेतसम्

षभम् ॥ होतांयक्षत्सुरेतंसमृषभन्नर्य्यापसन्त्वष्टारमिन्द्र
मश्विनांभिषजन्नसरंस्वतीमोजोनजूतिरिन्द्रियंवृकोनरभसो
भिषग्यशꣳसुरंयाभेषजꣳश्रियानमासंरम्पयꣳसोमंःपरिस्रु
तांघृतम्मधुव्यन्त्वाज्ज्यंस्यहोतर्य्यजं ॥ ३८ ॥ होतांयक्षद्व
नस्पतिꣳशमितारम् ॥ होतांयक्षद्वनस्पतिꣳशमितारꣳश
तक्रंतुम्भीमन्नमन्युꣳराजानंव्याघ्रन्नमंसाश्विनाभामꣳसरं

१ "वर्गे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिकः" या. शि. । मात्रिके (ह्रस्ववर्णपूर्वे) अनुस्वारो द्विमात्रिकः ꣳ इत्याकारको दीर्घो ज्ञेयो लेख्यश्च । अत्र अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्धमात्रा (शु. य. प्रा. ४ अ. १४८ सू.) इत्यनेन चोक्तम्। अत्र मन्युं राजानम् इत्यत्रानुस्वारस्य ह्रस्ववर्णपूर्वत्वं वर्त्तते।

सं. ५१

स्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमः परिस्रुताघृतम्मधु
व्यन्त्वाज्यस्यहोतर्यज ॥ ३९ ॥ होतायक्षदग्निꣳस्वाहा ॥
होतायक्षदग्निꣳस्वाहाज्यस्यस्तोकानाꣳस्वाहामेदसाम्पृथ
क्स्वाहाछागमश्विभ्याꣳस्वाहामेषꣳसरस्वत्यैस्वाहऽऋषभ
मिन्द्रायसिꣳहायसहसऽइन्द्रियꣳस्वाहाग्निन्नभेषजꣳस्वाहा
सोममिन्द्रियꣳस्वाहेन्द्रꣳसुत्रामाणꣳसवितारंव्वरुणम्भिषजा
म्पतिꣳस्वाहाव्वनस्पतिम्प्रियम्पाथोनभेषजꣳस्वाहादेवाऽआ

ज्य॒पाजु॑षा॒णोऽअ॒ग्निर्भै॑ष॒जम्पय॒ꣳसोम॑ꣳपरि॒स्रुता॑घृ॒तम्मधु॒व्य
न्त्वाज्ज्य॑स्य॒होत॒र्य्यज॑ ॥४०॥ [ १२-४ ] होता॒यक्ष॑द॒श्विनौ॑
छाग॑स्य। व॒पाया॒मेद॑सो॒जु॒षेता॒ꣳह॒विर्होत॒र्य्यज॑ ॥ होता॒यक्ष॑
त्सर॑स्वती॒म्मे॒षस्य॑व॒पाया॒मेद॑सो॒जुष॒ता॒ꣳह॒विर्होत॒र्य्यज॑ ॥ हो
ता॒यक्ष॒दिन्द्र॑मृष॒भस्य॑व॒पाया॒मेद॑सो॒जुष॒ता॒ꣳह॒विर्होत॒र्य्यज॑
॥४१॥ होता॒यक्ष॑द॒श्विनौ॒सर॑स्वतीम् ॥ होता॒यक्ष॑द॒श्विनौ॒सर॑

१ "द्विमात्रिके मात्रिकः स्यात्" या. शि.। यत्र द्विमात्रिकः पूर्ववर्णः (दीर्घस्वरः) तत्रानुस्वारो ह्रस्वः ꣳ इत्याकारको ज्ञेयो लेख्य उच्चारणीयश्च। अत्र "दीर्घादर्द्धमात्रा पूर्वा चाद्वयर्धा" (शु. य. प्रा. ४ अ. १४९ सू.) प्रमाणम्। अत्र "जुषतां ꣳ हविः" इति पदे दीर्घवर्णपूर्वोऽनुस्वारो वर्तते।

स्वतीमिन्द्रꣳसुत्रामाणमिमेसोमाꣳसुरामाणश्छागैर्न्नमेषैर्ऋ
षभैःसुताःशष्पैर्न्नतोक्मभिर्लाजैर्म्महस्वन्तोमदामासरेणपरि[1]
ष्कृताꣳशुक्राःपयस्वन्तोमृताꣳप्रस्थितावोमधुश्चुतस्तानश्वि
नासरस्वतीन्द्रꣳसुत्रामावृत्रहाजुषन्ताꣳसोम्म्यम्मधुपिबन्तुम
दन्तुव्यन्तुहोतर्य्यज ॥४२॥ होतायक्षदश्विनौछागस्य। हवि
षऽआत्तामद्यमध्यतोमेदऽउद्भृतम्पुराद्वेषोभ्यꣳपुरापौरुषेय्या

१ परिष्कृता। अत्र "परिकृते षकारेण" (शु. य. प्रा. ३ अ. ५३ सू.) इत्यनेन परिपदं कृते परे षकारेण व्यवधीयते। ततोऽत्र "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन द्वित्वं प्राप्तं परन्तु "ऋवर्णे च" (शु. य. प्रा. ४ अ. १११ सू.) इत्यनेन कृतपदितकारे परे द्वित्वस्य निषेधात् द्वित्वं न।

गृभोघस्त्तान्नूनङ्घासेऽअंज्ज्राणाँम्ब्यवंसप्प्रथमानाꣳसुमत्त्क्षंरा
णाꣳशतरुद्द्रियांणामग्ग्निष्ष्वात्तानाम्पीवो[१]ऽपवसनानाम्पार्श्र्व
तश्श्रोंणितश्शितामतऽउंत्त्सादुतोङ्गांदङ्गादवंत्तानाङ्करंतऽए
वाश्श्विनांजुषेतांꣳहुविर्होतुर्य्यंजं ॥ ४३ ॥ होतांयक्क्ष
त्त्सरंस्वतीम्मेषस्यं । हुविषऽआवंयदुद्यमंघ्युतोमेदुऽउद्धृंत
म्पुराद्द्वेषोंब्भ्यःपुरापौरुंषेय्याग्गृभोघसंन्नूनङ्घासेऽअंज्ज्राणाँम्ब्य
वंसप्प्रथमानाꣳसुमत्त्क्षंराणाꣳशतरुद्द्रियांणामग्ग्निष्ष्वात्ता

१ पीवः उपवसनानाम् इत्यत्र "उपवसने पीवः" (शु. य. प्रा. ३ अ. १४ सू.) इत्यनेन उपवसने परे विसर्जनीयस्य लोपे "उवर्ण ओकारम्"

नाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामुतऽउत्सादतो
ङ्गादङ्गादवत्तानाङ्करदेवꣳ सरस्वतीजुषताꣳ हविर्होतर्यज
॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्य । हविषऽआवयदद्यमध्य
तोमेदऽउद्भृतम्पुराद्वेषोभ्यः पुरापौरुषेय्यागृभोघस्नूनङ्घासेऽ
अज्राणाँय्यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणा
मग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शिताम ॥ १० ॥

(शु. य. प्रा. ४ अ. ५२ सू.) इति गुणे रूपं भवति । १. अत्र स्वरात्संयोगादिर्द्विरुच्यते इति सूत्रेण शकारस्य द्वित्वे प्राप्तेऽपि "नास्वरपूर्वा०" इति सूत्रस्य वृत्तौ विसर्जनीयाद्यअनपरस्य द्वित्वञ्चेत्स्पर्शवर्णस्यैवेति नियमात्स्पर्शातिरिक्तशकारस्य द्वित्वं न भवति । तेन न द्वित्वम् ।

तऽउंत्त्सादुतोज्ञादज्ञादवंत्तानाङ्कंरदेवमिन्द्रौजुषतांᳬंहविर्हो
तर्य्यंज ॥ ४५ ॥ होतांयक्षद्वनस्प्पतिंमभि। हिपिष्टतमया
रभिंष्ठयारशनयाधित ॥ यत्राश्विनोश्च्छागंस्यहविषंःप्प्रिया
धामांनियत्रसरंस्वत्त्यामेषस्यंहविषंःप्प्रियाधामांनियत्रेन्द्रंस्य
ऽऋषभस्यंहविषंःप्प्रियाधामांनियत्राग्नेश्प्प्रियाधामांनियत्र
सोमंस्यप्प्रियाधामांनियत्रेन्द्रंस्यसुत्राम्म्णंःप्प्रियाधामांनियत्रं
सवितुश्प्प्रियाधामांनियत्रव्वरुंणस्यप्प्रियाधामांनियत्रव्वनस्प्प

तेंऽप्प्रियापाथाᳬंसियत्त्रेदेवानामाज्ज्यपानाम्प्रियाधामानियत्त्राग्ग्नेर्होतुः प्प्रियाधामानितत्त्रैताप्प्रस्त्तुत्त्यैवोपस्त्तुत्त्यैवोपावस्रक्क्षद्द्रभीयसऽइवकृत्त्वीकरद्देवन्देवोव्वनस्प्पतिर्ज्जुषताᳬंहविर्होतर्य्यज ॥ ४६ ॥ होतायक्क्षदग्ग्निᳬंस्विष्टकृतम् ॥ होतायक्क्षदग्ग्निᳬंस्विष्टकृतमयाडग्ग्निरश्श्विनोश्छागस्यहविषः प्प्रियाधामान्ययाड्ढरस्वत्त्यामेषस्यहविषः प्प्रियाधामान्ययाडिन्द्रस्यऽ ॥ २१ ॥



१ "संयोगाद्यश्च यो भवेत्" या. शि.। यद्यनुस्वारस्य पूर्वो वर्णो दीर्घो वा ह्रस्वः संयोगाद्यश्चेत्तदाऽनुस्वारो मात्रिकोᳬंइत्याकारको ह्रस्वो ज्ञेयो लेख्य उच्चारणीयश्च सर्वत्र। परञ्च यत्र संयोगाद्य त्पूर्वर्णव्यञ्जनादिगो दीर्घो वा ह्रस्वो वर्णस्तत्र तु ᳩ इत्याकारकोऽनुस्वारो दीर्घो ज्ञेयो बोद्धः। यथा देवानां ह्रदयेन।

ऋषभस्यहविषःप्प्रियाधामान्ययाऽग्नेःप्प्रियाधामान्ययाड्ढ्सो
मस्यप्प्रियाधामान्ययाऽइन्द्रस्यसुत्राम्म्णःप्प्रियाधामान्यया
ड्ढ्सवितुःप्प्रियाधामान्ययाड्ढ्वरुणस्यप्प्रियाधामान्ययाड्ढ्वन
स्प्पतेःप्प्रियापाथाᳫंस्ययाड्ढ्देवानामाज्यपानाम्प्प्रियाधामानि
यक्क्षदग्नेर्होतुःप्प्रियाधामानियक्क्षत्स्वम्महिमानमायजता
मेज्याऽइषःकृणोतुसोऽअध्वराजातवेदाजुषताᳫंहविर्होतर्य्य
ज॥४७॥ [७-५] देवम्बर्हिः[1]। सरस्वतीसुदेवमिन्द्रेऽअश्विना॥

१ रकारहकारयोगेऽत्र करिण्यादीनां पंचस्वरभक्तीनां मध्ये "करिणी रहयोर्योगे" (या. शि.) इत्यनेन करिणी स्वरभक्तिर्ज्ञेया। एवं सर्वत्र।

शु. य. संहि. १२॥ तेजोनचक्क्षुरक्क्ष्योर्ब्बर्हिषादधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तु
यज ॥ ४८ ॥ देवीर्द्वारः ॥ देवीर्द्वारोऽअश्विनाभिषजे
न्द्रेसरस्वती ॥ प्प्राणन्नव्वीर्य्यन्नसिद्वारोदधुरिन्द्रियंव्वसुवनेव्वसु ॥ २१ ।
धेयस्यव्यन्तुयज ॥ ४९ ॥ देवीऽउषासौ ॥ देवीऽउषासाव
श्विनासुत्रामेन्द्रेसरस्वती ॥ बलन्नव्वाचमास्यऽउषाब्भ्यान्दधुरि
न्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५० ॥ देवीजोष्ट्री ॥ ॥ १२ ।
देवीजोष्ट्रीसरस्वत्यश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्ण्णयोर्य्य



उ. वि. अ.

शोजोष्ट्रीँभ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥५१॥
देवीऽऊर्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्त्यश्श्वि
नाभिषजावतः ॥ शुक्रन्नज्योतिस्त्तनयोराहुतीधत्तऽइन्द्रियं
व्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५२ ॥ देवादेवानाम् ॥ देवा
देवानाम्भिषजाहोताराविन्द्रमश्विना ॥ व्वषट्कारैः सरस्वती
त्त्विषिन्नहृदयेमतिँहोतृभ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्य
व्यन्तुयज ॥ ५३ ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदे

शु. य. संहि. वीरश्विनेडासरंस्वती ॥ शष्पन्नमध्येनाभ्यामिन्द्रांयदधुरिन्द्रि उ. वि. अ.
॥ १२ ॥ यंव्वसुवनेव्वसुधेयंस्यव्यन्तुयजं ॥ ५४ ॥ देवऽइन्द्रः ॥ देवऽ ॥ २१ ॥
इन्द्रोनराशꣳसंस्त्रिवरूथःसरंस्वत्याश्विभ्यामीयतेरथः ॥ रेतो
नरूपममृतञ्जनित्रमिन्द्रांयत्त्वष्टादधंदिन्द्रियाणिव्वसुवनेव्वसु
धेयंस्यव्यन्तुयजं ॥ ५५ ॥ देवोदेवैः ॥ देवोदेवैर्व्वनस्पति
र्हिरंण्यपर्णोऽअश्विभ्याꣳसरंस्वत्यासुपिप्पलऽइन्द्रांयपच्य ॥ १३ ॥
तेमधुं ॥ ओजोनजूतिर्ऋषभोनभामंव्वनस्पतिर्न्नोदधंदिन्द्रि

याणिंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ५६ ॥ देवम्बर्हिः ॥
देवम्बर्हिर्व्वारितीनामध्वरेस्स्तीर्ण्णमश्विभ्यामूर्ण्णम्म्रदाः सरस्व
त्यास्योनमिन्द्रतेसदंः ॥ ईशायैमन्न्युःराजानम्बर्हिषादधु
रिन्द्रियंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥५७॥ देवोऽअग्निः ।
स्विष्टकृद्देवान्यंक्षद्यथायथःहोतारावश्विनाव्वाचाव्वा
चःसरस्वतीमग्निःसोमःस्विष्टकृत्स्विष्टऽइन्द्रःसुत्रामासवि
ताव्वरुणोभिषगिष्टोदेवोव्वनस्पतिःस्विष्टादेवाऽआज्यपाःस्वि
सं. २ ५७५

शु. य. संहि. ॥ १४ ॥

ष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशोनदधदिन्द्रियमूर्ज्जम उ. वि. अ.
पचितिᳪंस्वधांव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥५८॥ अग्निमद्य । ॥ २१ ॥
होतारमवृणीतायँय्यजमानःपचन्पक्तीःपचन्पुरोडाशान्ब
ध्नन्नश्विभ्याञ्छागᳪंसरस्वत्यैमेषमिन्द्रायऽऋषभᳪंसुन्वन्न
श्विभ्याᳪंसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमान्त्सूपस्थाऽ
अद्य ॥५९॥ सूपस्थाऽअद्य । देवोव्वनस्पतिरभवदश्विभ्या ॥ १४ ॥
ञ्छागेनसरस्वत्यैमेषेणेन्द्रायऽऋषभेणाक्षँस्तान्मेदस्तःप्र

तिपचुताग्गृभीषुतावीवृधन्तपुरोडाशैरपुंरश्विनासरस्वतीन्द्रः
सुत्रामासुरासोमाँस्त्वामुद्य ॥ ६० ॥ त्वामुद्य ॥ त्वामुद्यऽ
ऋषऽआर्षेयऽऋषीणान्नपादवृणीतायँऽस्यजमानोबहुभ्युऽआ
सङ्गतेभ्यऽएषमेदेवेषुवसुवार्य्यायक्ष्यतऽइतितायादेवादेव
दानान्यदुस्तान्यस्म्माऽआचुशास्वाचंगुरस्वेषितश्चहोतरासि
भद्रवाच्च्यायप्प्रेषितोमानुषःसूक्तवाकायसूक्ताब्रूहि ॥ ६१ ॥
[१४-६]इतिश्रीवाजसनेयसंहितायामेकविंशोऽध्यायः॥२१॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ तेजोसिपंचा, ग्नयऽएका, हिङ्काराययद्वे, तत्त्सवितुर्द्दश, विभूम्मात्रैका, कायद्वे, ऽआब्रह्मँस्त्रयोदश, शेषाद्वैकैको, नविꣳशतिश्चतुस्त्रिꣳशत् [अ. २२ मं. ३४ अनु. १९] ॥ हरिः ॐ ॥

तेजोसि ॥ तेजोसिशुक्क्रममृतमायुष्प्पाऽआयुर्म्मेपाहि ॥ देवस्यत्त्वासवितुः प्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यामाद ॥१५॥

१ आयुष्पा "समासपदे च" (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन एकस्मिन्पदे यो विसर्गः तस्य विसर्जनीयस्य ककारपकारयोः परे यथायोगं सकारः षकारश्चैकपदे भवतः । इति षकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इति पकारस्य द्वित्वम् ।

दे ॥ १ ॥ इमामंगृभ्णन् ॥ इमामंगृभ्णन्नशनामृतस्यपूर्व्वऽ
आयुंषिव्विदथेंषुकुव्या ॥ सानोऽअस्मिन्त्सुतऽआबंभूवऽऋ
तस्यसामंन्त्सरमारपंन्ती ॥ २ ॥ अभिधाऽअंसि ॥ अभिधाऽ
अंसिभुवंनमसियुन्तासिधुर्त्ता ॥ सत्त्वमुग्निंव्वैश्वानरᳫं सप्प्रंथ
सङ्गच्छस्वाहांकृतᳫं ॥ ३ ॥ स्वगात्त्वां । देवेभ्य॑ःप्प्रजापंत
येब्रह्मन्नश्वंम्भन्त्स्यामिदेवेभ्यंःप्प्रजापंतयेतेनंराध्यासम् ॥
तम्बंधानदेवेभ्यंःप्प्रजापंतयेतेनंराध्नुहि ॥ ४ ॥ प्रजापंतये

 त्त्वा ॥ प्रजापतयेत्त्वाजुष्टम्प्रोक्क्षामीन्द्राग्ग्निब्भ्यान्त्वाजुष्टम्प्रो 
क्क्षामिव्वायवेत्त्वाजुष्टम्प्रोक्क्षामिविश्श्वेब्भ्यस्त्वादेवेब्भ्योजुष्ट 
॥१६॥
॥ २२ ॥
म्प्रोक्क्षामिसर्व्वेब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्रोक्क्षामि ॥ योऽअर्व्व
न्तञ्जिघांᳪसतितमब्भ्यमीतिव्वरुणः ॥ परोमर्त्तः परश्श्वा ॥५॥
[५-१] अग्ग्नयेस्वाहा ॥ अग्ग्नयेस्वाहासोमायस्वाहापाम्मो
दायस्वाहासवित्त्रेस्वाहाव्वायवेस्वाहाव्विष्ष्णवेस्वाहेन्द्रायस्वाहा ॥ १६ ॥
बृहस्प्पतयेस्वाहामित्त्रायस्वाहाव्वरुणायस्वाहा ॥ ६ ॥ [१-२]

१ अत्र द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते विवृत्तिस्तत्र विज्ञेया । (या. शि.) तेनात्रोकाराकारयोः पूर्वरूपकारकः सन्धिर्न भवति ।

हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्क्रन्दते
स्वाहावक्क्रन्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथायस्वाहागन्धाय
स्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दिताय
स्वाहाव्वल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहा
जाग्ग्रतेस्वाहाकूजतेस्वाहाप्प्रबुद्धायस्वाहाव्विजृम्भमाणायस्वा
हाव्विचृत्तायस्वाहासꣳहानायस्वाहोपस्त्थितायस्वाहायनाय
स्वाहाप्प्रायणायस्वाहा ॥ ७ ॥ यतेस्वाहा ॥ यतेस्वाहा

१ अत्र यकारस्य पादादौ सर्वत्र जकारोच्चारणम् ।

॥ १७ ॥ धावतेस्वाहोद्द्रावायस्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृता
यस्वाहानि[1]षण्णायस्वाहोत्थितायस्वाहाजवायस्वाहाबलाय ॥ २२ ॥
स्वाहाविवर्त्तमानायस्वाहाविवृत्तायस्वाहाविधून्वानायस्वाहा
विधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वाहेक्षमाणाय
स्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायदत्ति
तस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंकरोतितस्मैस्वा ॥ १७ ॥

---

१ निषण्णाय। अत्र द्वयोर्नकारयोर्णत्वं निपात्यते। प्रथमस्य "तवर्गे च" (शु. य. प्रा. ३ अ. ९४ सू.) इत्यनेन तवर्गस्य व्यवधानेन णत्वाप्राप्तौ द्वितीयस्य नकारस्य "स्वरयवहकपेक्ष" (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेन व्यवधानातिरिक्तनकारस्य व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय०" (शु. य. प्रा. ३ अ. ८७ सू.) इत्यनेन णत्वनिपातः।

हांकुर्वतेस्वाहांकृतायस्वाहा ॥ ८ ॥ [ २-३ ] तत्त्संवि
तुः ॥ तत्त्संवितुर्व्वरेण्ण्यम्भग्गोंदेवस्यंधीमहि ॥ धियोयो
नंःप्प्रचोदयांत् ॥ ९ ॥ हिरंण्ण्यपाणिमूतये । सवितार
मुपंह्वये ॥ सचेत्त्तांदेवतांपदम् ॥ १० ॥ देवस्यचेततं ॥
देवस्यचेतंतोमहीम्प्रसंवितुर्हवामहे ॥ सुमतिꣳसत्त्यरांधसम्
॥ ११ ॥ सुष्टुतिꣳसुंमतीवृधंः ॥ सुष्टुतिꣳसुंमतीवृधोंरातिꣳ
संवितुरींमहे ॥ प्रदेवायमतीविदें ॥ १२ ॥ रातिꣳसत्त्य

१ सुमतीवृधः । अत्र "अश्वरश्मिसुमति" (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेन वकारे परे ह्रस्वेकारस्य सुमतिशब्दस्य दीर्घत्वम् ।

तिम् ॥ रातिꣳसत्त्पतिम्महेसवितारमुपह्वये ॥ आसवन्देव
वीतये ॥ १३ ॥ देवस्यसवितुः ॥ देवस्यसवितुर्म्मतिमासवं ॥ २२ ॥
विश्वदेव्यम् ॥ धियाभर्गम्मनामहे ॥ १४ ॥ अग्निꣳस्तो
मेन । बोधयसमिधानोऽअमर्त्त्यम् ॥ हव्यादेवेषुनोदधत्
॥ १५ ॥ सहव्यवाट् ॥ सहव्यवाडमर्त्त्यऽउशिग्ग्दूतश्चनो
हितꣳ ॥ अग्निर्द्धियासमृण्ण्वति ॥ १६ ॥ अग्निन्दूतम् ॥ ॥ १८ ॥
अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२॥ऽआसादया

द्दिह ॥ १७ ॥ अजीजनोहि । पवमानसूर्य्यैविधारेशक्क्म
नापय्यं ॥ गोजीरयारꣳहमाणꣳपुरन्ध्या ॥ १८॥ [ १०-४ ]
व्विभूम्मात्रा । प्प्रभूश्पित्राश्श्वोसिहयोस्यत्त्योसिमयोस्यर्व्वासिस
प्तिरसिव्वाज्ज्यसिव्वृषासिनृमणाऽअसि ॥ ययुन्नामासिशिशुन्र्ना
मास्यादित्त्यानाम्पत्त्वान्विहिदेवाऽआशापालाऽएतन्देवेब्भ्यो
श्श्वम्मेधायप्प्रोक्क्षितꣳरक्क्षतेहरन्तिरिहरमतामिहधृतिरिहस्व
धृतिꣳस्वाहा ॥ १९ ॥ [ १-५ ] कायस्वाहा ॥ कायस्वाहाकस्म्मै

स्वाहाकतमस्म्मैस्वाहास्वाहाधिमाधीतायस्वाहामनं÷प्प्रजाप
॥१९॥ तयेस्वाहाचित्तंव्विज्ञातायादित्त्यैस्वाहादित्त्यैमह्यैस्वाहादित्त्यै ॥२२॥
सुमृडीकायैस्वाहासरस्वत्त्यैस्वाहासरस्वत्त्यैपावकायैस्वाहासर
स्वत्त्यैबृहत्त्यैस्वाहापूष्णेस्वाहापूष्णेप्प्रपत्थ्यायस्वाहापूष्णे
नरन्धिषायस्वाहात्त्वष्ट्रेस्वाहात्त्वष्ट्रेतुरीपायस्वाहात्त्वष्ट्रेपुरुरूपा
यस्वाहाव्विष्णवेस्वाहाव्विष्णवेनिभूयपायस्वाहाव्विष्णवेशि ॥१९॥
पिविष्टायस्वाहा ॥ २० ॥ व्विश्वोदेवस्य । नेतुर्म्मर्त्तोव्वुरीतसक्

ख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा ॥२१॥
[२-६] आब्रह्मन् ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामारा
ष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनु
र्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठाःसभेयोयु
वास्ययजमानस्यवीरोजायतान्निकामेनिकामेनःपर्जन्योवर्ष
तुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम्
॥२२॥ [१-७] प्राणायस्वाहा।पानायस्वाहाव्यानायस्वाहा

शु. य. संहि. चक्षुषेस्वाहाश्श्रोत्रायस्वाहावाचेस्वाहामनसेस्वाहा ॥ २३ ॥ उ. वि.
[१-८] प्राच्यैदिशे । स्वाहार्वाच्यैदिशेस्वाहादक्षिणायैदिशे अ.
॥२०॥ स्वाहार्वाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोदी ॥ २२ ॥
च्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहार्वाच्यैदिशे
स्वाहावाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४ ॥ [१-९]
अद्भ्यःस्वाहा । वार्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वा ॥ २० ॥
हास्रवन्तीभ्यःस्वाहास्यन्दमानाभ्यःस्वाहाकूप्याभ्यः

स्वाहासूद्याभ्यःस्वाहाधार्याभ्यःस्वाहार्णवायस्वाहासमु
द्रायस्वाहासरिरायस्वाहा ॥ २५ ॥ [ १-१० ] वाता
यस्वाहा । धूमायस्वाहाऽभ्रायस्वाहामेघायस्वाहाविद्योतमा
नायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षते
स्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीताय
स्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहाप्रुष्वाभ्यःस्वाहाह्रादु
नीभ्यःस्वाहानीहारायस्वाहा ॥ २६ ॥ [ १-११ ] अग्न

शु. य. संहि. येस्वाहा ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यै उ. वि.
॥२१॥ स्वाहान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशाभ्यꣳस्वा अ. ॥ २२ ॥
होर्व्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ [१-१२]
नक्षत्रेभ्यꣳस्वाहा। नक्षत्रियेभ्यꣳस्वाहाहोरात्रेभ्यꣳस्वाहा
र्द्धमासेभ्यꣳस्वाहामासेभ्यꣳस्वाहाऽऋतुभ्यꣳस्वाहार्त्तवेभ्यꣳ
स्वाहासंवत्सरायस्वाहाद्यावापृथिवीभ्याꣳस्वाहाचन्द्रायस्वा ॥ २१ ॥
हासूर्य्यायस्वाहारश्मिभ्यꣳस्वाहावसुभ्यꣳस्वाहारुद्रेभ्यꣳ

स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः
स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वा
हा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ २८ ॥
[१-१३] १३०० शतम् ॥ पृथिव्यै स्वाहा ॥ पृथिव्यै स्वाहान्त
रिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्ष
त्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वा
हा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा

 

॥२२॥ ॥ २९ ॥ [१-१४] असंवेस्वाहा ॥ असंवेस्वाहाव्वसंवेस्वाहा
व्विभुवेस्वाहाव्विवंस्वतेस्वाहागणश्रियेस्वाहागणपंतयेस्वाहाभि ॥ २२ ॥
भुवेस्वाहाधिंपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वाहाचन्द्रा
यस्वाहाज्ज्योतिषेस्वाहामलिम्म्लुचायस्वाहादिवांपतयंतेस्वाहा
॥ ३० ॥ [१-१५] मधंवेस्वाहा ॥ मधंवेस्वाहामाधंवाय
स्वाहाशुक्क्रायस्वाहाशुचंयेस्वाहानभंसेस्वाहानभस्यायस्वाहे ॥ २२ ॥
षायस्वाहोर्ज्जायस्वाहासहंसेस्वाहासहस्यायस्वाहातपंसेस्वाहा

तपस्यायस्वाहांऽहसस्पतयेस्वाहां ॥ ३१ ॥ [१-१६] व्वाजाय
स्वाहां । प्प्रसवायस्वाहांपिजायस्वाहाक्क्रतवेस्वाहास्वःस्वा
हांमूर्द्ध्नेस्वाहांव्यश्नुविनेस्वाहान्त्यांयस्वाहान्त्यांयभौवनाय
स्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहांप्प्रजापतयेस्वाहां
॥ ३२ ॥ [१-१७] आयुर्य्यज्ज्ञेनं । कल्प्पताऽंस्वाहांप्प्राणो
यज्ज्ञेनंकल्प्पताऽंस्वाहांपानोयज्ज्ञेनंकल्प्पताऽंस्वाहांव्यानो
यज्ज्ञेनंकल्प्पताऽंस्वाहोदानोयज्ज्ञेनंकल्प्पताऽंस्वाहासमा

नोयज्ञेनंकल्पताᳪंस्वाहाचक्षुर्य्यज्ञेनंकल्पताᳪंस्वाहा
श्श्रोत्रँय्यज्ञेनंकल्पताᳪंस्वाहाव्वाग्ग्यज्ञेनंकल्पताᳪंस्वा
हामनोयज्ञेनंकल्पताᳪंस्वाहात्मायज्ञेनंकल्पताᳪंस्वा
हाब्रह्मायज्ञेनंकल्पताᳪंस्वाहाज्योतिर्य्यज्ञेनंकल्पताᳪं
स्वाहास्वर्य्यज्ञेनंकल्पताᳪंस्वाहापृष्ठँय्यज्ञेनंकल्पताᳪं
स्वाहायज्ञोयज्ञेनंकल्पताᳪंस्वाहा॥३३॥ [१-१८]एकंस्मै ॥२२॥
स्वाहा ॥ एकंस्मैस्वाहाद्वाभ्याᳪंस्वाहाशतायस्वाहैकंशताय

स्वाहाव्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥३४॥ [१-१९] इतिश्रीवा-
जसनेयसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीवेदपुरुषाय
नमः॥ अनुवाकसूत्रम् ॥ हिरण्यगर्भोयश्प्राणतोद्विकौ, युञ्ज
न्त्यष्टौ, वायुष्ट्वापञ्च, प्राणायतिस्र, उत्सक्थ्याद्वादश, गायत्री
त्रिष्टुप्, कस्त्वाषट्कौ, कश्स्विदष्टौ, कास्विद्दश, सुभूश्स्वयंभू-
स्तिस्र, एकादश पञ्चषष्टिः ॥ [अ. २३ मं. ६५ अनु. ११]
हरिः ॐ ॥ हिरण्यगर्भश्सम् ॥ हिरण्यगर्भश्समवर्त्तताग्रे

भूतस्यंजातश्पतिरेकंऽआसीत ॥ सदाधारपृथिवीन्द्यामुते
॥२४॥ माङ्कस्म्मैदेवायहविषाविधेम ॥ १ ॥ उपयामगृहीतोसि । ॥२३॥
प्प्रजापतयेत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिःसूर्य्यस्तेमहिमा ॥
यस्तेहन्त्संवत्त्सरेमहिमासम्बभूवयस्तेवायावन्तरिक्षेम
हिमासम्बभूवयस्तेदिविसूर्य्येमहिमासम्बभूवतस्मैतेमहि
म्नेप्प्रजापतयेस्वाहादेवेब्भ्यः ॥ २ ॥ [२-१] यःप्प्राण ॥२४॥
तः ॥ यःप्प्राणतोनिमिषतोमहित्त्वैकऽइद्राजाजगतोबभूव ॥

यऽईशेऽअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम
॥ ३ ॥ उपयामगृहीतोसि । प्रजापतयेत्त्वाजुष्टङ्गृह्णाम्म्येष
तेयोनिश्चन्द्रमास्त्तेमहिमा ॥ यस्त्तेरात्रौसंवत्त्सरेमहिमासम्ब
भूवयस्त्तेपृथिव्यामग्नौमहिमासम्बभूवयस्त्तेनक्षत्रेषुचन्द्रम
सिमहिमासम्बभूवतस्मैतेमहिम्नेप्रजापतयेदेवेभ्यःस्वाहा

१ द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते । विवृत्तिस्तत्र विज्ञेया "यऽईशे" तु निदर्शनम् । या. शि. । अत्र यः इति पदस्थस्य विसर्गस्य "कण्ठ्यपूर्वो यकारमरिफितः" (शु. य. प्रा. ४ अ. ४७ सू.) इत्यनेन यकारे "यवयोः पदान्तयोः स्वरमध्ये लोपः" (शु. य. प्रा. ४ अ. १२५ सू.) इत्यनेन यस्य लोपेऽकारेकारयोः "कण्ठ्यादिवर्ण एकारम्" (शु. य. प्रा. ४ अ. ५३ सू.) इत्यनेनैकारे प्राप्ते "न परकालः पूर्वकाले पुनः" (शु. य. प्रा. ३ अ. ४ सू.) इत्यनेन निषेधे सन्ध्यभावः । उच्चारणेऽप्यर्धमात्राकालिको विरामः । तज्ज्ञापकं(ऽ)इत्याकारकं चिह्नम् । अत्र पाकवतीवृत्तिर्ज्ञेया प्रारम्भे ह्रस्वयोगात् ।

॥ ४ ॥ [ २-२ ] युञ्जन्तिब्रद्ध्नम् ॥ युञ्जन्तिब्रद्ध्नमरुषञ्चरं
॥२५॥ न्तुम्परितस्त्थुषः ॥ रोचन्तेरोचनादिवि॥ ५॥ युञ्जन्त्यस्य ॥ ॥ २३ ॥
युञ्जन्त्यस्यकाम्म्याहरीविपक्क्षसारथे ॥ शोणाधृष्ण्णूनृवा
हंसा ॥ ६ ॥ यद्वातः ॥ यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्य
तन्न्वम् ॥ एतꣳस्तोतरनेनपथापुनरश्श्वमावर्त्तयासिनः ॥ ७॥
वसवस्त्त्वा । ञ्जन्तुगायत्रेणच्छन्दसारुद्रास्त्त्वाञ्जन्तुत्रैष्टुभे ॥ २५ ।
नच्छन्दसादित्यास्त्त्वाञ्जन्तुजागतेनच्छन्दसा ॥ भूर्भुवःस्व

ह्वांजी३॥ श्लाची३॥ व्ययेगव्यंऽएतदन्नमत्तदेवाऽएतदन्नम
द्धिप्प्रजापते ॥८॥ कश्स्वित् ॥ कश्स्विदेकाकीचंरतिकऽउंस्वि
ज्जायतेपुनं÷ ॥ किꣳस्विद्धिमस्यंभेषजाङ्किम्म्वावपंनम्महत्
॥९॥ सूर्य्यंऽएकाकी । चंरतिचन्द्रमांजायतेपुनं[1]÷ ॥
अग्निर्हिमस्यंभेषजम्भूमिरावपंनम्महत् ॥१०॥ कास्वित् ॥
कास्विदासीत्पूर्व्वचित्तिꣳकिꣳस्विदासीद्बृहद्वयं÷ ॥ कास्विदा

१ यत्र संयोगपरोऽसंयोगपरो वकाररहितो वकारसहितः सविसर्गो मात्रिकः स्वरितस्वरस्तस्मात्परस्य विसर्गस्य (÷) इत्याकारक उभयक्षेपः । मात्रिके भयं क्षिपेत् । (या. शि.) सयकारे द्विमात्रिकं तूभयक्षेपः । जात्यकारात्परस्य विसर्गस्याप्युभयक्षेपः "सहस्वै÷" ।

शु. य. संहि. ॥२६॥

उ. वि. अ. ॥२३॥

सीत्पिलिप्पिलाकाविदासीत्पिशङ्गिला ॥ ११ ॥ द्यौरांसी
त् ॥ द्यौरांसीत्पूर्वचित्तिरश्वं॑ऽआसीद्बृहद्वयः ॥ अविरा
सीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥ १२ ॥ [८-३]
वायुष्ट्वा । पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैःश
ल्मलिर्वृद्ध्या ॥ एषस्यराथ्योवृषापड्भिश्चतुर्भिरेदगन्ब्रह्मा
कृष्णश्चनोवतुनमोग्नये ॥ १३ ॥ सꣳशितोरश्मिना ॥ ॥२६॥
सꣳशितोरश्मिनारथꣳसꣳशितोरश्मिनाहयः ॥ सꣳ

१ यत्र मात्रिकाद्द्विमात्रिकाद्वानुदात्तात्परो विसर्गस्तस्य विसर्गस्य (ꣳ) इत्याकारिकया कनिष्ठिकया निर्देशः।

शिंतोऽअप्प्स्वप्प्सुजाब्ब्रह्मासोमंपुरोगवं ॥ १४ ॥ स्वयं
व्वाजिन् ॥ स्वयंव्वाजिंस्तन्न्वङ्कल्प्पयस्वस्वयंय्यंजस्वस्वयञ्जु
षस्वं ॥ महिमातेन्न्येनन्नसन्नशे ॥ १५ ॥ नवै ॥ नवाऽ
उंऽएतन्म्म्रियसेनरिंष्ष्यसिदेवाँ २॥ऽइदेंषिपथिभिंःसुगेभिंः ॥
यत्रासंतेसुकृतोयत्रतेययुस्तत्रंत्त्वादेवश्संवितादंधातु ॥ १६ ॥
अग्निश्पशुश् ॥ अग्निश्पशुरांसीत्तेनांयजन्तसऽएतँल्लोक

१ "उकारोऽप्र॒ ` स्पर्शात्" (शु. य. प्रा. ४ अ. ९० सू.) अपृक्त एकवर्ण उकारोऽस्पर्शात्परः प्रकृत्या भवति स्वरे प्रत्यये । अत्रोकारोऽपृक्तोऽस्पर्शात्परः एतदिति स्॒ रे तस्मान्न सन्धिः ।

शु. य. संहि. मंजयद्यस्मिन्नग्निःसतेंलोकोभंविष्यतितञ्जैष्यसिपिबैताऽ उ. वि.
॥२७॥ अपः ॥ वायुःपशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयद्य अ.
स्मिन्वायुःसतेंलोकोभंविष्यतितञ्जैष्यसिपिबैताऽअपः ॥ ॥ २२ ॥
सूर्य्यः[1]पशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयद्यस्मिन्त्सू
र्य्यःसतेंलोकोभंविष्यतितञ्जैष्यसिपिबैताऽअपः ॥ १७ ॥
[५-४] प्राणायस्वाहां । पानायस्वाहांव्यानायस्वाहां ॥ ॥ २७ ॥

१ मात्रिकाद्विमात्रिकादुदात्तात् परस्य विसर्जनीयस्य (ः) इत्याकारिकया निर्देशः ।

अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससंस्त्यश्वकः
सुभंद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ गणानान्त्वा ।
गणपंतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपंतिꣳहवामहेनिधीना
न्त्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमंजानिगर्भध
मात्वमंजासिगर्भधम् ॥ १९ ॥ ताऽउभौचतुरःपदःस
म्प्रसारयावस्वर्गेलोकेप्प्रोर्णुवाथांव्वृषावाजीरेतोधारेतोदधातु
॥ २० ॥ [३-५] उत्संक्थ्याऽअवं । गुदन्धेहिसमञ्जि

श्चौंरयावृषन् ॥ स्त्रीणाञ्जीवभोजनꣳ ॥ २१ ॥ यका
सकौ । शंकुन्तिकाहलगितिवञ्चति । आहंन्तिगभेपसो
निगंल्गलीतिधारंका ॥ २२ ॥ यकोसकौ । शंकुन्तकऽ
आहलगितिवञ्चंति ॥ विवंक्षतऽइवतेमुखमध्वंर्य्योमानस्त्व
मभिभांषथाः ॥ २३ ॥ माताचं । तेपिताचतेग्ग्रंवृक्षस्यं
रोहतः ॥ प्रतिलामीतितेपितागभेमुष्टिमतꣳसयत् ॥ २४ ॥ ॥ २८ ।

1 चारयावृषन् । अत्र "अश्वरदिमर्मतिसुमतिथसुतचारय॰" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वृषन् इत्यस्य वकारे परे चारयाकारस्य दीर्घाकारः।

माताचं। तेपिताचतेग्ग्रेवृक्षस्यंक्क्रीडतःꣳ ॥ व्विवंक्क्षतऽइवते
मुखम्ब्रह्मन्मात्त्वंवंदोबहु ॥ २५ ॥ ऊर्द्ध्वामेनाम् ॥ ऊर्द्ध्वा
मेनामुच्छ्रापयगिरौभारꣳहरंन्निव ॥ अथांस्यैमध्ध्यमेधताꣳ
शीतेव्वातेपुनन्निव ॥ २६ ॥ ऊर्द्ध्वमेनम् ॥ ऊर्द्ध्वमेनमुच्छ्रंय
ताद्गिरौभारꣳहरंन्निव ॥ अथांस्यमध्ध्यमेजतुशीतेव्वातेपुन
न्निव ॥ २७ ॥ यदंस्याꣳ ॥ यदंस्याऽअꣳहुभेद्याःक्कृधुस्त्थू

१ यत्र मात्रिकाद्विमात्रिकाद् [illegible]परो विसर्गस्तत्र विसर्गस्य (ꣳ) इत्याकारिकया कनिष्ठिकया निर्देशः।

 लमुपातंसत् ॥ मुष्काविदस्याऽएजतोगोशफेशकुलाविव 
॥२९॥ ॥ २८ ॥ यद्देवासः ॥ यद्देवासोललामंगुम्प्रविष्टीमिनमा 
विषुः ॥ सुक्थ्नादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥२९॥ ॥ २३ ॥
यद्धरिणः ॥ यद्धरिणोयवमत्तिनपुष्टम्पशुमन्यते ॥ शूद्राय
दर्य्यंजारानपोषायधनायति ॥ ३० ॥ यद्धरिणः ॥ यद्धरि
णोयवमत्तिनपुष्टम्बहुमन्यते । शूद्रोयदर्य्यायैजारोनपोषम
नुमन्यते ॥ ३१ ॥ दधिक्राव्णोऽअकारिषम् ॥ दधिक्रा ॥ २९ ॥

ण्णोऽअकारिषञ्जिष्णणोरश्श्वस्यव्वाजिनंः ॥ सुरभिनोमुखा
करत्त्प्रणऽआयूंᳫंषितारिषत् ॥ ३२ ॥ [ १२-६ ] गायत्त्री
त्रिष्टुप् ॥ गायत्त्रीत्त्रिष्टुब्ब्जगंत्त्यनुष्टुप्पङ्क्त्तयासह ॥ बृहत्त्यु
ष्णिहांककुप्प्सुचीभिंःशम्म्यन्तुत्त्वा ॥ ३३ ॥ द्विपंदायाः ॥
द्विपंदायाश्श्चतुष्पदास्त्रिपंदायाश्श्चषट्ट्पंदाः ॥ व्विच्छंन्दायाश्श्चस
च्छंन्दाःसुचीभिंःशम्म्यन्तुत्त्वा ॥ ३४ ॥ महानाम्न्योरे
वत्त्यंः ॥ महानाम्न्योरेवत्त्योव्विश्श्वाऽआशांःप्प्रभूवंरीः ॥

मैघीर्व्विद्युतोव्वाचः सूचीभिः शम्म्यन्तुत्त्वा ॥ ३५ ॥ नार्य्यं
स्त्ते ॥ नार्य्यंस्त्तेपत्न्योलोमव्विचिंन्वन्तुमनीषया ॥ देवा
नाम्पत्न्योदिशः सूचीभिः शम्म्यन्तुत्त्वा ॥ ३६ ॥ रजता
हरिंणीः ॥ रजताहरिंणीःसीसायुजोयुज्ज्यन्तेकर्म्मभिः ॥
अश्वंस्यव्वाजिनंस्त्वचिसिमाःशम्म्यन्तुशम्म्यंन्तीः ॥ ३७ ॥
कुविदङ्ग । यवंमन्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूय ॥ इहेहै ॥ २० ॥
षाङ्कृणुहिभोजंनानियेबर्हिषोनमंऽउक्तिंय्यजंन्ति ॥ ३८ ॥

[ ६-७ ] कस्त्वा ॥ कस्त्वाच्छ्यतिकस्त्वाविशास्तिकस्ते
गात्राणिशम्म्यति ॥ कऽउंतेशमिताकविः ॥ ३९ ॥ ऋत
वंस्ते ॥ ऋतवंस्तऽऋतुथापर्वशमितारोविशासतु ॥ संवत्सर
स्यतेजंसाशमीभिः शम्म्यन्तुत्वा ॥ ४० ॥ अर्द्धमासाःप
रूंषि । तेमासाऽआच्छ्यन्तुशम्म्यंन्तः ॥ अहोरात्राणि
मरुतोविलिष्टंसूदयन्तुते ॥ ४१ ॥ दैव्याऽअद्ध्वर्य्यवः ॥
दैव्याऽअद्ध्वर्य्यवस्त्वाच्छ्यन्तुविचशासतु ॥ गात्राणिपर्व

शस्त्तेसिमोᳪंकृण्ण्वन्तुशम्म्यंन्तीᳪं ॥ ४२ ॥ द्यौस्त्तें । पृथि
व्युन्त्तरिक्क्षंव्वायुष्च्छिद्द्रंपृणातुते ॥ सूर्य्यस्त्तेनक्क्षंत्त्रैᳪंसहलोक
ङ्कृणोतुसाधुया ॥ ४३ ॥ शन्तें ॥ शन्तेपरेब्भ्योगात्त्रेब्भ्यᳪं
शमस्त्त्ववरेब्भ्यᳪं ॥ शमस्त्थब्भ्योमज्जब्भ्यᳪंशम्म्वस्त्तुतन्न्वै
तवं ॥ ४४ ॥ [६-८] कश्श्वित् ॥ कश्श्विदेकाकी
चंरतिकऽउंस्विज्जायतेपुनं‌ᳪः ॥ किᳪंस्विद्धिमस्यंभेषजाङ्किं ॥ २१ ॥

१ "द्विमात्रिकं क्षिपेद्‌क म्" (या. शि.) इति नियमेन दीर्घस्वरितस्वराद्यत्र परो विसर्गस्तत्र(६)इत्याकारकः कनिष्ठिकानिर्देशवाचकोऽगुलिनिर्देशः सर्वत्र कार्यः ॥

व्यावपनम्महत् ॥ ४५ ॥ सूर्य्यऽएकाकी । चरतिचन्द्र
मांजायतेपुनः ॥ अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत्
॥ ४६ ॥ किꣳस्वित् ॥ किꣳस्वित्सूर्य्यसमञ्ज्योतिःकिꣳ
समुद्रसमꣳसरः ॥ किꣳस्वित्पृथिव्यैवर्षीयःकस्यमात्रानवि
द्यते ॥ ४७ ॥ ब्रह्मसूर्य्यसमम् ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौः
समुद्रसमꣳसरः ॥ इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानवि
सं. ५५ द्यते ॥ ४८ ॥ पृच्छामित्वा । चितयेदेवसखयदित्वमत्रम

नंसाजगन्थं ॥ येषुव्विष्णणुंस्त्रिषुपदेष्ष्वेष्टुस्तेषुव्विश्श्वम्भुवनमा
विवेशा ३ ॥ ॥ ४९ ॥ अपितेषु । त्रिषुपदेष्ष्वस्म्मियेषुव्विश्श्व
म्भुवनमाविवेशं ॥ सद्यःपर्य्यैमिपृथिवीमुतद्यामेकेनाङ्गेनदि
वोऽअस्यपृष्ठम् ॥ ५० ॥ केष्ष्वन्तः । पुरुषऽआविवेशका
न्यन्तःपुरुषेऽअर्प्पितानि ॥ एतद्ब्रह्मन्नुपवल्हामसित्त्वाकिं
स्विन्नःप्प्रतिवोचास्यत्रं ॥ ५१ ॥ पञ्चस्वन्तः । पुरुषऽआविं

॥ २२ ॥

१ "कुर्वणी लहकारयोः" (या. शि.) ल्कारहकारयोर्योगे कुर्वणीनाम स्वरभक्तिः । अत्र पञ्चानां स्वरभक्तीनां मध्ये कुर्वणी वर्तते ।

वेशुताऽन्यन्तःपुरुषेऽअर्प्पितानि ॥ एतत्त्वात्रंप्रतिमन्वानोऽ
अंस्मिन्नमायययांभवस्युत्तंरोमत् ॥५२॥ [ ८-९ ] कास्वित् ॥
कास्विंदासीत्पूर्वचिंत्तिःकिꣳस्विदासीद्बृहद्वयं÷ ॥ कास्विं
दासीत्पिलिप्पिलाकास्विंदासीत्पिशङ्गिला ॥ ५३ ॥ द्यौरां
सीत् ॥ द्यौरांसीत्पूर्वचिंत्तिरश्वंऽआसीद्बृहद्वयं÷ ॥ अविंरासी
त्पिलिप्पिलारात्रिंरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईम् ॥
काऽईंमरेपिशङ्गिलाकाऽईंकुरुपिशङ्गिला ॥ कऽईंमास्कन्दम

र्षतिकऽईम्पन्थांव्विसर्प्पति ॥ ५५ ॥ अजारे । पिशङ्गिला
श्वावित्त्कुरुपिशङ्गिला ॥ शशऽआस्क्कन्दमर्षत्त्यहिꣳपन्थांव्वि
सर्प्पति ॥५६॥ कत्त्यस्य । व्विष्ठाःकत्त्यक्क्षराणिकतिहोमासꣳक
तिधासमिद्धꣳ ॥ यज्ज्ञस्यंत्त्वाव्विदथापृच्छमत्त्रकतिहोतारऽऋतु
शोयजन्ति॥५७॥षडस्य । व्विष्ठाःशतमक्क्षराण्यशीतिर्होमाꣳ
समिधोहतिस्रः ॥ यज्ज्ञस्यतेव्विदथाप्प्रब्ब्रवीमिसप्तहोतारऽऋतु

१ अत्र "या तु हंसपदानाम सा तु रेफषकारयोः । (या. शि.) रकारषकारयोर्योगे हंसपदानाम स्वरभक्तिः । अत्र हंसपदानामस्वरभक्तिः । एवं सर्वत्र ।

ग्गोयजन्ति ॥५८॥ कोऽअस्य। व्वेदभुवनस्यनाभिङ्कोद्यावापृथि
वीऽअन्तरिक्षम्॥ कश्सूर्य्यस्यव्वेदबृहतोजनित्रङ्कोव्वेदचन्द्रमं
सँय्यतोजाः ॥५९॥ व्वेदाहम्॥ व्वेदाहमस्यभुवनस्यनाभिंव्वेदद्या
वापृथिवीऽअन्तरिक्षम्॥ व्वेदसूर्य्यस्यबृहतोजनित्रमथोव्वेदच
न्द्रमंसँय्यतोजाः ॥६०॥ पृच्छामित्त्वा ॥ पृच्छामित्त्वापरमन्तं
पृथिव्याःपृच्छामियत्रभुवनस्यनाभिः ॥ पृच्छामित्त्वावृ
ष्णोऽअश्वस्यरेतःपृच्छामिव्वाचःपरमंव्योम ॥ ६१ ॥ इयं

वेदिः ॥ इयंवेदिःपरोऽअन्तःपृथिव्याऽअयँय्यज्ञोभुवनस्य
॥२४॥ नाभिः ॥ अयꣳसोमोवृष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमं
व्योम ॥ ६२ ॥ [१०-१०] सुभूःस्वयम्भूः । प्रथमोन्त ॥ २३ ॥
र्म्महत्यर्णवे ॥ दधेहगर्भमृत्वियँय्यतोजातःप्रजापतिः
॥ ६३ ॥ होतायक्षत् ॥ होतायक्षत्प्रजापतिꣳसोमस्यम
हिम्नः ॥ जुषताम्पिबतुसोमꣳहोतर्य्यज ॥ ६४ ॥ प्रजापते ॥ २४ ॥
न । त्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामा

स्त्तेजुहुमस्त्तन्नोऽअस्त्तुद्वयँस्यांमुपतंयोरयीणाम् ॥ ६५ ॥
[ ३-११ ] इतिश्रीवाजसनेयसंहितायां त्रयोविंशोऽध्यायः
॥ २३ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥
अश्वस्त्तूपरो, धूम्म्रान्व्वसन्ताय, समुद्रायशिशुमारान्, मयुः
प्प्राजापत्त्योदशका, श्चत्वारश्चत्वारिꣳशत् [ अ. २४ मं.
४० अनु. ४ ] ॥ हरिः ॐ ॥ अश्वंस्त्तूपरः ॥ अश्वंस्त्तूपरोगो
मृगस्त्तेप्प्राजापत्त्याःकृष्ण्णग्ग्रीवऽआग्नेयोररराटेपुरस्त्तात्त्सार

स्वतीमेष्युधस्त्ताद्दृक्ष्वौराश्विनावधोरामौबाह्वोःसौमापौ
॥ २५ ॥ ष्णःश्यामोनाभ्याᳪंसौर्य्ययामौश्वेतश्चकृष्णश्चपार्श्वयो
स्त्वाष्ट्रौलोमशसक्त्थौसक्थ्योर्व्वायव्य÷श्वेतःपुच्छऽइन्द्रायस्व ॥ २४ ॥
पस्यायव्वेहद्वैष्णवोव्वामनः ॥ १ ॥ रोहितोधूम्म्ररोहि
तः। कर्कन्धुरोहितस्त्तेसौम्म्याबभ्भ्रुररुणबभ्भ्रुःशुकबभ्भ्रुस्त्ते
व्वारुणाःशितिरन्ध्रोऽन्न्यतः÷शितिरन्ध्रःसमन्तशितिरन्ध्रस्त्ते ॥ २५ ॥
सावित्राःशितिबाहुरन्न्यतः÷शितिबाहुःसमन्तशितिबाहुस्त्ते

बार्हस्पत्त्याः पृषतीक्षुद्रपृषतीस्थूलपृषतीता मैत्रावरुण्ण्यः
॥ २ ॥ शुद्धवालः सर्वशुद्धवालः ॥ शुद्धवालः सर्वशुद्धवा
लोमणिर्वालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्तेरुद्राय
पशुपतयेकर्णायामाऽअवलिप्तारौद्रानभोरूपाः पार्जन्याः
॥ ३ ॥ पृश्निस्तिरश्चीनपृश्निः ॥ पृश्निस्तिरश्चीनपृश्निरूर्द्ध्व
पृश्निस्तेमारुताः फल्गूर्लोहितोर्णीपलक्षीताः सारस्वत्त्यः
प्लीहाकर्णः शुण्ठाकर्णोद्ध्यालोहकर्णस्तेत्वाष्ट्राः कृष्ण

॥ २६ ॥ ग्ग्रीवꣳशितिकक्षोऽञ्जिसक्थस्तऽऐन्द्राग्नाःकृष्णाञ्जिरल्पा
ञ्जिर्म्महाञ्जिस्तऽउषस्याः ॥ ४ ॥ शिल्पाव्वैश्वदेव्यः ॥ ॥ २४ ॥
शिल्पाव्वैश्वदेव्योरोहिण्यस्त्र्यवयोव्वाचोविज्ञाताऽअदित्त्यैस
रूपाधात्रेव्वत्सतर्य्योदेवानाम्पत्नीभ्यः ॥ ५ ॥ कृष्ण
ग्ग्रीवाऽआग्नेयाः । शितिभ्रवोव्वसूनाꣳरोहितारुद्राणाꣳ
श्वेताऽअवरोकिणऽआदित्त्यानान्नभोरूपाःपार्ज्जन्याः ॥ ६ ॥ ॥ ३६ ॥

---

१ अञ्जिसक्थस्ते । अत्र ''भाविभ्य सः पं समानपदे'' (शु. य. प्रा. ३ अ. ५९ सू.) इत्यनेन सस्य षत्वे प्राप्ते ''अनुसन्तनो तु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमसत्वाऽभिसंविशन्तु सुसस्याअतिस्थूलम्मुसले पत्नी संयाजान्कनुस्थालजिकस्थो (शु. य. प्रा. ३ अ. ८२ सू.) इत्यनेन सस्य प्रकृतिभावे रूपम् ।

उन्नतऽऋषभः ॥ उन्नतऽऋषभोव्वामनस्तऽऐन्द्रावैष्णवाऽ
उन्नतश्शितिबाहुश्शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्त्याश्शुकरूपा
व्वाजिनाःकल्म्माषाऽआग्निमारुताश्श्यामाःपौष्णाः ॥ ७ ॥
एताऽऐन्द्राग्नाः ॥ एताऽऐन्द्राग्नाद्विरूपाऽअग्नीषोमीयां
व्वामनाऽअनड्वाहऽआग्नावैष्णवाव्वशामैत्रावरुण्ण्योन्न्यतऽए
न्न्योमैत्र्य्यः[1] ॥ ८ ॥ कृष्णग्ग्रीवाऽआग्नेयाः ॥ कृष्णग्ग्रीं

1 अत्र "जात्ये च स्वरिते चैव वकारो यत्र दृश्यते । कर्तव्यस्तूभयक्षेपो "वायुह्या÷ इति निदर्शनम्" ( या. शि. ) न्युब्जापरपर्याये जात्यस्वरे वकारे यकारे वा वत्सद्वयवत् कुमारीकुचयुग्मवत् ( ÷ ) इत्याकारको दक्षिणहस्तस्यांगुल्या उभयक्षेपः कार्यः । यथा वकारयोगे जात्य उभयक्षेपस्तथैव यकारेऽप्युभयक्षेपः ।

वाऽआग्नेयावुभ्रवंः सौम्म्याः श्वेतावायुव्याऽअविज्ञाताऽ
अदित्त्यैसरूपाधात्रेवत्त्सतुर्य्योदेवानाम्पत्नीभ्यः ॥ ९ ॥
कृष्णाभौमाः ॥ कृष्णाभौमाधूम्म्राऽआन्तरिक्क्षाबृहन्तो
दिव्याःशबलावैद्युताःसिद्ध्मास्तारकाः ॥ १० ॥ [ १०-१ ]
धूम्म्रान्वसन्ताय ॥ धूम्म्रान्वसन्तायालभतेश्वेतान्ग्रीष्म्माय
कृष्णान्वर्षाभ्योरुणाञ्छरदेपृषतोहेमन्तायपिशङ्गाञ्छि
शिराय ॥ ११ ॥ त्र्यवयोगायत्र्यै । पञ्चावयस्त्रिष्टुभेदित्त्य

वाहोजगंत्त्यैत्रिवत्त्साऽअंनुष्टुभेतुर्य्यंवाहऽउष्णिहे ॥ १२ ॥
पृष्ठवाहोव्विराजे ॥ पृष्ठवाहोव्विराजंऽउक्क्षाणोबृहत्त्याऽऋष
भाःककुभेनड्वाहं÷पङ्क्त्यैधेनवोतिच्छन्दसे ॥ १३ ॥ कृष्णग्
ग्रीवाऽआग्नेयाः ॥ कृष्णग्ग्रीवाऽआग्नेयाबब्भ्रवं÷सौ
म्म्याऽउंपद्ध्वस्त्ताःसांवित्रावंत्त्सतर्य्यं÷सारस्वत्त्य÷श्यामाः
पौष्णाःपृश्श्नंयोमारुताबंहुरूपाव्वैश्श्वदेवाव्वशाद्यावापृथिवी
याः ॥ १४ ॥ उक्त्ताःसंञ्चराः ॥ उक्त्ताःसंञ्चराऽएताऽऐन्द्रा

सं. ५६

शु. य. संहि.

॥ २८ ॥

उ. वि. अ.

॥ २४ ॥

ग्नाःकृष्णाव्वारुणाःपृश्नयोमारुताःकायास्तूपराः ॥ १५ ॥

अग्नयेनीकवते । प्रथमजानालभतेमरुद्भ्यःसान्तपने

भ्यःसवात्याम्मरुद्भ्योगृहमेधिभ्योबष्किहाम्मरुद्भ्यः

क्रीडिभ्यःसꣳसृष्टाम्मरुद्भ्यःस्वतवद्भ्योनुसृष्टान् ॥ १६ ॥

उक्ताःसञ्चराः ॥ उक्ताःसञ्चराऽएताऽऐन्द्राग्नाः[1]प्राशृङ्गा ॥ ३८ ॥

माहेन्द्राबहुरूपाव्वैश्वकर्मणाः ॥ १७ ॥ धूम्राबभ्रुनीका

१ प्राशृङ्गा। अत्र प्रशृङ्ग इति पदम्। प्रशब्दात् शृङ्गशब्दे परे ''प्रवणशृङ्गयस्तेषु'' (शु. य. प्रा. ३ अ. १०५ सू.) इत्यनेन ह्रस्वाकारस्य दीर्घाकारे प्राशृङ्गा।

शाᳪ । पितॄणाᳬसोमवताम्बभ्रवोधूम्रनीकाशाᳪपितॄणाम्बर्हि
षदाङ्कृष्णाबभ्रुनीकाशा ᳪपितॄणामग्निष्वात्तानाङ्कृष्णाःपृ
षन्तस्त्रैयम्बकाः ॥ १८ ॥ उक्ताःसञ्चराः ॥ उक्ताः
सञ्चराऽएतांᳪशुनासीरीयांᳪश्वेतावायव्याःश्वेताःसौर्याः
॥ १९ ॥ वसन्तायकपिञ्जलान् ॥ वसन्तायकपिञ्जलानाल

१ सोमवतीम् । अत्र "विश्वदेव्यसोमौ" ( शु. य. प्रा. ३ अ. ११८ सू. ) इत्यनेन वतीशब्दपरे सोमशब्दाकारस्य दीर्घाकारविधानात्र वतपरे भवति, अतो न दीर्घः । २ कृष्णा बभ्रुनीकाशाः । अत्र समानपदे "ऋषरेभ्य" इति णत्वप्राप्तौ "निवनिनसः प्रपीनम्" ( शु. य. प्रा. ३ अ. ९१ सू. ) इत्यनेन नि वनि नस प्रपीनम् एते नकारा प्रकृत्या भवन्ति समानपदे इति निषेधान्नात्र णत्वम् । त्वत्र निशब्दस्य दीर्घत्वं "पीवासोमम्" ( शु. य. प्रा. ३ अ. १३० सू. ) इत्यनेन भवति ।

शु. य. संहि. भतेग्ग्रीष्म्मायंकलविङ्कांव्वर्षाब्भ्यंस्त्तित्तिरीं्ह्छरदेव्वर्त्तिकाहे उ. वि. अ.
॥२९॥ मन्तायककरांल्लिछशिरायव्विकंकरान् ॥ २० ॥ [१०-२]
समुद्द्रायंशिशुमारान् ॥ समुद्द्रायंशिशुमारानालंभतेपर्ज्जन्न्याय ॥२४॥
यमण्डूकानद्द्भ्योमत्त्स्यान्मित्रायंकुलीपयान्व्वरुणायनाक्क्रा
न् ॥२१॥ सोमायहठ्ठसान् ॥ सोमायहठ्ठसानालंभतेव्वायवेब
लाकाऽइन्द्राग्निब्भ्यांक्रुञ्चान्मित्रायंमद्गून्व्वरुणायचक्कवाका ॥२९॥
न् ॥२२॥ अग्नयेकुटरून् ॥ अग्नयेकुटरूनालंभतेव्वनस्पतिं

भ्यऽउलूकानग्नीषोमाभ्याञ्चाषानश्विभ्याम्मयूरान्मित्राव
रुणाभ्याङ्कपोतान् ॥ २३ ॥ सोमायलबान् ॥ सोमायलबा
नालभतेत्त्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीभ्यःकुलीका
देवजामिभ्योग्नयेगृहपतयेपारुष्णान् ॥ २४ ॥ अह्नेपाराव
तान् ॥ अह्नेपारावतानालभतेरात्र्यैसीचापूरहोरात्रयोःसन्धि
भ्योजतूर्म्मासेभ्योदात्यौहान्त्संवत्सरायमहतःसुपर्णान्
॥ २५ ॥ भूम्म्याऽआखून् ॥ भूम्म्याऽआखूनालभतेन्तरि

क्क्षायपाङ्क्ङ्गान्दिवेकशान्दिग्ग्भ्योनंकुलान्ब्बभ्भ्रुकानवान्तर
दिशाब्भ्यं÷ ॥ २६ ॥ व्वसुंब्भ्यऽऋश्श्यान् ॥ व्वसुंब्भ्यऽऋश्श्या
नालंभतेरुद्द्रेब्भ्योरुरूनादित्त्येब्भ्योन्न्यङ्क्कून्विश्श्वेब्भ्योदेवेब्भ्यं÷
पृषतान्त्साद्ध्येब्भ्यं÷कुलुङ्गान् ॥ २७ ॥ ईशानायपरंस्वतं ॥
ईशानायपरंस्वतऽआलंभतेमित्त्रायंगौरान्व्वरुणायमहिषान्ब्बृह
स्प्पतंयेगवयाँस्त्त्वष्ट्टऽउष्ट्रान् ॥ २८ ॥ प्रजापंतयेपुरुषान् ॥ ॥४०॥
प्रजापंतयेपुरुषान्हस्त्तिनऽआलंभतेव्वाचेप्प्लुषीँश्श्चक्क्षुषेमश

का॒न्छो॒त्रायभृ॒ङ्गाः ॥ २९॥ शतम् ॥१४००॥ प्र॒जाप॑तयेच ।
वा॒यवे॑चगोमृ॒गोव॑रु॑णायारण्यो॒मे॒षोय॒मायकृष्णो॑मनुष्यरा
जाय॑म॒र्क्कटः॑शार्दू॒लाय॑रो॒हि॒द्दृ॑षभाय॑गव॒यीक्षि॑प्रश्येनाय॒व
र्त्तिका॒नील॑ङ्गोः क्रिमिः॑ समु॒द्राय॑शिशु॒मारो॑हि॒मव॑ते॒ह॒स्ती
॥ ३० ॥ [१०-३] म॒यु॒ः प्रा॑जाप॒त्य॑ः ॥ म॒यु॒ः प्रा॑जाप॒त्यऽ
उ॒लो॒ह॒लि॒क्क्ष्णो॑वृ॒षद॒ह॒शस्ते॑धा॒त्रेदि॒शाङ्क॒ङ्को॒धु॒ङ्क्षाग्ने॒यीक॑ल
वि॒ङ्कोलोहिता॒हिः॑ पु॒ष्क॒र॒सा॒दस्त्वा॒ष्ट्राय॒वा॒चेक्क्रु॒ञ्चः ॥ ३१ ॥

शु. य. संहि. ॥४१॥ सोमायकुलुङ्गः ॥ सोमायकुलुङ्गऽआरण्योजोनकुलःशका ऊ. वि. अ.
तेपौष्णाःक्क्रोष्टामायोरिन्द्रस्यगौरमृगःपिद्वोन्न्यङ्कुः कक्कट ॥ २४ ॥
स्तेनुमत्त्यैप्प्रतिश्रुत्कायैचक्क्रवाकः ॥ ३२ ॥ सौरीबलाका ।
शार्ग्गःसृजयःशयाण्डकस्तेमैत्राःसरस्वत्त्यैशारिः पुरुषवाक्
श्वाविद्भौमीशार्दूलोवृकःपृदाकुस्तेमन्न्यवेसरस्वतेशुकः पुरुष
वाक् ॥ ३३ ॥ सुपर्ण्णःपार्ज्जन्न्यः ॥ सुपर्ण्णःपार्ज्जन्न्यऽ ॥ ४१ ॥
आतिर्व्वाहसोदर्व्विदातेवायवेबृहस्प्पतयेवाचस्प्पतयेपैङ्गराजो

१ श्वाविद्भौमी। अत्र श्वविद्भौमी इति पदम्। "अश्वरश्मिमतिसुमतिश्वसुत०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे श्वस्य ह्रस्वाकारस्य दीर्घाकारः।

लजऽआन्तरिक्षः प्लवोमद्गुर्म्मत्स्यस्तेनदीपतयेद्यावापृथिवी

यः कुर्म्मः ॥ ३४ ॥ पुरुषमृगश्चन्द्रमसे ॥ पुरुषमृगश्चन्द्र

मसोगोधाकालकादार्व्वाघाटस्तेवनस्पतीनाङ्कृकवाकुः सावि

त्रोहꣳसोव्वातस्यनाक्रोमकरः कुलीपयस्तेकूपारस्यह्रियैशल्य

कः ॥ ३५ ॥ एण्यह्नः ॥ एण्यह्नोमण्डूकोमूषिकाति[2]

---

१ दार्वाघाटः । दारु आघातः इति पदम् । अत्र "त आपादनाऽम्बरात्" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेनानादम्बरादाघाशब्दात्परस्य तकारस्य मूर्द्धन्यो भवति दार्वाघाट इति । २ तित्तिरिस्ते । अत्र "सकारे परे च" ( शु. य. प्रा. ३ अ. ७८ सू. ) इत्यनेन सकारपरादेकाक्षरादेकारपरे तकारे विसर्जनीयस्य सकारः प्राप्तः । सः "प्रकृत्या नानापदस्थे तकारे ( शु. य. प्रा. ३ अ. ८१ सू.) इत्यनेन प्रकृतिभावे प्राप्ते "अनुसन्तनोतु°" ( शु. य. प्रा. ३ अ. ८२ सू. ) इत्यनेन निषिद्ध्यते । सकारो भवत्येव ।

शु. य. संहि. ॥ ४२ ॥ — उ. वि. अ. ॥ २४ ॥

त्तिरिस्त्तेसर्प्पाणाँल्लोपाशऽआश्श्विनश्क्कृष्ण्णोरात्र्याऽऋक्षोज
तूश्सुषिलीकातऽइतरजनानाञ्जहकावैष्ण्णवी ॥ ३६ ॥ अन्न्य
वापोर्द्धमासानाम् ॥ अन्न्यवापोर्द्धमासानाम्मृश्श्योमयूरः
सुपर्ण्णस्त्तेगन्धर्व्वाणामपामुद्द्रोमासाङ्कश्श्यपोरोहित्त्कुण्ड्रणा
चींगोलत्तिकातेप्प्सरसाम्मृत्त्यवेसितश् ॥ ३७ ॥ व्वर्षाहूर्ऋतू
नाम् ॥ व्वर्षाहूर्ऋतूनामाखुश्कशोमान्थालस्त्तेपितृणाम्बलाया ॥ ४२ ॥

१ "ए-ओ-आभ्यामुदात्ताभ्यामकारो निहितश्च यः। स च यत्र प्रलुप्येते तं चाभिनिहितं विदुः" या. शि. ॥ अत्र ते अप्सरसामित्यासीत अत्रैकारात्परस्याकारस्य "एदोद्भ्यामकारः" (शु. य. प्रा. अ. ३६१ सू.) इत्यनेनाकारस्य पूर्वरूपः। अत्राभिनिहितस्वरो ज्ञेयः। तथौकारेऽपि वे [illegible] दौ।

जगरोव्वसूनाङ्कपिञ्जलङ्कपोतऽउलूकꣳशशस्तेनिर्ऋत्यैव्वरुणा
यारण्ण्योमेषः ॥ ३८ ॥ श्श्वित्रऽआदित्त्यानाम् ॥ श्श्वित्रऽ
आदित्त्यानामुष्ट्रोघृणीवान्वार्ध्रीनसस्तेमत्त्याऽअरण्ण्यायसृ
मरोरुरूरौद्रः क्क्वयिः कुटरुर्द्दात्त्यौहस्तेव्वाजिनाङ्कामायपिकः
॥ ३९ ॥ खड्गोव्वैश्श्वदेवः । श्वाकृष्ण्णः कर्ण्णोगर्द्दभस्तरक्षु
स्तेरक्षसामिन्द्रायसूकरः सिꣳहोमारुतः कृकलासः पिप्पका

---

१ घृणीवान् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारुघृणि" इत्यनेन वकारे परे घृणिशब्दस्येकारस्य दीर्घेकारः । २ वार्ध्रीनसस्ते । अत्र समानपदे "ऋषरेभ्यः" इति णत्वप्राप्तौ "नित्यनिनसः प्रपीनम्" (शु. य. प्रा. ३ अ. ९१ सू.) इत्यनेन नसः णत्वं निषिध्यते । अतो न णत्वम् ।

शु. य. संहि. कुनिस्त्तेशंरघ्यायैर्व्विश्श्वैषान्देवानाम्पृषतः ॥ ४० ॥ [ १०-४ ] उ. वि. अ.

॥४२॥ इति श्रीवाजसनेयसंहितायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ २५ ॥

श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ शादन्दद्भिर्नवैकैका,
हिरण्यगर्भश्चतस्त्र, ऽआनोदश, मानोमित्रो, यदश्वस्या
ष्टकौ, यत्तेपडि, मानुकंद्वे, पञ्चदशसप्तचत्वारिᳩशत् ॥
[अ. २५-मं. ४७ अनु. १५] हरिः ॐ ॥ शादन्दद्भिः ॥ ॥ ४३ ॥
शादन्दद्भिरवकान्दन्तमूलैर्म्मृदम्बस्वैस्तेगान्दᳪष्ट्राभ्याᳪ

सरस्वत्त्याऽअग्ग्रजिह्वस्जिह्वायांऽउत्त्सादमवक्क्रन्देनतालुव्वा
जह्हनुंब्भ्यामपऽआस्य्येनव्वृषणमाण्डाब्भ्यांमादित्त्याँश्श्मश्श्रु
भिःपन्थांनम्भ्रूब्भ्यान्द्यावापृथिवीव्वर्त्तोब्भ्यांव्विद्युतङ्कनीनका
ब्भ्याᳪंशुक्क्लायस्वाहाकृष्ण्णायस्वाहापार्य्याणिपक्ष्माण्यवा
र्य्याऽइक्षवोवार्य्याणिपक्ष्माणिपार्य्याऽइक्षवः ॥ १ ॥
[ १-१ ] व्वातम्प्राणेन ॥ व्वातम्प्राणेनापानेननासिकेऽउपयाम

१ अवक्रन्देन तालु इत्यत्र "ऋवर्णेभ्यः" इत्यनेन समानपदे नस्य प्राप्तं णत्वं "तवर्गे च" ( शु. य. प्रा. ३ अ. ९४ सू. ) इत्यनेन निषेधान्न भवति।

शं. ४७

शु. य. संहि. उ. वि. अ.

मधरेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्य

॥ ४४ ॥ म्मूर्ध्नास्तनयित्नुन्निर्बाधेनाशनिम्मस्तिष्केणविद्युतङ्कनी ॥ २५ ॥

नकाभ्याङ्कर्णाभ्याꣳश्रोत्रꣳश्रोत्राभ्याङ्कर्णौतेदनीमधर

कण्ठेनापःशुष्ककण्ठेनचित्तम्मन्याभिरदितिꣳशीर्ष्णानि

र्ऋतिन्निर्ज्जर्ज्जल्प्येनशीर्ष्णासंक्रोशैःप्प्राणान्रेष्म्माणꣳस्तुपेन ॥ ४४ ॥

॥२॥ [१-२] मशकान्केशैꣳ ॥ मशकान्केशैरिन्द्रꣳस्वपसाव्वहेन

बृहस्पतिꣳशकुनिसादेनकूर्म्माञ्छफैराक्रमणꣳस्थूराभ्यां

मृक्षलाभिꣳकपिञ्जलाञ्जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जा

म्बीलेनारण्ण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावꣳ

साभ्याꣳरुद्रꣳरोराभ्याम् ॥३॥ [१-३] अग्नेः पक्क्षतिः ॥

अग्नेःपक्क्षतिर्व्वायोर्न्निपक्क्षतिरिन्द्रस्यतृतीयासोमस्यचतुर्त्थ्य

दित्यैपञ्चमीन्द्राण्यैषष्ठीमरुताꣳसप्तमीबृहस्पतेरष्टम्म्यर्य्य

---

१ शकुनि सादेन। अत्र "आविभ्य सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वप्राप्तौ "पृथिवीदिव्युपरिचर्षणिशकुनिया- सिभ्यः" (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन शकुनिपरस्य सस्य प्रकृतिभावे न षत्वम्।

ष्णोनवमीधातुर्दशमीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयमस्यत्र 
॥४५॥ योदशी ॥४॥ [१-४] इन्द्राग्न्योःपक्क्षतिः । सरस्वत्यैनि ॥२५॥
पक्क्षतिर्म्मित्रस्यतृतीयापाञ्चतुर्थीनिर्ऋत्यैपञ्चम्म्यग्नीषोम
योःषष्ठीसर्प्पाणाᳪंसप्तमीव्विष्णोरष्टमीपूष्णोनवमीत्वष्टुर्द
शमीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयम्म्यैत्रयोदशीद्यावापृथि
व्योर्द्दक्षिणम्पार्श्वंव्विश्वेषान्देवानामुत्तरम् ॥५॥ [१-५] ॥४५॥
मरुताᳪंस्कन्धाः ॥ मरुताᳪंस्कन्धाव्विश्वेषान्देवानाम्प्रथ

माकीकंसारुद्राणान्द्वितीयादित्त्यानान्तृतीयाव्वायोःपुच्छम
ग्ग्नीषोमंयोर्ब्भासदौक्क्रुञ्चौश्श्रोणिभ्यामिन्द्राबृहस्पतीऽऊ
रुभ्याम्मित्रावरुणावल्गाभ्यामाक्क्रमणॅंस्थूराभ्याम्बल
ङ्कुष्ठाभ्याम् ॥ ६ ॥ [ १-६ ] पूषणंव्वनिष्ठुना । न्धाही
न्त्स्थूलगुदयासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपोव्वस्तिनावृषण
माण्डाभ्यांव्वाजिनंशेपेनप्प्रजाॅंरेतसाचाषान्पित्तेनप्प्रदरा
न्पायुनाकूश्माञ्छकपिण्डैः ॥ ७ ॥ [ १-७ ] इन्द्रस्य

क्क्रोडः ॥ इन्द्रस्यक्क्रोडोऽदित्यैपाजस्यन्दिशाञ्जत्रवोऽदित्यै
॥४६॥ भसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीततानभऽउदर्य्येणच ॥२५॥
क्क्रवाकौमतस्नाभ्यान्दिवंवृक्काभ्याङ्गिरीन्प्लाशिभिरुपला
न्प्लीह्नावल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिःस्रव
न्तीर्ह्रदान्कुक्षिभ्याᳫंसमुद्रमुदरेणवैश्वानरम्भस्मना ॥८॥
[ १-८ ] विधृतिन्नाभ्यां। घृतᳫंरसेनापोयूष्णामरीचीर्वि ॥४६॥
प्रुड्भिर्न्नीहारमूष्मणाशीनंवसयाप्रुष्वाऽअश्रुभिर्ह्रादुनी

हृषीकांभिरस्न्नारक्षांऽसिचित्राण्ण्यङ्गैर्न्नक्षत्राणिरूपेणंपृथि
वीन्त्वचाजुंम्बकायस्वाहां ॥ ९ ॥ [१-९] हिरण्ण्यग
र्ब्भश्समम् ॥ हिरण्ण्यगर्ब्भश्समंवर्त्ततांग्रेभूतस्यंजातश्पतिरे
कंऽआसीत् ॥ सदांधारपृथिवीन्द्यामुतेमाङ्कस्म्मैदेवायंहवि
षांविधेम ॥ १० ॥ यश्प्प्राणतश् ॥ यश्प्प्राणतोनिंमिष
तोमंहित्त्वैकऽइद्राजाजगंतोबभूवं ॥ यऽईशेऽअस्यद्विपद
श्चतुष्प्पदंकस्म्मैदेवायंहविषांविधेम ॥ ११ ॥ यस्येमे ।

शु. य. संहि. ॥ ४७ ॥

हिमवन्तोमहित्वायस्यंसमुद्रᳬरसयांसहाहुः ॥ यस्येमाः ॥ उ. वि. अ.

प्प्रदिशोयस्यंबाहूकस्मैदेवायंहविषाविधेम ॥ १२ ॥ यऽ ॥ २५ ॥

आत्मदाः ॥ यऽआत्मदाबलदायस्यविश्वंऽउपासंतेप्प्रशिषँ

य्यस्यदेवाः ॥ यस्यंछायामृतँय्यस्यंमृत्त्युःकस्मैदेवायंहवि

षाविधेम ॥ १३ ॥ [४-१०] आनं÷ ॥ आनोभद्राःक्क्र

तंवोयन्तुविश्वतोदंब्धासोऽअपंरीतासऽउद्भिदं÷ ॥ देवानोय ॥ ४७ ॥

थासदमिद्वृधेऽअसन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥१४॥ देवा

नाम्भद्रा ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्[1]देवानाᳬरातिः
रभिनोनिवर्त्तताम् ॥ देवानाᳬसक्ख्यमुपसेदिमा[2]व्वयन्देवानऽ
आयुःप्पतिरन्तुजीवसे ॥ १५ ॥ तान्पूर्व्वया । निविदाहू
महेव्वयम्भगम्मित्रमदितिन्दक्क्षमस्स्रिधम् ॥ अर्य्यमणंव्वरुणᳬ
सोमम्मश्विनासरस्वतीनःसुभगाम्मयस्क्करत् ॥ १६ ॥ तन्नः ॥
तन्नोव्वातोमयोभुव्वातुभेषजन्तन्माताप्पृथिवीतत्पिताद्यौः ॥

१ ऋजूयता । अत्र यकारे परे "अथोदारिथ" (शु. य. प्रा. ३ अ. ११२ सू.) इत्यनेन ह्रस्वाकारस्य दीर्घे ऋजूयता । २ उपसेदिमाव्वयम् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतश्वरयद्वणिसेदिमे" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे उपसेदिमपदघटितह्रस्वाकारस्य दीर्घाकारः ।

तद्ग्रावाणꣳसोमसुतौमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम्
॥ १७ ॥ तमीशानम् ॥ तमीशानञ्जगतस्तस्थुषस्प्प
तिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधे
रक्षितापायुरदब्धꣳस्वस्तये ॥ १८ ॥ स्वस्तिनः ॥ स्वस्ति
नऽइन्द्रोव्वृद्धश्रवाꣳस्वस्तिनःपूषाव्विश्ववेदाꣳ ॥ स्वस्तिन
स्तार्क्ष्योऽअरिष्टनेमिꣳस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥ १९ ॥ ॥ ४८ ॥

१ बृहस्पतिः । अत्र "तद्बृहतौ करपत्योस्तलोपश्च" ( शु. य. प्रा. ३ अ. ५२ सू. ) तद् बृहतौ करपतिशब्दयोर्यथासंख्यं सकारेण व्यवधीयेते तकारस्य लोपो भवति । अत्र बृहच्छब्दात्पतिशब्दे परे तकारस्य लोपे सकारस्य विधानम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु.य.प्रा.४अ.१०२ ) इत्यनेन पकारस्य द्वित्वम् ।

पृषदश्वामरुतः ॥ पृषदश्वामरुतः पृश्निमातरः शुभंय्या
वानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोवि
श्वेनोदेवाऽअवसागमन्निह ॥ २० ॥ भद्रङ्कर्णेभिः ।
शृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तु
ष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ २१ ॥ शत
मित् ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूना
म् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः

शु. य. संहि. ॥ २२ ॥ अदितिर्द्यौः ॥ अदितिर्द्यौरदितिरन्तरिक्षमदिति उ. वि. अ.
॥४९॥ र्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपञ्चजनाऽअदि ॥ २५ ॥
तिर्ज्जातमदितिर्ज्जनित्त्वम् ॥ २३ ॥ [१०-११] मानः ॥
मानोमित्रोवरुणोऽअर्य्यमायुरिन्द्रऽऋभुक्षामरुतःपरिख्य
न् ॥ यद्वाजिनोदेवजातस्यसप्तेःप्रवक्ष्यामोविदथेवीर्य्याणि
॥ २४ ॥ यन्निर्णिजा ॥ यन्निर्णिजारेक्णसाप्रावृतस्यराति ॥ ४२ ॥
ङ्गृभीताम्मुखतोनयन्ति ॥ सुप्राङजोमेम्यद्विश्वरूपऽइन्द्रा

पूष्णोऽग्रियमप्येतिपाथः॥२५॥ एषच्छागः । पुरोअश्वे
नवाजिनापूष्णोभागोनीयतेविश्वदेव्यः ॥ अभिप्रियंय
त्पुरोडाशमर्वतात्वष्टेदेनंसौश्रवसायजिन्वति॥२६॥ यद्धवि
ष्यम् ॥ यद्धविष्यमृतुशोदेवयानन्त्रिर्म्मानुषाःपर्य्यश्वन्न
यन्ति ॥ अत्रापूष्णःप्रथमोभागएतियज्ञन्देवेभ्यः प्र
तिवेदयन्नजः ॥ २७ ॥ होताध्वर्युः ॥ होताध्वर्युरावयाअ
अग्निमिन्धोग्रावग्राभउतशंस्तासुविप्रः ॥ तेनयज्ञे

सं. ४८ १ अत्रापूष्णः । अत्र "पूष्णो जहीमसोष्वत्र" (शु. य. प्रा. ३ अ. १२१ सू.) इत्यनेन पूष्णः जहीमः ते इत्येतेषु पदेषु परेषु अत्रशब्दस्य दीर्घाकारः ।

॥ ५० ॥ नस्वरङ्कृतेनास्विष्टेनवृक्षणाऽआपृणध्वम् ॥ २८ ॥ यूपव्रस्का ॥ २५ ॥
ऽउत । येयूपवाहाश्चषालँय्येऽअश्वयूपायुतक्षति ॥ येचार्वे
तेपचनꣳसम्भरन्त्युतोतेषामभिगूर्त्तिर्नऽइन्वतु ॥ २९ ॥
उपप्र ॥ उपप्रागात्सुमन्मेधायिमन्मदेवानामाशाऽउपवीत
पृष्ठꣳ ॥ अन्वेनंविप्राऽऋषयोमदन्तिदेवानाम्पुष्टेचकृमासुब
न्धुम् ॥ ३० ॥ यद्वाजिनः ॥ यद्वाजिनोदामसन्दानमर्व्व ॥ ५० ॥
तोयाशीर्षण्यारशनारज्जुरस्य ॥ यद्वाघास्यप्रभृतमास्येतृणꣳ

सर्व्वाताते॑ऽअपि॑देवेष्व॑स्त्तु ॥ ३१ ॥ [८-१२] यद॑श्वस्य ।
क्क्रविषो॒मक्षि॑काशयद्वास्व॑रौस्वधि॑तौरिप्त॒मस्ति॑ ॥ यद्ध
स्तयोः॑शमितुर्य्यन्नखेषुसर्व्वाताते॑ऽअपि॑देवेष्व॑स्त्तु ॥ ३२ ॥
यदूव॑ध्यम् ॥ यदूव॑ध्यमुदर॑स्यापवाति॒यऽआ॒मस्य॑क्क्रविषो
गन्धोऽअस्ति॑ ॥ सुकृताऽतच्छ॑मि॒तारः॑कृण्वन्तूतमेध॑ꣳशृत
पाकम्पचन्तु ॥ ३३ ॥ यत्ते॑ ॥ यत्तेगात्त्रा॑दुग्निनापच्य
मा॑नादुभिशूलन्निह॑तस्यावधावति ॥ मातद्भूम्म्यामाश्श्रिष

६४९

स्मातृणेषुदेवेभ्यस्तदुशद्भ्योरातमस्तु ॥ ३४ ॥ येवाजि
नम् ॥ येवाजिनम्परिपश्यन्तिपक्वँय्यऽईमाहुःसुरभिर्न्नि
र्हरेति ॥ येचार्वतोमाᳪंसभिक्षामुपासतऽउतोतेषामभिगूर्त्ति
र्न्नऽइन्वतु ॥३५॥ यन्नीक्षणम् ॥ यन्नीक्षणम्माँस्पचन्याऽ
उखायायापात्राणियूष्णऽआसेचनानि ॥ ऊष्मण्यापिधा
नाचरूणामङ्काःसूनाःपरिभूषन्त्यश्वम् ॥ ३६ ॥ मात्वा ॥ ॥ ५१ ॥
मात्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखाभ्राजन्त्यभिविक्तज

गिर्प्रः ॥ इष्टं वीतमभिगूर्त्तं वषट्कृतं तं देवासः प्रतिं गृभ्णन्त्य

श्वम् ॥३७॥ निक्क्रमणं निषदनम् ॥ निक्क्रमणं निषदनं विवर्त्तं

नं यच्च पड्वीशमर्वतः ॥ यच्च पपौ यच्च घासिं जघास सर्वा ता

ते ऽअपि देवेष्वस्तु ॥ ३८ ॥ यदश्वाय ॥ यदश्वाय वासं ऽ

उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ॥ सन्दानमर्वन्त

म्पड्वीशं प्रिया देवेष्वा यामयन्ति ॥ ३९ ॥ [८-१२] यत्ते ।

१ अधीवासम्। अत्र "अश्वरश्मि०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वासमित्यस्य वकारे परे अधि इत्यस्य ह्रस्वाकारस्य दीर्घीकारः।

सादेमहंसाशूकंतस्यपार्ष्ण्याँब्राकशंयाब्रातुतोदं ॥ स्त्रुचेवताहु
विषोऽअध्वरेषुसर्वाँताते॒ब्रह्मणासूदयामि ॥ ४० ॥ चतुंस्त्रिꣳ
शद्वाजिनंः ॥ चतुंस्त्रिꣳशद्वाजिनोदेवबन्धोर्वङ्क्रीरश्वंस्यस्वधि
तिःसमेंति ॥ अच्छिद्रागात्रांवयुनांकृणोतपरुंष्परुरनुघुष्या[1]
विशंस्त ॥ ४१ ॥ एकस्त्वष्टुंः ॥ एकस्त्वष्टुरश्वंस्याविश[2]
स्ताद्वायन्तारांभवतस्तथंऽऋतुः ॥ यातेगात्राणामृतुथाकृ ॥ ५२ ॥

१ अनुघुष्याविशस्त । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारय०" (शु.य.प्रा.३अ.१८सू.) इत्यनेन वकारे परे घुष्येत्यस्य ह्रस्वाकारस्य दीर्घाकारः । २ अश्वस्याविशस्तात्० । अत्र "अश्वरश्मिमतिसुमतिश्वसुताचारयघृणिसेदिमेन्द्रियधारयचित्रमङ्गुरवयुनाश्वस्य०" इत्यनेन वकारे परे अश्वशब्दस्याकारस्य दीर्घाकारः ।

णोमितातापिण्डान्नाम्प्रजुंहोम्म्यग्नौ ॥ ४२ ॥ मात्त्वां ।
तपत्त्प्रिययऽआत्त्मापियन्तम्मास्वाधिंतिस्त्तन्न्वुऽआतिंष्ठिपत्ते ॥
मातेंगृध्नुरंविशस्त्तातिहायंछिद्द्रागात्राण्ण्यसिनामिथूंकः ॥ ४३ ॥
नवै ॥ नवाऽउंऽएतन्म्म्रियसेनरिंष्य्यसिदेवाँ२॥ ऽइदेंषिपथि
भिंः सुगेभिंः ॥ हरींतेयुञ्जापृषंतीऽअभूतामुपांस्त्थाद्वाजीधु
रिरासंभस्य ॥ ४४ ॥ सुगव्यन्नः ॥ सुगव्व्यन्नोव्वाजीस्वश्व्यंम्पुं
सः पुत्राँ२॥ ऽउतविंश्वापुषंः रयिम् ॥ अनागास्त्त्वन्नोऽअदिं

१ विश्वापुषः । अत्र "विश्वसहमुख्युपवसुषु" । ( शु. य. प्रा. ३ अ. १०२ सू. ) इत्यनेन पुषपरे विश्वाकारस्य दीर्घाकारः ।

य. संहि. ॥५३॥

तिᳪकृणोतुक्क्षत्रन्नोऽअश्श्वीव्वनताᳪहविष्म्मान् ॥ ४५ ॥ उ. वि. अ.

[ ६-१३ ] इमानु । कम्भुवंनासीषधामेन्द्रंश्चविश्श्वेचदेवाः ॥ ॥ २५ ॥

आदित्त्यैरिन्द्रᳪसगणोमरुद्भिरस्म्मब्भ्यंम्भेषजाकरत् ॥ यज्ञ

ञ्चनस्त्तन्न्वञ्चप्प्रजाञ्चादित्त्यैरिन्द्रःसहसीषधाति ॥ ४६ ॥

अग्ग्नेत्त्वम् ॥ अग्ग्नेत्त्वन्नोऽअन्तमऽउतत्राताशिवोभवावरू

त्थ्यः ॥ वसुरग्ग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्द्युमत्तमᳪरयिन्दाः ॥ ॥ ५३ ॥

१ सीषधामेन्द्रश्च । सीसधामेन्द्रश्च इति पदम् । अत्र "नाविभ्यः सः षं समानपदे" ( शु. य. प्रा. ३ अ. ५६ सू. ) सकारस्य षत्वे रूपम् ।

तन्त्वा॑शोचिष्ठदीदिवः सुम्नाय॑नूनमीमहे सखि॑भ्यः ॥ ४७ ॥

[२-१४] इतिश्रीवाजसनेयसंहितायांपञ्चविंशोऽध्यायः ॥२५॥

श्रीवेदपुरुषाय नमः॥ अनुवाकसूत्रम्॥ अग्निश्चपंचदशो, चातऽ एकादश, द्वौ षड्विंशतिः [ अ. २६ मं. २६ अनु. २ ]॥ हरिः ॐ ॥ अग्निश्च । पृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चान्तरिक्षञ्चसन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्नमतामदऽआपश्चवरुणश्चसन्नतेतेमेसन्नमतामदः ॥ सप्तसह्स

दोऽअष्टमीभूतसाधनी ॥ सकामाँ२॥ऽअध्वनस्कुरुसँज्ञानमस्तु
मेमुना ॥ १ ॥ यथेमाम् ॥ यथेमांव्वाचङ्कल्याणीमावदानिजनै
भ्यः ॥ ब्रह्मराजन्याभ्याँशूद्रायचार्य्यायचस्वायचारणा
यच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः
समृद्ध्यतामुपमादोनमतु ॥ २ ॥ बृहस्पतेऽअति ॥ बृहस्पतेऽ
अतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवं ॥ ५४ ॥

१ अद्ध्वनस्कुरु इति पदे । "अध्वनस्कुर्विति च" (शु. य. प्रा. ३ अ. २७ सू.) इत्यनेनात्र कुरूत्तरे पदे अध्वनो विसर्जनीयस्य सकारो जातः । ततः "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वम् ।

सऽऋतप्प्रजातत्तदस्म्मासुद्द्रविणन्धेहिचित्रम् ॥ उपयामगृ
हीतोसिबृहस्प्पतयेत्त्वैषतेयोनिर्बृहस्प्पतयेत्त्वा ॥ ३ ॥ इन्द्र
गोमन् ॥ इन्द्रगोमन्निहायाहिपिबासोमᳬंशतक्क्रतो ॥
विद्यद्भिर्ग्ग्रावभिᳬंसुतम् ॥ उपयामगृहीतोसीन्द्रायत्त्वागोमतऽ
एषतेयोनिरिन्द्रायत्त्वागोमते ॥ ४ ॥ इन्द्रायाहि ॥ इन्द्रा
याहिवृत्रहन्पिबासोमᳬंशतक्क्रतो ॥ गोमद्भिर्ग्ग्रावभिᳬंसुतम् ॥
उपयामगृहीतोसीन्द्रायत्त्वागोमतऽएषतेयोनिरिन्द्रायत्त्वा

शु. य. संहि. उ. वि. अ.

॥ ५५ ॥ गोमंते ॥ ५ ॥ ऋतावांनंवैश्वानरम् ॥ ऋतावांनंवैश्वानरमृत
स्यज्ज्योतिषुस्पतिम् ॥ अजंस्रङ्घर्म्ममीमहे ॥ उपयामगृंही ॥ २६ ॥
तोसिवैश्वानरायंत्त्वैषतेयोनिर्वैश्वानरायंत्त्वा ॥ ६ ॥ वैश्वा
नरस्यंसुमतौ । स्यांमराजाहिकम्भुवंनानामभिश्रीः ॥ इतो
जातोविश्वमिदंविचंष्टेवैश्वानरोयंततेसूर्य्येण ॥ उपयामगृंही
तोसिवैश्वानरायंत्त्वैषतेयोनिर्वैश्वानरायंत्त्वा ॥ ७ ॥ वैश्वान ॥ ५५ ॥
रोनंः ॥ वैश्वानरोनऽऊतयऽआप्प्रयांतुपरावतंः ॥ अग्निरु

क्त्थेनव्वाहंसा ॥ उपयामगृहीतोसिव्वैश्वानरायंत्त्वैषतेयोनिर्व्वै
श्वानरायंत्त्वा ॥ ८ ॥ अग्निर्ऋषिः ॥ अग्निर्ऋषिंपवमानं
पाञ्चजन्न्यंपुरोहितं ॥ तमीमहेमहागयम् ॥ उपयामगृही
तोस्यग्ग्नयेंत्त्वाव्वर्चसऽएषतेयोनिरग्ग्नयेंत्त्वाव्वर्चसे ॥ ९ ॥ महाँ
२॥ऽइन्द्रः ॥ महाँ२॥ऽइन्द्रोव्वज्ज्रहस्त्तंषोडशीशर्म्मयच्छ
तु ॥ हन्तुपाप्प्मानँय्योस्म्मान्द्वेष्टि ॥ उपयामगृहीतोसिमहे
सं. ५९ न्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ १० ॥ तंव्वः ॥ तंव्वोद

स्म्ममृतीषहुंव्वसोम्म्मन्दानमन्धसः ॥ अभिवृत्त्सन्नस्वसरेषुधे

नवऽइन्द्रंङ्गीर्ब्भिन्नवामहे ॥ ११ ॥ यद्वाहिष्ठम् ॥ यद्वाहिष्ठ

न्तदग्ग्नयेवृहदर्च्चविभावसो ॥ महिषीवृत्त्वद्रयिस्त्वद्वाजाऽउ

दीरते ॥ १२ ॥ एहि ॥ एह्युषुब्र्ववाणितेग्ग्नऽइत्त्थेतराग्गिरः ॥

एभिर्व्वर्द्धासऽइन्दुभिः ॥ १३ ॥ ऋतवस्त्ते ॥ ऋतवस्त्तेयज्ज्ञं

व्वितन्व्वन्तुमासारक्षन्तुतेहविः ॥ संव्वत्त्सरस्तेयज्ज्ञन्दधातुनः ॥५६॥

१ अभिवत्सन् । अत्र "अश्वरश्मिमति°" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन प्राप्तस्य अभिशब्दस्य वकारे परे प्राप्तस्य दीर्घेकारस्य "अभिविल्येषं वीरविश्ववत्स°" (शु. य. प्रा. ३ अ. १०० सू.) इत्यनेन एतेषु परेषु दीर्घनिषेधान्नात्र वत्सशब्दपरे दीर्घेकारः ।

प्प्रजाङ्क्रपरिंपातुनः ॥ १४ ॥ उपह्वरेगिंरीणाम् ॥ उपह्वरेगि

रीणाᳮसंङ्गमेचंनदीनांम् ॥ धियाव्विप्प्रोंऽअजायत ॥ १५ ॥

[ १५-१ ] उच्चातें ॥ उच्चातेंजातमन्धंसोदिविसद्भूम्म्यांददें ॥

उग्ग्रᳮशर्म्ममहिश्श्रवंः ॥ १६ ॥ सनंः ॥ सनऽइन्द्रांयय

ज्यंवेव्वरुंणायमरुद्भ्यंः ॥ व्वरिवोवित्त्परिंस्त्रव ॥ १७ ॥

एनाव्विश्श्वांनि ॥ एनाव्विश्श्वांन्यर्ज्यऽआद्युम्म्नानिमानुंषाणाम् ॥

---

१ अत्र भूमिः आददे । "भूमेश्चाकारेऽपृक्ते" (शु. य. प्रा. ४ अ. ३८ सू.) इत्यनेनाकारेऽपृक्तपरे भूमिशब्दस्य विसर्गस्य लोपः ततो यकारे भूम्याददे ।

शु. य. संहि. ॥५७॥

सिषासन्तोव्वनामहे १८ ॥ अनुवीरैः ॥ अनुवीरैरनु व. वि. अ.
पुष्यास्म्मगोभिरन्व्वश्श्वैरनुसर्व्वेणपुष्टैः ॥ अनुद्विपदानुचतु ॥ २६ ॥
ष्प्पदाव्वयन्देवानोयज्ञमृतुथानयन्तु ॥१९॥ अग्नेपत्नीᳫं ॥
अग्नेपत्नीरिहावहदेवानामुशतीरुप ॥ त्वष्टारᳫंसोमपीतये
॥२०॥ अभियज्ञम् ॥ अभियज्ञङ्गृणीहिनोग्नावोनेष्टᳫंपिब
ऽऋतुना ॥ त्वᳫंहिरत्नधाऽअसि ॥ २१ ॥ द्रविणोदाःपिपी ॥ ५७ ॥
षति । जुहोतप्प्रचतिष्ठत ॥ नेष्टादृतुभिरिष्यत ॥ २२ ॥

तवायम् ॥ तवायꣳसोमस्त्वमेह्यर्वाङ्शश्वत्तमꣳसुमनाऽअ
स्यपाहि ॥ अस्मिन्यज्ञेबर्हिष्यानिषद्यादधिष्वेमञ्जठरऽ
इन्दुमिन्द्र ॥ २३ ॥ अमेवंनः ॥ अमेवंनःसुहवाऽआहिगन्तं
ननिबर्हिषिसदतनारणिष्टन ॥ अथामन्दस्वजुजुषाणोऽअन्धं
सस्त्वष्टर्देवेभिर्जनिभिःसुमद्गणः ॥ २४ ॥ स्वादिष्ठयामदिं
ष्ठया ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इन्द्रायपातं
वेसुतः ॥ २५ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥

द्रोणेसुधस्त्थमासंदत् ॥ २६ ॥ [११-२] ॥ २ ॥ इति
॥५८॥ श्रीवाजसनेयसंहितायां षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ ॥ २७ ॥
श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ समास्त्त्वादशो,
ह्वीऽअस्य, पीवोऽअन्नाद्द्वादशका, वभिस्त्वैकादश, चत्त्वारः
पंचचत्त्वारिꣳशत् [अ. २७ मं. ४५ अनु. ४] ॥ हरिःॐ॥
समांस्त्वा ॥ समांस्त्वाग्नऽऋतवोवर्द्धयन्तुसंव्वत्त्सराऽऋषयो ॥ ५८ ॥
यानिंसत्त्या ॥ सन्दिव्व्येनदीदिहिरोचनेनविश्श्वाऽआभाहिप्र

दिशश्चतंस्त्र्वं ॥ १ ॥ सव्वं ॥ सद्भोद्धस्वांग्ग्नेप्प्रचंबोधयैनमुच्चं
तिष्ठमहुतेसौभंगाय ॥ माचौरिषदुपसत्तातेऽअग्ग्नेब्रह्माणंस्त्ते
युशसं÷सन्तुमान्न्ये ॥ २ ॥ त्वामंग्ग्ने ॥ त्वामंग्ग्नेवृणतेब्राह्म
णाऽइमेशिवोऽअंग्ग्नेसंव्वरंणेभवानंः ॥ सपत्नहानोऽअभिमा
तिजिच्चस्वेगयेंजागृह्यप्प्रंयुच्छन् ॥३॥ इहैव ॥ इहैवाग्ग्नेऽअ
धिंधारयारयिम्माक्त्वानिक्कंन्नपूर्व्वचितौंनिकारिणं÷ ॥ क्षत्रमं
ग्ग्नेसुयमंमस्त्तुतुब्भ्यंमुपसत्तावर्द्धतान्तेऽअनिंष्टृतः ॥४॥ क्षत्रे

णांग्ग्ने ॥ क्षुत्रेणांग्ग्नेस्वायुछंसछंरंभस्वमित्रेणांग्ग्नेमित्रधेयेयत
स्व ॥ सजातानांम्मद्ध्यमस्त्थाऽएंधिराज्ज्ञांमग्ग्नेव्विहव्यो दीदि
हीह ॥ ५ ॥ अतिनिहं ॥ अतिनिहोऽअतिस्त्रिधोत्त्यचि
त्तिमत्त्यरातिमग्ग्ने ॥ व्विश्वाह्यग्ग्नेदुरितासहस्वाथास्म्मब्भ्यंछं
सहवींराछंरयिन्दाः ॥ ६ ॥ अनाधृष्ष्योजातवेंदाः ॥ अनाधृ
ष्ष्योजातवेंदाऽअनिंष्टृतोव्विराडंग्ग्नेक्षत्रभृद्दीदिहीह ॥ व्विश्वा ॥५९॥
ऽआशाःप्प्रमुञ्चन्म्मानुंषीर्भियःशिवेभिरद्यपरिंपाहिनोवृधे

॥ ७ ॥ बृहस्पतेसवितꣳ ॥ बृहस्प्पतेसवितर्ब्बोधयैनꣳ सꣳशि तञ्चित्त्सन्तराꣳसꣳशिशाधि ॥ वर्द्धयैनम्महतेसौभगायव्विश्वंऽएनमनुमदन्तुदेवाः ॥ ८ ॥ अमुत्रभूयादधं ॥ अमुत्रभूयादधयद्यमस्यबृहस्प्पतेऽअभिशस्त्तेरमुञ्चꣳ ॥ प्रत्यौहताम श्विनामृत्त्युमस्म्माद्देवानामग्ग्नेभिषजाशचीभिꣳ ॥ ९ ॥ उद्वयम् ॥ उद्वयन्तमसस्प्परिस्वꣳपश्श्यन्तऽउत्तरम् ॥ देवन्देवत्रा सूर्य्यमगन्म्मज्ज्योतिरुत्तमम् ॥ १० ॥ [ १०-१ ] ऊर्द्ध्वाऽअं

शु. य. संहि. स्यसमिधौभवन्त्यूर्द्धाशुक्राशोचींळंष्यग्नेः ॥ द्युमत्तमासुप्र उ. वि.
तींकस्यसूनोः ॥ ११ ॥ तनूनपादसुरः ॥ तनूनपादसुरोवि अ.
॥६०॥ श्ववेदादेवोदेवेषुदेवः ॥ पथोऽअनक्तुमद्ध्वांघृतेनं ॥ १२ ॥ ॥२७॥
मद्ध्वायज्ञम्॥मद्ध्वायज्ञन्नक्षसेप्प्रीणानोनराशꣳसोऽअग्ग्ने॥
सुकृद्देवःसंवितावि़श्ववारः ॥ १३ ॥ अच्छायम् ॥ अच्छाय
मैतिशवसाघृतेनैडानोवह्निर्न्नमसा ॥ अग्निꣳस्त्रुचोऽअद्ध्वरे ॥६०॥
षुप्प्रयत्त्सु ॥ १४ ॥ सयंक्षत् ॥ सयंक्षदस्यमहिमानमग्ग्नेः

सऽईम्मन्द्रासुप्प्रयसं÷ ॥ व्वसुश्चेतिष्ठोव्वसुधातंमश्च ॥१५॥ द्वारो

देवीः ॥ द्वारोदेवीरन्न्वंस्यव्विश्श्वेव्व्रतादंदन्तेऽअग्ग्नेः ॥ उरुव्व्यचसो

धाम्म्नापत्त्यंमानाः ॥१६॥ शतम् १६०० ॥ तेऽअंस्य ॥ तेऽअस्य

योषंणेदिव्व्येनंयोनांऽउषासानक्क्ता ॥ इमँय्यज्ज्ञमंवतामद्ध्वरं

न्नं÷ ॥ १७ ॥ दैव्व्याहोतारा ॥ दैव्व्याहोताराऽऊर्द्ध्वमंद्ध्वरन्नो

ग्ग्नेर्ज्जिह्वामभिगृंणीतम् ॥ कृणुतन्नंःस्विष्टिम् ॥ १८ ॥ तिस्रो

---

१ योनाऽउषासा । अत्र ओकारात्परस्य उष इत्यस्य "उप महोभिर्नक्तेमीकारैकारौकारनकारेभ्यः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन उष इत्ययं ह्रस्वो दीर्घत्वमापद्यते महोभि इत्यादिपरेषु सत्सु । तेनात्र ह्रस्वाकारस्य दीर्घाकारः ।

देवीः ॥ तिस्रोदेवीर्बर्हिरेदꣳसदन्त्विडासरस्वतीभारती ॥
महीगृणाना ॥१९॥ तन्नः ॥ तन्नस्तुरीपमद्भुतम्पुरुक्षुत्त्वष्टा
सुवीर्य्यम् ॥ रायस्पोषंविष्ष्यतुनाभिमस्म्मे ॥ २० ॥ वन
स्पतेव ॥ वनस्पतेवसृजाररराणस्त्मनादेवेषु ॥ अग्निर्हव्यꣳ
शमितासूदयाति ॥ २१ ॥ अग्नेस्वाहा । कृणुहिजातवेदऽ
इन्द्रायहव्यम् ॥ विश्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥ ॥६१॥
[१२-२] पीवोऽअन्नारयिवृधः । सुमेधाःश्वेतःसिषक्तिनि

युतामभिश्रीः ॥ तेवायवेसमंनसोवितस्तस्थुर्विश्वेनरःस्वप
त्त्यानिंचक्रुः ॥ २३ ॥ रायेनु । यञ्जज्ञतूरोदसीमेरायेदेवीधि
षणांधातिदेवम् ॥ अधंवायुन्नियुतःसश्चतस्वाऽउतश्वेतंवसुधि
तिन्निरेके ॥ २४ ॥ आपोह ॥ आपोहयद्बृहतीर्विश्वमायन्गर्भ
र्भन्दधानाजनयन्तीरग्निम् ॥ ततोदेवानाᳪसमवर्त्ततासुरे
कःकस्मैदेवायहविषाविधेम ॥ २५ ॥ यश्चित् ॥ यश्चिदापो
सं. ५० महिनापर्य्यपश्यद्दक्षन्दधानाजनयन्तीर्य्यज्ञम् ॥ योदेवे
६७१

घृ. य. संहि. ॥६२॥ ष्वाधिदेवऽएकऽआसीत्त्कस्म्मैदेवायहविषाविधेम ॥ २६ ॥ उ. वि. अ.

प्रयाभिः ॥ प्रयाभिर्य्यासिदाश्वाᳬंसमच्छानियुद्भिर्व्वायविष्ट्ये ॥ २७ ॥

येदुरोणे ॥ निनोरयिᳬं सुभोजसंय्युवस्वनिवीरङ्गव्यमश्व्यंञ्च

राधः ॥ २७ ॥ आनः ॥ आनोनियुद्भिः शतिनीभिरध्वरᳬं

सहस्त्रिणीभिरुपयाहियज्ञम् ॥ व्वायोऽअस्म्मिन्त्सवनेमादय ॥ ६२ ॥

यूयम्पातस्वस्तिभिःसदानः ॥ २८ ॥ नियुत्त्वान्व्वायो ॥

नियुत्त्वान्व्वायवागह्ययᳬंशुक्क्रोऽअयामिते ॥ गन्तासिसुन्व

तोगृहम् ॥ २९ ॥ व्वायोंशुक्कः ॥ व्वायोंशुक्कोऽअंयामितेम
द्धोऽअग्ग्रन्दिविंष्टिषु ॥ आयांहिसोमंपीतयेस्प्पाहोंदेंवनियुत्त्वं
ता ॥ ३० ॥ व्वायुरंग्ग्रेगाः ॥ व्वायुरंग्ग्रेगायंज्ज्ञप्प्रीःसाकङ्गन्म
नंसायज्ज्ञम् ॥ शिवोनियुद्भिंः शिवाभिंः ॥ ३१ ॥ व्वायोये । तेंस
हुस्त्रिणोरथांसस्त्तेभिरागंहि ॥ नियुत्त्वान्त्सोमंपीतये ॥ ३२ ॥
एकंयाच । दुशभिंश्श्वस्वभूतेद्द्वाब्भ्यांमिष्ट्यैंव्विᳬशतीच ॥
तिसृभिंश्श्चवहंसेत्त्रिᳬशतांचनियुद्भिंर्व्वायविहताव्विमुंञ्च ॥ ३३ ॥

॥६२॥ तवेद्वायो ॥ तवेद्वायवृतस्पते त्त्वष्टुर्जामातरद्भुत ॥ अवाꣳ
स्यावृणीमहे॥३४॥ [ १२-३ ] अभित्वा शूरनोनुमोदुग्धाऽ ॥२७॥
इवधेनवः ॥ ईशानमस्यजगतः स्वर्दृशमीशानमिन्द्रतस्थुषः
॥ ३५ ॥ नत्वावान् ॥ नत्वावाँ२॥ ऽअन्योदिव्योनपार्थि
वोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवाजिनोग
व्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामित् ॥ त्वामिद्धिहवामहे ॥६२॥

१ ऋतस्पते अत्र । "प्रकृत्या कपयोः खफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इति प्रकृतिभावे प्राप्ते "ऋताकारौ च परयोः" (शु. य. प्रा. ३ अ. ५१ सू.) ऋतः अवरश्च यथासंख्यं पतिपरयोः सकारेण व्यवधीयते। इति सकारे तत "ऊष्मान्तस्थाभ्यश्च स्पर्शाः" (शु. य. प्रा. ४ अ. १०२सू.) इत्यनेन पकारस्य द्वित्वम्।

सातौवाजंस्यकारवंः ॥ त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्का
ष्ठास्वर्वंतंः ॥ ३७ ॥ सत्त्वम् ॥ सत्त्वन्नंश्चित्रवज्ज्रहस्तधृ
ष्णुयामुहस्त्वंवानोऽअंद्रिवंः ॥ गामश्श्वंᳬरत्थ्यमिन्द्रसङ्किर
सत्रावाजन्नजिग्ग्युषे ॥ ३८ ॥ कयांनः ॥ कयांनश्चित्रऽ
आभुंवदूतीसदावृंधःसखां ॥ कयाशचिंष्ठयावृता ॥ ३९ ॥
कस्त्वां । सत्त्योमदांनाम्मᳬहिंष्ठोमत्त्सदन्धंसः ॥ दृढाचिंदा
रुजेवसुं ॥ ४० ॥ अभीषुणंः ॥ अभीषुणःसखींनामविता

१ अभीषुणः । अत्र अभीषुनः । अत्र समानपदत्वाभावेन णत्वाप्राप्तौ "निषणाय०" (शु. य. प्रा. ३ अ. ८१ सू.) इत्यनेन णत्वं निपात्यते ।

जरितॄणाम् ॥ शतम्भवास्यूतये ॥ ४१ ॥ यज्ञायज्ञावꣳ ॥
॥६४॥ यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्प्रप्रंवयमृतं ॥ २७ ॥
ज्जातवेदसम्प्रियम्मित्रन्नशꣳसिषम् ॥४२॥ पाहिनः ॥ पाहि
नोऽअग्नऽएकयापाह्युतद्वितीयया ॥ पाहिगीर्ब्भिस्तिसृभि
रूर्ज्जाम्पतेपाहिचतसृभिर्व्वसो ॥ ४३ ॥ ऊर्ज्जोनपातम् ॥
ऊर्ज्जोनपातꣳसहिनायमस्म्मयुर्दाशेमहव्यदातये ॥ भुवद्वा ॥ ६४ ॥
जेष्ष्ववितांभुवद्वृधऽउतत्त्रातातनूनाम् ॥ ४४ ॥ संव्वत्सरो

सि । परिवत्त्सरोसीदावत्त्सरोसीद्द्वत्त्सरोसिव्वत्त्सरोसि ॥ उष
संस्त्तेकल्प्पन्तामहोरात्राास्त्तेकल्प्पन्तामर्द्धमासास्त्तेकल्प्पन्ता
म्मासास्त्तेकल्प्पन्तामृतवस्त्तेकल्प्पन्ताᳬसंव्वत्त्सरस्त्तेकल्प्प
ताम् ॥ प्रेत्त्याऽएत्त्यैसञ्चाञ्चप्पचसारय ॥ सुपर्ण्णाचिदसितयां
देवतयाङ्गिरस्वद्ध्रुवःसीद ॥ ४५ ॥ [ ११-४ ] इति श्रीवाज-
सनेयसंहितायां सप्तविᳬशोऽध्यायः ॥ २७ ॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ होतायक्षदेकादश, देवंबर्हिर्द्वादश,

शु. य. संहि. पुनरप्येवं, चत्त्वारः षट्चत्त्वारिꣳशत् [अ. २८ मं. ४६ उ. वि. अ.
॥ ६५ ॥ अनु. ४ ] हरिः ॐ ॥ होतायक्क्षत् ॥ होतायक्क्षत्त्समिधेन्द्र ॥ २८ ॥
मिडस्प्पदेनाभापृथिव्व्याऽअधि ॥ दिवोव्वर्ष्मन्त्समिद्ध्यतऽ
ओजिष्ठश्चर्षणीसहांव्वेत्त्वाज्ज्यस्य होतर्य्यज ॥ १ ॥ होता
यक्क्षत्तनूनपातमूतिभिः ॥ होतायक्क्षत्तनूनपातमूतिभिर्ज्जे
तारमपराजितम् ॥ इन्द्रन्देवꣳस्वर्व्विदम्पथिभिर्म्मधुमत्त ॥ ६५ ।

१ चर्षणीसहांवेत्तु । अत्र "आविभ्य सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन चर्षणीशब्दात्परस्य सस्य षत्वापत्तौ "पृथिवीदिवुपरि चर्षणि शकुनियासिभ्यः" (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन तत्परस्य सस्य प्रकृतिभावे न षत्वम् ।

मैर्न्नराशꣳसैनतेजसाव्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ २ ॥ होता
यक्क्षदिडाभिरिन्द्रम् ॥ होतायक्क्षदिडाभिरिन्द्रमीडितमाजु
ह्वानममर्त्त्यम् ॥ देवोदेवैःसवीर्य्योव्वज्ज्रहस्तꣳपुरन्दरोव्वेत्त्वा
ज्ज्यस्यहोतर्य्यज ॥ ३ ॥ होतायक्क्षद्बर्हिषीन्द्रम् ॥ होता
यक्क्षद्बर्हिषीन्द्रन्निषद्वरंव्वृषभन्नर्य्यापसम् ॥ व्वसुभीरुद्द्रैरादि
त्त्यैःसयुग्भिर्ब्बर्हिरासदद्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ ४ ॥ होता
यक्क्षदोजोन ॥ होतायक्क्षदोजोनव्वीर्य्यꣳसहोद्वारऽइन्द्रम

वर्द्धयन् ॥ सुप्रायणाऽअस्मिन्यज्ञेविश्रयन्तामृतावृधो
द्वारऽइन्द्रायमीढुषेव्यन्त्वाज्यस्यहोतर्यज ॥ ५ ॥ होता
यक्षदुषेऽइन्द्रस्य । धेनूसुदुघेमातरामही ॥ सवातरौनते
जंसावत्समिन्द्रमवर्द्धतांवीतामाज्यस्यहोतर्यज ॥ ६ ॥ होता
यक्षद्दैव्याहोतारा । भिषजासखायाहविषेन्द्रम्भिषज्यतः ॥
कवीदेवौप्रचेतसाविन्द्रायधत्तऽइन्द्रियंवीतामाज्यस्यहोत
र्यज ॥७॥ होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवी

न्भेषजन्त्रयंस्त्रिधातवोपसऽइडासरस्वतीभारतीमुही२ ॥ इन्द्रं
पत्नीहविष्म्मतीर्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ८ ॥ होतायक्क्ष
त्त्वष्टारमिन्द्रम् ॥ होतायक्क्षत्त्वष्टारमिन्द्रन्देवम्भिषजꣳसुय
जङ्घृतश्श्रियम् ॥ पुरुरूपꣳसुरेतसम्मघोनमिन्द्रायत्त्वष्टादधदि
न्द्रियाणिवेत्त्वाज्ज्यस्यहोतर्य्यज ॥९॥ होतायक्क्षद्वनस्प्पतिꣳ
शमितारम् ॥ होतायक्क्षद्वनस्प्पतिꣳशमितारꣳशतक्क्रतुन्धि
योजोष्टारमिन्द्रियम् ॥ मद्ध्वासमञ्जन्पथिभिः सुगेभिस्स्वदाति

शु. य. संहि. उ. वि. अ.

॥ ६७ ॥ ॥ २८ ॥

यज्ज्ञम्मधुनाघृतेनवेत्त्वाज्ज्यस्यहोतर्य्यज ॥ १० ॥ होतायक्ष
दिन्द्रꣳस्वाहा ॥ होतायक्षदिन्द्रꣳस्वाहाज्ज्यस्यस्वाहामेदसः
स्वाहास्त्तोकानाꣳस्वाहास्वाहाकृतीनाꣳस्वाहाहव्व्यसूक्त्तीना
म् ॥ स्वाहादेवाऽआज्ज्यपाजुषाणाऽइन्द्रऽआज्ज्यस्यव्व्यन्तुहो
तर्य्यज ॥ ११ ॥ [ ११-१ ] देवम्बर्हिरिन्द्रम् ॥ देवम्बर्हि
रिन्द्रꣳसुदेवन्देवैर्व्वीरवत्त्स्तीर्ण्णंव्वेद्यामवर्द्धयत् ॥ वस्त्तोर्वृत ॥ ६७ ॥
म्प्राक्त्तोर्भृतꣳरायाबर्हिष्मतोत्त्यगाद्वसुवनेव्वसुधेयस्यव्वेतुय

जं ॥ १२ ॥ देवीर्द्वारः ॥ देवीर्द्वारऽइन्द्रᳪ सङ्घाते वीड्वीर्यामन्नवर्द्धयन् ॥ आवत्सेनतरुणेनकुमारेणचमीवतापार्वाणᳪ रेणुकंकाटन्नुदन्तांव्वसुवनेव्वसुधेयस्यव्यन्तुयजं ॥ १३ ॥ देवीऽउषासानक्ता ॥ देवीऽउषासानक्तेन्द्रँय्यज्ञेप्प्रयत्यह्वेताम् ॥ दैवीर्व्विशःप्प्रायासिष्टाᳪसुप्प्रीतेसुधितेव्वसुवनेव्वसुधेयस्यव्वीताँय्यजं ॥ १४ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीव्वसुधितीदेवमि

---

१ देवी उषासा। अत्र "उषमहोभिर्नकप्रीकारैकारौकारनकारेभ्यः" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन देवीशब्दस्यैकारात्परस्य उष इत्यस्य

५१ इस्वाकारस्य दीर्घाकारः।

न्द्रमवर्द्धताम्॥ अयांव्युन्व्याघाद्वेषाꣳस्यान्याव्वक्षद्वसुवार्य्याणि यजमानाय शिक्षिते व्वसुवने व्वसुधेयस्यवीताँय्यज ॥ १५ ॥
देवीऽऊर्जाहुती ॥ देवीऽऊर्जाहुतीदुघेसुदुघेपयसेन्द्रमवर्द्धताम् ॥ इषमूर्जमुन्याव्वक्षत्सग्धिꣳसपीतिमन्यानवेनपूर्व्वन्दयमानेपुराणेननवमधातामूर्जमूर्जाहुतीऽऊर्जयमाने व्वसुवार्य्याणि यजमानाय शिक्षिते व्वसुवने व्वसुधेयस्यवीताँय्यज ॥ १६ ॥
देवादैव्यां ॥ देवादैव्याहोताराद्देवमिन्द्रमवर्द्धताम् ॥ हताघ

शꣳसावाभांष्ट्ठींव्वसुव्वार्य्याणियजंमानायशिक्षितौव्वंसुवनेव्वसु
धेयंस्यव्वीतांय्यज ॥ १७ ॥ देवीस्तिस्त्रः ॥ देवीस्तिस्त्रास्ति
स्त्रोदेवीःपतिमिन्द्रंमवर्द्धयन् ॥ अस्पृंक्षद्भारतीदिवꣳरुद्रैर्य्य
ज्ञꣳसरंस्वतीडाव्वसुंमतीगृहान्व्वंसुवनेव्वसुधेयंस्यव्यन्तुयज
॥ १८ ॥ देवऽइन्द्रं ॥ देवऽइन्द्रोनराशꣳसंस्त्रिवरूथस्त्रिब
न्धुरोदेवमिन्द्रंमवर्द्धयत् ॥ शतेनंशितिपृष्ठानामाहितꣳसहस्रेण
प्प्रवर्त्ततेमित्रावरुणेदंस्यहोत्रमर्हतोबृहस्प्पतिंस्तोत्रमश्विना

द्ध्यर्य्यंवंव्वसुवनेंव्वसुधेयंस्यव्वेतुयज ॥ १९ ॥ देवोदेवैः ॥ देवो
॥ ६९ ॥ देवैर्व्वनस्पतिर्हिरण्ण्यपर्ण्णोमधुशाखःसुपिप्पलोदेवमिन्द्रमव
र्द्धयत् ॥ दिवमग्ग्रेणास्पृक्क्षदान्तरिक्क्षम्पृथिवीमदृꣳहीद्वसुव
नेंव्वसुधेयंस्यव्वेतुयज ॥ २० ॥ देवम्बर्हिः ॥ देवम्बर्हिर्व्वारितो
नान्देवमिन्द्रमवर्द्धयत् ॥ स्वासस्थमिन्द्रेणासन्नमन्न्याबि
र्हिꣳष्ष्यभ्भ्यभूद्वसुवनेंव्वसुधेयंस्यव्वेतुयज ॥ २१ ॥ देवोऽ ॥ ६९ ॥
अग्निः ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रमवर्द्धयत् ॥ स्विष्टकृ

वेन्त्स्विष्टकृत्स्विष्टमद्यकरोतुनोव्वसुवनेव्वसुधेयस्यव्वेतुयज
॥ २२ ॥ अग्निमद्य । होतारमवृणीतायँय्यजमानःपचन्प
क्तीःपचन्पुरोडाशम्बध्नन्निन्द्रायच्छागम् ॥ सूपस्थाऽअद्यदे
वोव्वनस्पतिरभवदिन्द्रायच्छागेन ॥ अघत्तम्मेदस्तःप्रतिपच
ताग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामद्यऽऋषे ॥ २३ ॥ [ १२-२ ]
होतायक्षत्समिधानम्महत् ॥ होतायक्षत्समिधानम्महद्य
शःसुसमिद्धंव्वरेण्यमग्निमिन्द्रंव्वयोधसम् ॥ गायत्रीञ्छन्दऽ

१. अ. २१, मं. ६१—त्वामद्यऽऋषऽ आ० ॥ १ ॥ इति प्रतीकः ॥

इन्द्रियञ्चयाविङ्गाम्वयोदधद्धेत्त्वाज्ज्यंस्यहोतर्य्यज ॥ २४ ॥ होता
यक्क्षत्तनूनपातमुद्भिदम् ॥ होतायक्क्षत्तनूनपातमुद्भिदुं य
ङ्गर्ब्भमदितिर्द्दधेशुचिमिन्द्रंव्वयोधसम् ॥ उष्णिहञ्छन्दऽ
इन्द्रियन्दित्यवाहङ्गांव्वयोदधद्वेत्त्वाज्ज्यंस्यहोतर्य्यज ॥ २५ ॥
होतायक्क्षदीडेन्यमीडितम् ॥ होतायक्क्षदीडेन्यमीडितंव्वृत्रह
न्तममिडाभिरीड्यꣳसहꣳसोममिन्द्रंव्वयोधसम् ॥ अनुष्टुभञ्छ ॥ ७० ॥
न्दऽइन्द्रियम्पञ्चाविङ्गांव्वयोदधद्वेत्त्वाज्ज्यंस्यहोतर्य्यज ॥२६॥

होतांयक्षत्त्सुबर्हिषंम्पूषण्वन्तंम् ॥ होतांयक्षत्त्सुबर्हिषंम्पू
षण्वन्तममर्त्त्यꣳसीदन्तम्बर्हिषिप्प्रियेमृतेन्द्रंव्वयोधसम् ॥
बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गांव्वयोदधद्द्वेत्वाज्ज्यस्यहोतर्य्य
जं ॥२७॥ होतांयक्षद्व्यचस्वतीःसुप्प्रायणाः ॥ होतांयक्ष
द्व्यचस्वतीःसुप्प्रायणाऽऋतावृधोद्वारोदेवीर्हिरण्ययीर्ब्रह्मा
णमिन्द्रंव्वयोधसम् ॥ पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्यवाहङ्गांव्व
योदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २८ ॥ होतांयक्षत्त्सुपेश

सासुशिल्प्पे।ब्बृहतीऽउभेनक्क्तोषासानदंश्शतेव्विश्श्वमिन्द्रंव्वयो
धसंम् ॥ त्रिष्टुभञ्छन्दऽइहेन्द्रियम्पंष्ठ्वाहङ्गांव्वयोदधंद्धीता
माज्ज्यंस्स्यहोतर्य्यंज ॥२९॥ होतायक्क्षत्त्तनूनपातंसरस्वतीमविर्म्मेषो देवानाम् ॥
होतायक्क्षत्त्प्रचेतसादेवानामुत्तमंय्यशोहोताराद्दैव्याकवीस
युजेन्द्रंव्वयोधसंम्॥ जगतीञ्छन्दऽइन्द्रियमनड्वाहङ्गांव्वयोदधं
द्धीतामाज्ज्यंस्स्यहोतर्य्यंज ॥३०॥ होतायक्क्षत्पेशस्वतीस्त्ति ॥ ७१ ॥
स्रः ॥ होतायक्क्षत्पेशस्वतीस्त्तिस्रोदेवीर्हिरण्ययीर्ब्भारती

र्वृहतीम्मर्हीश्पतिमिन्द्रंव्वयोधसंम् ॥ व्विराजञ्छन्दऽइहेन्द्रि
यन्धेनुङ्गान्नव्वयोदधद्द्घन्त्वाज्ज्यंस्यहोतर्य्यजं ॥ ३१ ॥ होतां
यक्षत्त्सुरेतंसन्त्वष्टांरम् ॥ होतांयक्षत्त्सुरेतंसन्त्वष्टांरम्पुष्टिव
र्द्धनꣳरूपाणिविभ्भ्रंतम्पृथक्पुष्टिमिन्द्रंव्वयोधसंम् ॥ द्विपदञ्छ
न्दंऽइन्द्रियमुक्क्षाणङ्गान्नव्वयोदधद्द्वेत्त्वाज्ज्यंस्यहोतर्य्यजं ३२॥
होतांयक्षद्वनस्प्पतिꣳशमितारंम् ॥ होतांयक्षद्वनस्प्पतिꣳश
मितारꣳशतक्क्रतुꣳहिरंण्ण्यपर्ण्णमुक्त्थिनꣳरशनाम्बिभ्भ्रंतंव्व

शिम्भगमिन्द्रँव्वयोधसम् ॥ ककुभञ्छन्दऽइहेन्द्रियँव्वृशाँ व्वेहतङ्गांव्व
योदधद्वेत्त्वाज्ज्यंस्यहोतर्य्यज ॥ ३३॥ होतायक्क्षत्स्वाहाकृती
रग्ग्निम् ॥ होतायक्क्षत्स्वाहाकृतीरग्ग्निङ्गृहपंतिम्पृथग्ग्वरुणम्भे
षजङ्कविङ्क्षत्रमिन्द्रँव्वयोधसम् ॥ अतिच्छन्दसञ्छन्दऽइन्द्रि
यम्बृहदृषभङ्गांव्वयोदधद्वयन्त्वाज्ज्यंस्यहोतर्य्यज ॥ ३४ ॥
[ ११-२ ] देवम्बर्हिः ॥ देवम्बर्हिर्व्वयोधसन्देवमिन्द्रमवर्द्ध
यत् ॥ गायत्र्याच्छन्दसेन्द्रियञ्चक्क्षुरिन्द्रेव्वयोदधद्वसुवनेव्वसु

धेयस्यव्वेतुयजं ॥ ३५ ॥ देवीर्द्वारः ॥ देवीर्द्वारोव्वयोधसꣳ
शुचिमिन्द्रमवर्द्धयन् ॥ उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रे
व्वयोदधद्वसुवनेव्वसुधेयस्यव्यन्तुयजं ॥ ३६ ॥ देवीऽउषासा
नक्ता । देवमिन्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् ॥ अनुष्टुभा
च्छन्दसेन्द्रियम्बलमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँय्यजं
॥ ३७ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीव्वसुधितीदेवमिन्द्रंव्वयो
धसन्देवीदेवमवर्द्धताम् ॥ बृहत्याच्छन्दसेन्द्रियꣳश्रोत्रमि

शु. य. संहि. ॥ ७२ ॥

उ. वि. अ. ॥ २८ ॥

न्द्रंव्वयोदधद्वसुवनेव्वसुधेयंस्यव्वीताँ३य्यज ॥ ३८ ॥ देवीऽऊ
र्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेपयसेन्द्रंव्वयोधसन्देवी
देवमवर्द्धताम् ॥ पङ्क्याच्छन्दसेन्द्रियꣳशुक्रमिन्द्रेव्वयोद
धद्वसुवनेव्वसुधेयंस्यव्वीताँ३य्यज ॥ ३९ ॥ देवादैव्या ॥ देवा
दैव्याहोताराद्देवमिन्द्रंव्वयोधसन्देवौदेवमवर्द्धताम् ॥ त्रिष्टुभा
च्छन्दसेन्द्रियन्त्विषिमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयंस्यव्वीताँ ॥ ७२ ॥
३य्यज ॥ ४० ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीर्व्वयो

धसुम्पतिमिन्द्रंमवर्द्धयन् ॥ जगंत्याच्छन्दंसेन्द्रियꣳ शूषमि
न्द्रेव्वयोदधंद्वसुवनेव्वसुधेयंस्यव्यन्तुयजं ॥ ४१ ॥ देवोनराशꣳ
सं÷ ॥ देवोनराशꣳसोदेवमिन्द्रंव्वयोधसंन्देवोदेवमंवर्द्धयत् ॥
व्विराजाच्छन्दंसेन्द्रियꣳ रूपमिन्द्रेव्वयोदधंद्वसुवनेद्वसुधेयंस्य
व्वेतुयजं ४२ ॥ देवोव्वनस्पतिं÷ ॥ देवोव्वनस्पतिर्द्देवमिन्द्रं
व्वयोधसंन्देवोदेवमंवर्द्धयत् ॥ द्विपदाच्छन्दंसेन्द्रियम्भगमि
सं. ५२ न्द्रेव्वयोदधंद्वसुवनेव्वसुधेयंस्यव्वेतुयज ॥ ४३ ॥ देवम्बर्हिः ॥

देवम्बर्हिर्व्वारितीनान्देवमिन्द्रंव्वयोधसन्देवन्देवमवर्द्धयत् ॥
ककुभाच्छन्दसेन्द्रियँय्यशऽइन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वे
तुयज ॥ ४४ ॥ देवोऽअग्निः । स्विष्टकृद्देवमिन्द्रंव्वयोधसन्दे
वोदेवमवर्द्धयत् ॥ अतिच्छन्दसाच्छन्दसेन्द्रियङ्क्षत्रमिन्द्रेव्व
योदधद्वसुवनेव्वसु धेयस्यव्वेतुयज ॥ ४५ ॥ अग्निमद्य ।
होतारमवृणीतायँय्यजमानःपचन्पक्तीःपचन्पुरोडाशम्बध्न
न्निन्द्रायव्वयोधसेच्छागम् ॥ सुपस्थाऽअद्यदेवोव्वनस्पतिर्

भवदिन्द्रायव्वयोधसेच्छागेन ॥ अघुत्तम्मेदुस्त्तश्श्प्रतिपचुता
ग्ग्रभीदवीवृधत्त्पुरोडाशेन ॥ त्वामुद्यऽऋषे ॥ ४६ ॥ [ १२-४ ]
इतिश्रीवाजसनेयसंहितायाम् अष्टाविंशोऽध्यायः ॥ २८ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम ॥ समिद्धोऽअग्ग्ने
कादश, यदक्रन्दस्त्रयोदश, समिद्धोऽअद्यद्वादश, केतुंकृण्वँ
श्चतुर्व्विᳬशति, श्चत्वारःषष्टिः [ अ. २९ मं. ६० अनु. ४ ] ॥
हरिः ॐ ॥ समिद्धोऽअग्ग्न ॥ समिद्धोऽअग्ग्नन्कदंरम्मती

१. अ. २१ ॥ मं. ६१ ॥ त्वामद्यऽऋषऽ० १ ॥ इति प्रतीकः ॥

शु. य. संहि. नाङ्घृतमग्ग्नेमधुमत्त्पिन्वमानः ॥ व्वाजीव्वहन्व्वाजिनञ्जातवे उ. वि.
दोदेवानांव्वक्षिप्प्रियमासधस्त्थम् ॥१॥ घृतेनाञ्जन् ॥ घृते अ.
॥ ७५ ॥ नाञ्जन्त्सम्पथोदेवयानान्त्प्रजानन्वाज्ज्यप्प्येतुदेवान् ॥ अनु ॥ २९ ॥
त्त्वासप्प्तेप्प्रदिशःसचन्ताᳪंस्वधामस्म्मैयजमानायधेहि ॥२॥
ईड्यश्च ॥ ईड्यश्चासिव्वन्द्यश्चव्वाजिन्नाशुश्चासिमेद्ध्यश्चसप्प्ते ॥
अग्ग्निष्ट्वादेवैर्व्वसुभिःसजोषाःप्प्रीतंव्वह्निंव्वहतुजातवेदाः ॥ ३ ॥ ॥ ७५ ॥
स्तीर्णम्बर्हिः। सुष्टरीमाजुषाणोरुपृथुप्प्रथमानम्पृथिव्व्याम् ॥

देवेभिर्युक्तमदितिꣳसजोषाꣳस्योनङ्कृण्वाना सुविते दधातु
॥ ४ ॥ एताऽउँवꣳ । सुभगा विश्वरूपा विपक्षोभिꣳश्रयमाणाऽ
उदातैꣳ ॥ ऋष्वाः सतीः कवषꣳशुम्भमाना द्वारो देवीः सुप्राय
णा भवन्तु ॥ ५ ॥ अन्तरा मित्रावरुणा ॥ अन्तरा मित्रावरु
णा चरन्ती मुखँय्यज्ञानामभि संविदाने ॥ उषासा वाꣳसुहिर
ण्ये सुशिल्पेऽऋतस्य योनाविह सादयामि ॥ ६ ॥ प्रथमा वा
म ॥ प्रथमा वाꣳसरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि वि

श्वा ॥ अपिंप्प्रयुश्चोदंनावाम्मिमाना होतारा ज्योतिःप्प्रदिशा
॥७६॥ दिशन्ता ॥ ७ ॥ आदित्यैर्न्नः ॥ आदित्यैर्न्नोभारतीव्वष्टुय ॥ २१ ॥
ज्ज्ञꣳसरस्वतीसहरुद्रैर्न्नऽआवीत् ॥ इडोपहूताव्वसुभिःसजोषा
युज्ज्ञन्नोदेवीरमृतेषुधत्त ॥८॥ त्वष्टांव्वीरम् ॥ त्वष्टांव्वीरन्देवकां
मञ्जजानत्त्वष्टुरर्व्वाजायतऽआशुरश्वः ॥ त्वष्टेदंव्विश्वम्भुवनञ्ज
जानबहोःकर्त्तारमिहयक्षिहोतः ॥९॥ अश्वोघृतेन ॥ अश्वोघृ ॥ ७६ ॥
तेनत्त्मन्न्यासमक्तऽउपदेवाँ २॥ ऽऋतुशःपाथऽएतु ॥ व्वनस्प्प

तिर्द्देवलोकम्प्रजानन्नग्निनाहव्यास्वदितानिवक्षत् ॥ १० ॥
प्रजापतेस्तपसा । वावृधानःसद्योजातोदधिषेयज्ञमग्ने ॥
स्वाहाकृतेनहविषापुरोगायाहिसाद्ध्याहविरदन्तुदेवाः ॥ ११ ॥
[ ११-१ ] यदक्रन्दः । प्रथमञ्जायमानऽउद्यन्त्समुद्रादु
तवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्त्यम्महि
जातन्तेऽअर्वन् ॥ १२ ॥ यमेनदत्तम् ॥ यमेनदत्तन्त्रितऽ
एनमायुनगिन्द्रऽएणम्प्रथमोऽअद्ध्यतिष्ठत् ॥ गन्धर्वोऽअस्य

१ इन्द्रऽएणम् । अत्र असमानपदत्वेनाप्राप्तौ ''निषण्णाय रथवाहणमिन्द्रऽएणम्०'' ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन णत्वं निपात्यते ।

रशनामंगृभ्णात्सूरादश्वंवसवोनिरंतष्ट ॥ १३ ॥ असिय
मः ॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन ॥
असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबन्धनानि
॥ १४ ॥ त्रीणिते ॥ त्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सु
त्रीण्यन्तःसमुद्रे ॥ उतेवमेवरुणश्छन्त्स्यर्वन्यत्रातऽआहुः
परमञ्जनित्रम् ॥ १५ ॥ इमातेवाजिन् ॥ इमातेवाजिन्नव
मार्जनानीमाशफानांसनितुर्निधानां ॥ अत्रातेभद्रारश

नाऽअंपश्श्यमृतस्युयाऽअंभिरक्क्षंन्तिगोपाश्॥१६॥ आत्क्मा
नंन्ते ॥ आत्क्मानंन्तेमनंसारादंजानामवोदिवापतयंन्तम्प
तङ्गम् ॥ शिरोंऽअपश्श्यम्पथिभिं÷सुगेभिंररेणुभिर्ज्जेंहमान
म्पतत्रि ॥ १७ ॥ अंत्रांते[1] । रूपमुंत्तममंपश्श्यञ्जिगींषमा
णमिषऽआपदेगोश् ॥ यदातेमर्त्तोऽअनुभोगमानडादिद्ग्रसिं
ष्ठुऽओषंधीरजीगः ॥ १८॥ अनुंत्त्वा ॥ अनुंत्त्वारथोऽअनु
मर्य्योंऽअर्व्वन्ननुगावोऽनुभगं÷कनीनांम् ॥ अनुव्व्रातांसस्त्तवं

१ अत्राते। अत्र ते परे अत्रशब्दस्य ह्रस्वाकारस्य ''पृष्णो जहीमसोष्वत्र'' (शु. य. प्रा. ३ अ. १२१ सू.) इत्यनेन दीर्घः।

शु. य. संहि. ॥७८॥ उ. वि. अ. ॥ २९ ॥ ॥ ७८ ॥

सख्यमीयुरनुदेवाममिरेवीर्यन्ते ॥ १९ ॥ हिरण्यशृङ्गो
यं÷ ॥ हिरण्यशृङ्गोयोऽअस्यपादामनोजवाऽअवरऽइन्द्रऽ
आसीत् ॥ देवाऽइदस्यहविरद्यमायन्योऽअर्वन्तम्प्रथमोऽअ
ध्यतिष्ठत् ॥ २० ॥ ईर्म्मान्तासःसिलिकमध्यमासः ॥ ईर्म्मा
न्तासःसिलिकमध्यमासःसꣳशूरणासोदिव्यासोऽअत्याः ॥
हꣳसाऽइवश्रेणिशोयतन्तेयदाक्षिषुर्दिव्यमज्ममश्वाः÷
॥ २१ ॥ तवशरीरम् ॥ तवशरीरम्पतयिष्ण्वर्वन्तवचित्तं

व्वातंऽइवध्रजीमान्[1] ॥ तवशृङ्गाणिविष्ठितापुरुत्त्रारण्ण्येषुजर्ब्भु
राणाचरन्ति ॥२२॥ उपप्र ॥ उपप्प्रागाच्छसनंव्वाज्ज्यर्व्वादेवद्द्री
चामनसादीद्ध्यानः ॥ अजःपुरोनीयतेनाभिरस्यानुपश्चात्कव
योयन्तिरेभाः ॥२३॥ उपप्र ॥ उपप्प्रागात्त्परमँय्यत्त्सधस्त्थम
र्व्वाँ २ ॥ऽअच्छापितरम्मातरञ्च ॥ अद्यादेवाञ्जुष्टतमोहिगम्म्याऽ
अथाशास्तेदाशुषेव्वार्य्याणि ॥२४॥ [१३-२] समिद्धोऽअद्य ।

---

१ अजिमान् । अत्र "शृणुतत्विषिप्रजिभयत पिबेतस्वनिष्टरक्षा मकारे" (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे परे एते दीर्घा भवन्ति तेन दीर्घं अजीमान् ।

शु. य. संहि. मनुंषोदुरोणेदेवोदेवान्यंजसिजातवेदः ॥ आचवहंमित्रमह उ. वि. अ.
।७९॥ श्चिकित्वान्त्वन्दूतःकुविरंसिप्रचेताः ॥२५॥ तनूंनपात्पथः ॥ ॥ २९ ॥
तनूंनपात्पथऽऋतस्ययानान्मध्वांसमञ्जन्त्स्वदयासुजिह्व ॥ म
न्मानिधीभिरुतयुज्ञमृन्धन्देवत्राचंकृणुह्यध्वरन्नः ।२६॥नरा
शꣳसंस्यमहिमानम् ॥ नराशꣳसंस्यमहिमानंमेषामुपंस्तोषा
मयजतस्ययुज्ञैः ॥ येसुक्रतंवःशुचंयोधियन्धाःस्वदंन्तिदेवा ॥ ७९ ॥
ऽउभयांनिहव्या ॥२७॥ आजुह्वानऽईड्यंः ॥ आजुह्वानऽ

ईड्योव्वन्द्यश्श्चायांह्यग्ग्नेव्वसुंभिःसजोषाः॥ त्वन्देवानांमसियह्व
होतासऽएनान्नय्यक्क्षीषितोयजीयान्॥२८॥ प्राचीनम्बर्हिः प्प्र
दिशांपृथिव्याव्वस्तोरस्याव्वृज्यतेऽअग्ग्रेऽअह्नाम्॥ व्युंप्प्रथतेव्वि
तरंव्वरीयोदेवेब्भ्योऽअदितयेस्योनम्॥२९॥ व्यचंस्वतीरुर्व्वियावि
श्श्रयन्ताम्पतिब्भ्योनजनंयःशुम्भमानाः॥ देवीर्द्वारोबृहती
र्व्विश्श्वमिन्वादेवेब्भ्योभवतसुप्प्रायणाः॥३०॥ आसुष्ष्वयन्ती य
जतेऽउपाकेऽउषासानक्क्तासदतान्नियोनौ॥ दिव्येयोषणेबृहती

सं. ५३

१ उपाकेऽउषासा। अत्र एकारात्परस्य उष इत्यस्य हृस्वाकारस्य "उपमहोभिर्नके०" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन दीर्घाकारः।

सुरुक्मेऽअधिश्रियꣳशुक्रपिशन्दधाने॥३१॥दैव्याहोतारा ।
॥८०॥ प्प्रथमासुवाचामिमानायज्ञम्मनुषोयजध्यै ॥ प्रचोदयन्तावि ॥२९॥
दथेषुकारूप्प्राचीनञ्ज्योतिः प्प्रदिशादिशन्ता॥३२॥ आनः ॥
आनोयज्ञम्भारतीतूयमेत्त्विडामनुष्वदिहचेतयन्ती॥तिस्रो
देवीर्बर्हिरेदꣳस्योनꣳसरस्वतीस्वपसःसदन्तु ॥३३॥ यऽइमे ।
द्यावापृथिवीजनित्रीरूपैरपिꣳशद्भुवनानिविश्श्वा ॥ तमद्यहोत ॥८०॥

१ अयहोतरि । अत्र ''अथ तं हकारचकारभवतवृणीमहेदेवेषु'' (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन हकारे परे दीर्घे प्राप्ते ''नहोतरि'' (शु. य. प्रा. ३ अ. ११६ सू.) इत्यनेन निषेधान्न दीर्घः ।

रिषितोयजीयान्देवन्त्वष्टारमिहयक्षिविद्वान् ॥ ३४ ॥ उपाव

सृजत्क्मन्न्या । समञ्जन्देवानाम्पाथऽऋतुथाहवीᳬषि ॥ व्वन

स्प्पतिꣳशमितादेवोऽअग्निःस्वदन्तुहव्यम्मधुनाघृतेन॥३५॥

सद्योजातः॥सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पु

रोगाः ॥ अस्यहोतुꣳप्प्रदिश्यृतस्यव्वाचिस्वाहाकृतᳬहविरद

न्तुदेवाः ॥३६॥ [ १२-३ ] केतुङ्कृण्वन् ॥ केतुङ्कृण्वन्नकेत

१ वनस्प्पतिः । अत्र "पत्यौ च सकारेण" (शु. य. प्रा. ३ अ. ५० सू.) इत्यनेन पतिशब्दे परे वनशब्दः सकारेण व्यवधीयते । तत ऊष्मान्तस्थान्त्य-श्च स्पर्शः (शु. य. प्रा. ३ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वे रूपम् । "प्रकृत्या कपयोः खफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इत्यस्यापवादोऽयम् ।

शु. य. संहि. ॥८१॥

व्वेपेशोभर्व्यांऽअपेशसे ॥ समुषद्भिरजायथाः ॥३७॥ जीमूतं उ. वि. अ.

स्येवभवति ॥ जीमूतस्येवभवतिप्प्रतीकँव्यद्वर्म्मीयातिसमदां ॥२९॥

मुपस्त्थे ॥ अनाविद्धयातन्न्वाजयत्त्वꣳसत्त्वावर्म्मणोमहिमा

पिपर्त्तु ॥ ३८ ॥ धन्न्वंनागाः ॥ धन्न्वंनागाधन्न्वंनाजिञ्जयेमध

न्न्वंनातीव्राःसमदोजयेम ॥ धनुःशत्रोरपकामङ्कृणोतिधन्न्वं

नासर्व्वाःप्प्रदिशोजयेम ॥ ३९ ॥ व्वक्ष्यन्तीवेत् ॥ व्वक्ष्यन्ती ॥८१॥

वेदागनीगन्तिकर्ण्णम्प्प्रियꣳसखायम्परिषस्वजाना ॥ योषेव

शिङ्क्तेवितताधिधन्वञ्ज्याऽइयꣳसमनेपारयन्ती ॥ ४० ॥ तेऽ
आचरन्ती ॥ तेऽआचरन्तीसमनेवयोषामातेवपुत्रम्बिभृता
मुपस्थे ॥ अपशत्रून्विध्यताꣳसंविदानेऽआर्त्नीऽइमेवि
ष्फुरन्तीऽअमित्रान् ॥ ४१ ॥ बह्वीनाम्पिता । बहुरस्यपुत्र
श्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसङ्काःपृतनाश्चसर्वाः
पृष्ठेनिनद्धोजयतिप्रसूतः ॥ ४२ ॥ रथेतिष्ठन् ॥ रथेतिष्ठन्नय
तिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्म

हिमानंरूपनायतमनःपश्चादनुंयच्छन्तिरश्म्मयः ॥ ४३ ॥
तीव्रान्घोषान् ॥ तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिः
सहवाजयन्तः ॥ अवक्रामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँ
१॥ऽरनपव्ययन्तः ॥४४॥ रथवाहणꣳहविः ॥ रथवाहणꣳ
हविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ तत्रारथमुपशग्मꣳ
सदेमविश्वाहावयꣳसुमनस्यमानाः ॥ ४५ ॥ स्वादुषꣳसदः ॥ ८२

१ रथवाहणः । अत्र थकारेण व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय रथवाहणमिन्द्रऽएणम्परिणीयते समिन्द्रणऽउरुष्याणो रक्षाणः पूणःपुणःपूणासत्वा स्वार्णास्यूर्विणीप्रणऽआयूंषि" (शु. य. प्रा. ३ अ. ८७ क.) इत्यनेन णत्वं निपात्यते ।

पितरः ॥ स्वादुषꣳसदः पितरोवयोधाःकृच्छ्रेश्रितःशक्ती
वन्तोगभीराः ॥ चित्रसेनाऽइषुबलाऽअमृध्राःसतोवीराऽउर
वोव्रातसाहाः ॥ ४६ ॥ ब्राह्मणासःपितरः ॥ ब्राह्मणासः
पितरःसोम्यासःशिवेनोद्यावापृथिवीऽअनेहसा ॥ पूषानः
पातुदुरितादृतावृधोरक्षामाकिर्नोऽअघशꣳसऽईशत ॥ ४७ ॥
सुपर्णंवस्ते । मृगोऽअस्यादन्तोगोभिःसन्नद्धापततिप्रसूता ॥

१ शक्तीवन्तः । अत्र "अश्वरश्मिमतिसुमति०" (शु. य. प्रा. ३ अ. ९८ क.) इत्यनेन वन्त इति वकारे परे शक्तिशब्दस्य ह्रस्वेकारस्य दीर्घेकारः ।
२ रक्षामा । अत्र "श्रणुतत्विषिपिब्रजि" (शु. य. प्रा. ३ अ. १११ सू.) इत्यनेन माकारे परे रक्षशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । तेन रक्षामा ।

यत्त्रानरꣳसञ्चविचद्रवन्तितत्त्रास्म्मभ्यमिषवꣳशर्म्मयꣳसन्
॥४८॥ ऋजीतेपरिं। वृङ्धिनोऽश्म्माभवतुनस्त्तनूः॥ सोमोऽ
अधिब्रवीतुनोदितिꣳशर्म्मयच्छतु ॥४९॥ आजंङ्घन्ति॥
आजंङ्घन्तिसान्वेषाञ्जघनाँ२॥ऽउपजिघ्नते॥ अश्वाजनिप्प्र
चेतसोऽश्वान्त्समत्त्सुचोदय॥५०॥ अहिंरिवभोगैः। पर्य्ये
तिबाहुञ्ज्यायाहेतिम्पंरिबाधमानꣳ॥ हस्त्तघ्नोविश्वांवयुनां
निविद्वान्पुमान्पुमांꣳसम्परिपातुविश्वतः॥५१॥ वनं

१ यत्रानरः। अत्र "नरस्सह्सऽऋपीवसलऽआहुर्नियुद्भिप्पु यत्र" (शु. य. प्रा. ३ अ. १२२ सू.) इत्यनेनात्र नरपरे यत्रशब्दाकारस्य दीर्घः।

॥८२॥

स्प्पतेव्वीड्वङ्गः ॥ व्वनंस्प्पतेव्वीड्वङ्गोहिभूयाऽअस्म्मत्त्सखाप्प्र

तरणःसुवीरंः ॥ गोभिःसन्नंद्धोऽअसिव्वीडयंस्वास्त्थाता

तेंजयतुजेत्त्वांनि ॥ ५२ ॥ दिवः[1]पृथिव्याः ॥ दिवः

पृथिव्याःपर्य्योजऽउद्भृतंव्वनस्प्पतिभ्युःपर्य्याभृंतुःसहंः ॥

अपामोज्ज्मानम्परिगोभिरावृंतमिन्द्रंस्यव्वज्ज्रंहविषारथँय्य

ज ॥ ५३ ॥ इन्द्रंस्यव्वज्ज्रंः ॥ इन्द्रंस्यव्वज्ज्रोमरुतामनीक

१ दिवःपृथिव्याः । इत्यत्र "द्विवोऽककुरपृथिव्योः" (शु. य. प्रा. ३ अ. १८ सू.) इत्यनेनाककुरपृथिव्योः सत्वनिषेधाद्विसर्जनीय एव नान्यत् ।

॥८४॥



र्मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ॥ [1]सेमान्नो॑ ह॒व्यदा॑तिञ्जुषा॒णो
दे॒वर॑थ॒ प्प्रति॑ ह॒व्यागृ॑भाय ॥ ५४ ॥ उप॑श्वासय । पृ॒थि॒वीमु॒त
द्याम्पु॑रु॒त्त्रा ते॑ मनुतां॒ विष्ठि॑तञ्जग॑त् ॥ सद॑न्दुभे स॒जू॒रिन्द्रे॑ण दे॒वै
र्दू॒राद्दवी॑यो॒ऽअप॑सेध॒ शत्रू॑न् ॥ ५५ ॥ आक्क्र॑न्दय ॥ आक्क्र॑न्द
य॒ बल॒मोजो॑ न॒ऽआधा॒ [2]निष्ट॑नि॒हि दु॒रि॒ता बाध॑मानः ॥ अप॑प्प्रो

॥ ८४ ।

१ सः इमाम् इति पदद्वयम् । अत्र "सऽओऽवधीमयोः" (शु. य. प्रा. ३ अ. १५ सू.) इत्यनेन इमे परे सपदघटितस्य विसर्जनीयस्य "लोपे च गुणे सेमाम्" इति सिध्यति । २ निष्टनिहि । अत्र "नेः स्यास्तनोः" (शु. य. प्रा. ३ अ. ७० सू.) नेरुपसर्गात्परस्य स्यास्तनयोः सकारस्य षकारः । इति स्तनोः सकारस्य षत्वे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः"। (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन द्वित्वम् ।

७१६

थदुन्दुभेदुच्छुनांऽइतऽइन्द्रंस्यमुष्टिर्रसिव्वीडयस्व ॥ ५६ ॥
आमूः ॥ आमूरंजप्प्रत्त्यावर्त्तयेमाःकेतुमद्दुन्दुभिर्व्वावदी
ति ॥ समश्श्वंपर्ण्णाश्चरंन्तिनोनरोस्म्माकमिन्द्ररंथिनोंजयन्तु
॥ ५७ ॥ आग्नेयःकृष्ण्णग्ग्रीवंः । सारस्वतीमेषीबभ्भ्रुः
सौम्म्यःपौष्ण्णःश्श्यामःशितिपृष्ठोबार्हस्प्पत्त्यःशिल्प्पोव्वैश्श्व

१ रथिनो जयन्तु । अत्र "ऋकारेभ्यः"" (शु. य. प्रा. ३ अ. ८५ सू.) इत्यनेन "स्वरयवहकपैश्च" (शु. य. प्रा. ३ अ. ८६ सू.) इत्यनेनैतैर्व्यवधानविहितस्य णत्वस्य विहितातिरिक्तथकारव्यवधानेनाप्राप्तावपि "शिलिसिवर्गमध्यमव्यवहितोऽपि" (शु. य. प्रा. ३ अ. ९६ सू.) इत्यनेन प्रकृतिभावो विधीयते । इदं शिष्यबुद्धिसमुत्पादनार्थम् ।

७१७

देवऽऐन्द्रोरुणोमारुतश्कल्म्माषंऽऐन्द्राग्नश्सꣳहितोधोरांमः

सावित्रोव्वारुणश्कृष्णऽएकंशितिपात्पेत्त्वं ॥ ५८ ॥ अग्ग्न

येनीकवते ॥ अग्ग्नयेनीकवतेरोहिताञ्जिरनड्वानधोरांमौसावि

त्रौपौष्णौरंजतनाभीव्वैश्श्वदेवौपिशङ्गौतूपरौमारुतश्कल्म्माषं

ऽआग्ग्नेयश्कृष्णोजश्सारस्वतीमेषीव्वारुणश्पेत्त्वं ॥ ५९ ॥

अग्ग्नयेगायत्रायं । त्रिवृतेराथन्तरायाष्टाकपालऽइन्द्रायत्रैष्टुं

भायपञ्चदशायबार्हतायैकादशकपालोव्विश्श्वेभ्योदेवेभ्योजा

गतेभ्यꣳसप्तदशेभ्योवैरूपेभ्योद्वादशकपालोमित्रावरुणा
भ्यामानुष्टुभाभ्यामेकविंशाभ्यांवैराजाभ्याम्पयस्याबृह
स्पतयेपाङ्क्तायत्रिणवायशाक्वरायचरुःसवित्रऽऔष्णिहाय
त्रयस्त्रिंशायरैवतायद्वादशकपालꣳप्राजापत्यश्चरुरदित्यैवि
ष्णुपत्न्यैचरुरग्नयेवैश्वानरायद्वादशकपालोनुमत्याऽअष्टा
कपालꣳ ॥६०॥ [२४-४]॥ इतिश्रीवाजसनेयसंहितायामेको-
सं. ५४ नत्रिंशोऽध्यायः ॥२९॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्र-
७१९

म् ॥ देवसवितः षट्, तपसेकौलालꣳषोडश, द्वौ द्वाविꣳशतिः ॥
[अ. ३० मं. २२ अ. २] हरिःॐ ॥ देवसवितꣳ ॥ देवसवितꣳ
प्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्व्वःकेतपूः
केतन्नꣳपुनातुव्वाचस्प्पतिर्व्वाचन्नꣳस्वदतु ॥ १ ॥ तत्सवितुः ॥
तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचो
दयात् ॥ २ ॥ विश्वानिदेव । सवितर्दुरितानिपरासुव ॥
यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ विभक्तारꣳहवामहे ॥ विभ

क्त्कारꣳहवामहेव्वसोँश्चित्रस्यराधसः ॥ सवितारन्नृचक्क्षसम्
॥४॥ ब्रह्मणेब्राह्मणम् ॥ ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्म
रुद्भ्योव्वैश्श्यन्तपसेशूद्रन्तमसेतस्करन्नारकायव्वीरहणम्पा
प्मनेक्लीबमाक्क्रयायाऽअयोगूङ्कामायपुँश्चलूमतिक्क्रुष्टाय
मागधम् ॥ ५ ॥ नृत्तायसूतम् ॥ नृत्तायसूतङ्गीतायशैलूषन्ध
र्म्मायसभाचरन्नरिष्ठायैभीमलन्नर्म्मायरेभꣳहसायकारिमान
न्दायस्त्रीषखम्प्रमदेकुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायतक्क्षा

शु. य. संहि. णम् ॥ ६ ॥ [ ६-१ ] तपसेकौलालम् ॥ तपसेकौलालम्मा प. त्रि.
यायैकर्म्मारꣳरूपायमणिकारꣳशुभेवपꣳशरव्यायाऽइषुका अ.
॥८७॥ रꣳहेत्त्यैधनुष्क्कारङ्कर्म्मणेज्ज्याकारन्दिष्टायरज्जुसर्ज्जम्मृत्त्यवे ॥३०॥
मृगयुमन्तकायश्वनिनम् ॥ ७ ॥ नदीभ्यःपौञ्जिष्ठम् ॥
नदीभ्यःपौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रायदुर्म्मदं
गन्धर्वाप्सरोभ्योव्रात्त्यम्प्रयुग्भ्यऽउन्मत्तꣳसर्प्पदेवजने ॥८७॥
भ्योऽप्रतिपदमयेभ्यःकितवमीर्य्यतायाऽअकितवम्पिशाचे

ब्भ्योविदलकारीँय्यातुधानेब्भ्यःकण्टकीकारीम् ॥८॥ सन्ध
येञ्जारम् ॥ सन्धयेञ्जारङ्गेहायोपपतिमार्त्यैपरिवित्तन्निर्ऋत्त्यैप
रिविविदानमराद्ध्याऽएदिधिषुःपतिन्निष्कृत्त्यैपेशस्कारीᳪं
सञ्ज्ञानायस्म्मरकारीम्प्रकामोद्यायोपसदंव्वर्णायानुरुधम्ब
लायोपदाम् ॥९॥ उत्त्सादेब्भ्यः कुब्जम् ॥ उत्त्सादेब्भ्यः कुब्ज
म्प्रमुदेव्वामनन्द्वार्ब्भ्यःस्स्रामᳪंस्वप्नायान्धमधर्म्मायबधिरम्प
वित्त्रायभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्प्रश्निनमु

शु. य. संहि. ॥८८॥

पशिक्क्षायांऽअभिप्प्रुश्निनंम्मुर्य्यादांयैप्प्रश्नविवाकम् ॥१०॥ उ. वि. अ.

अम्मैंब्भ्योहस्त्तिपम् ॥ अम्मैंब्भ्योहस्त्तिपञ्जवायांश्श्वपम्पुष्ट्यै ॥३०॥

गोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशंङ्कीलालां

यसुराकारम्भुद्रायंगृहपऽँश्रेयसेवित्तधमाध्यंक्क्ष्यायायानुक्क्ष

त्तारम् ॥ ११ ॥ भायैदार्व्वाहारम् ॥ भायैदार्व्वाहारम्प्रभायांऽअ

ग्नयेधम्ब्रध्नस्यंव्विष्टपांयाभिषेक्क्तारंव्वर्षिष्ठायनाकायपरिवेष्टा ॥८८॥

रन्देवलोकायंपेशितारम्मनुष्यलोकायंप्प्रकरितारर्ठसर्व्वैब्भ्यो

लोकेभ्यंऽउपसेक्तारमवंऽऋत्यैब्बधायोपमन्थितारम्मेधाय
व्वास[1]ःपल्पूलीम्प्रकामायंरजयित्रीम् ॥ १२ ॥ ऋतयेस्तेनहृ
दयम् ॥ ऋतयेस्तेनहृदयंव्वैरहत्यायपिशुनंव्विविक्त्यैक्ष
त्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्ने परिष्क
न्दम्प्रियायंप्रियवादिनमरिष्ट्याऽअश्वसादꣳस्वर्गायलोकाय
भागदुघंव्वर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्यवेयस्ता

---

१ वासः पल्पूलीम् । अत्र "समानपदे" (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन षकारे प्राप्ते "वाजपतिर्वासऽपृथिविषुरन्तःपर्शव्येनान्तःपार्श्व्यमिति च" (शु. य. प्रा. ३ अ. ३८ सू.) इति सूत्रेण वासशब्दघटितविसर्जनीयस्य षकारनिषेधः ।

शु. य. संहि. ॥८९॥

पम् ॥ मन्यवेयस्त्तापङ्क्रोधायनिसरँय्योगाययोक्त्तारꣳशोका

याभिसर्त्तारङ्क्षेमायविमोक्त्तारमुत्कूलनिकूलेब्भ्यस्त्रिष्ठिनंव

पुषेमानस्कृतꣳशीलायाञ्जनीकारीन्निर्ऋत्त्यैकोशकारीँय्यमा

यासूम् ॥ १४ ॥ यमायंयमसूम् ॥ यमायंयमसूमथर्व्व

ब्भ्योवतोकाꣳसंवत्त्सरायपर्य्यायिणीम्परिवत्त्सरायाविजाता

मिदावत्त्सरायातीत्त्वरीमिद्वत्त्सरायातिष्कद्वरीँव्वत्त्सरायवि

जर्ज्जराꣳसंवत्त्सरायपलिक्क्नीमृभुब्भ्योजिनसन्धꣳसाद्ध्येब्भ्य

उ. वि. अ. ॥ ३० ॥ ॥ ८९ ॥

ञ्चर्म्मम्नम् ॥ १५ ॥ सरोभ्यो धैवरम् ॥ सरोभ्यो धैवरमु

पस्त्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दन्नड्वलाभ्यः शौष्क

लम्पाराय मार्ग्गारमवाराय कैवर्त्तन्तीर्त्थेभ्यऽआन्दं विषमे

भ्यो मैनालᳪ स्वनेभ्यः पर्ण्णकङ्गुहाभ्यः किरातᳪ सानुभ्यो

जम्भकम्पर्व्वतेभ्यः किम्पूरुषम् ॥ १६ ॥ बीभत्सायै पौ

ल्कसम् ॥ बीभत्सायै पौल्कसं वर्ण्णाय हिरण्यकारन्तुला

१ चर्म्मम्नम् । अत्र "क्षपरेभ्यो॰" (शु.य.प्रा.३अ.८५सू.) इत्यनेन समानपदे प्राप्तस्य णत्वस्य "इन्द्राग्नी॰" (शु.य.प्रा.३अ.९३सू.) इत्यनेन निषेधान्न णत्वम् ।

शु. य. संहि. उ. वि. अ.

॥१०॥ यैव्वाणिजम्पंश्चादोषायंग्लाविनंव्विश्वैब्भ्योभूतेब्भ्यं॑ सिद्ध्म
लम्भूत्यैजागरणमभूत्यैस्वपनमात्त्यैजनवादिनंव्व्यृध्या अपग ॥३०॥
ल्भ्मठ॑ संठ॑ शरायंप्रच्छिदंम् ॥ १७ ॥ अक्षराजायंकित
वम् ॥ अक्षराजायंकितवङ्कृतायांदिनवदर्शन्त्रेतायैकल्प्पिनं
न्द्वापरायाधिकल्प्पिनंमास्कन्दायंसभास्त्थाणुम्मृत्त्यवेंगो
व्व्यच्छमन्तंकायगोघातङ्क्षुधेयोगांव्विकृन्तन्तम्भिक्क्षमाणऽउ ॥१०॥
पतिष्ठंतिदुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम् ॥१८॥ प्रति

श्रुत्त्कायाऽअर्त्तनम् ॥ प्रतिश्रुत्त्कायाऽअर्त्तनङ्घोषायभषम
न्तायबहुवादिनमनन्तायमूकꣳशब्दायाडम्बराघातम्[1]महसेवी
णावादङ्क्रोशायतूणवद्ध्ममवरस्प्पराय[2]शङ्खद्ध्मंवनायवनप
मन्यतोरण्ण्यायदावपम् ॥१९॥ नर्म्मायपुँश्चलूम् ॥ नर्म्मायपुँश्च
लूꣳहसायकारिंग्यादसेशाबल्ल्याङ्ग्रामण्ण्यङ्गणकमभिक्क्रोशं

---

१ आडम्बराघातम् । अत्र "त आघादनाडम्बरात्" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेनानाडम्बरात्परस्य विधानादाघातशब्दघटितस्य तकारस्य मूर्धन्यत्वं (टः) न भवति । २ अवरस्प्पराय । अत्र "प्रकृत्या कखयोः पफयोश्च" ( शु. य. प्रा. ३ अ. ११ सू. ) इति "अवरः" इत्यस्य विसर्गस्य प्रकृतिभावे प्राप्ते "ऋतावरी च पतिपरयोः" ( शु. य. प्रा. अ. ३ सू. ५० ) ऋतः अवरश्च शब्दौ सकारेण व्यवधीयेते यथासंख्यं पतिपरयोः । इत्यनेनात्रावरशब्दस्य विसर्गस्य परे पदपरे सत्वे जाते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन पकारस्य द्वित्वे रूपम् ।

य. शु. संहि. कुन्ताम्महसेवीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायान उ. वि.

॥९१॥ न्दायतलवम् ॥२०॥ अग्नयेपीवानम् ॥ अग्नयेपीवानम्पृथिव्यै अ.

पीठसर्प्पिणंव्वायवेचाण्डालमन्तरिक्षायवꣳशनर्त्तिनन्दिवेख ॥ ३० ॥

लतिꣳसूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः किर्म्मिरञ्चन्द्रमसेकिला

समहैशुक्लम्पिङ्गाक्षꣳरात्र्यैकृष्णम्पिङ्गाक्षम् ॥२१॥ अथै

तान् ॥ अथैतानष्टौव्विरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चाति ॥ ९१ ॥

---

१ अतिस्स्थूलम्। अत्र "नाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ क.) इत्यनेन समानपदे स्थूलस्य सस्य षकारे प्राप्ते "अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभिसस्वाऽभिसंविशन्तु सुसस्यातिस्थूलं०" (शु. य. प्रा. अ. ३ सू. ८२) इत्यनेन प्रकृतिभावे न षत्वम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इति थस्य द्वित्वे चर्त्वे तकारः।

स्त्थूलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चातिलोम
शञ्च ॥ अशूद्राऽअब्राह्मणास्त्तेप्प्राजापत्त्याः ॥ मागधः पुँश्च
लीकितवः क्लीबोशूद्राऽअब्राह्मणास्त्तेप्प्राजापत्त्याः ॥ २२॥
[ १६-२ ] इतिश्रीवाजसनेयसंहितायां त्रिंशत्तमोऽध्यायः
॥ ३० ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ सहस्र-
शीर्षा षोडश,ब्भ्यः संभृतः षट्, द्वौ द्वाविᳪशतिः [ अ. ३१
मं. २२ अनु. २ ]॥ हरिःॐ ॥ सहस्त्रशीर्षापुरुषः । सह
सं. ५५ ७३१०

शु. य. संहि. ॥ १२ ॥ उ. वि. अ. ॥ २१ ॥

स्त्राक्षःसहस्रंपात् ॥ सभूमिꣳसर्व्वतंस्पृत्त्वात्त्यतिष्ठद्दशाङ्गु
लम् ॥ १ ॥ पुरुषऽएव ॥ पुरुषएवेदꣳसर्व्वँय्यद्भूतँय्यच्चंभा
व्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एता
वाँनस्य । महिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यविश्वांभूता
निंत्रिपादंस्यामृतंन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वः ॥ त्रिपादूर्द्ध्वऽ
उदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्ष्वङ्व्यक्क्राम ॥ १२ ॥
त्साशनानशनेऽअभि ॥ ४ ॥ ततोविराड् ॥ ततोविराडजा

यतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्त्यरिच्च्यतपश्चाद्भूमि
मथोपुरः॥५॥ तस्म्माद्यज्ज्ञात्॥ तस्म्माद्यज्ज्ञात्त्सर्व्वहुतः सम्भृं
तम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्क्रे वायव्यानारण्याग्ग्राम्म्या
श्चये ॥६॥ तस्म्माद्यज्ज्ञात् ॥ तस्म्माद्यज्ज्ञात्त्सर्व्वहुतऽऋचः
सामानिजज्ज्ञिरे ॥ छन्दाꣳसिजज्ज्ञिरेतस्म्माद्यजुस्तस्म्माद
जायत ॥ ७ ॥ तस्म्मादश्वाः ॥ तस्म्मादश्वाऽअजायन्त
येकेचोभयादतः ॥ गावोहजज्ज्ञिरेतस्म्मात्तस्म्माज्जाताऽअ

जावयं॑ ॥ ८ ॥ तँय्युज्ञम् ॥ तँय्युज्ञम्बर्हिषिप्प्रौक्षुन्पुरुष
ञ्जातऽमंग्रुतः ॥ तेनंदेवाऽअंयजन्तसाध्याऽऋषयश्चुये ॥ ९ ॥
यत्पुरुषम् ॥ यत्पुरुषुंव्यदंधुःकतिधाव्यंकल्पयन् ॥ मुख
ङ्किमंस्यासीत्किम्बाहूकिमुरूपादांऽउच्यते ॥ १० ॥ ब्राह्म
णोस्य ॥ ब्राह्मणोस्यमुखंमासीद्बाहूराजन्यः॑कृतः ॥ ऊरू
तदंस्ययद्वैश्यः॑पुद्भ्याꣳशूद्रोऽअजायत ॥ ११ ॥ चन्द्रमा
मनंसः ॥ चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत ॥

श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽ
आसीत् ॥ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्त
त ॥ पद्भ्याम्भूमिर्दिशꣳश्रोत्रात्तथालोकाँ२॥ऽअकल्प्पयन्
॥ १३ ॥ यत्पुरुषेण । हविषादेवायज्ञमतन्वत ॥ वसन्तो
स्यासीदाज्यङ्ग्रीष्म्मऽइद्ध्मश्शरद्धविः ॥ १४ ॥ सप्प्तास्या
सन् ॥ सप्प्तास्यासन्परिधयस्त्रिःसप्प्तसमिधःकृताः ॥ देवा
यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥१५॥ यज्ञेनयज्ञ

शु. य. संहि. ॥ ९४ ॥ म् ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्या व. वि. अ. ॥ ३१ ॥
सन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः
॥ १६ ॥ [ १६-१ ] अद्भ्यःसम्भृतः । पृथिव्यैरसाच्चवि
श्वकर्म्मणःसमवर्त्तताग्ग्रे ॥ तस्यत्त्वष्टाविदधद्रूपमेतितन्म
र्त्त्यस्यदेवत्त्वमाजानमग्ग्रे ॥ १७ ॥ वेदाहम् ॥ वेदाहमेतम्पु ॥ ९४ ॥
रुषम्महान्तमादित्त्यवर्ण्णन्तमसः[1]परस्तात् ॥ तमेवविदित्त्वा

[1] तमसःपरस्तात् । अत्र "तमसोऽपरस्ताद्" ( शु. य. प्रा. ३ अ. २६ सू. ) इत्यनेन विधीयमानं सत्वं न भवति तत्रापरस्तादित्युक्तत्वात् ।

तिंमृत्युमेंतिनान्यःपन्थांविद्यतेयंनाय ॥ १८ ॥ प्रजापति
श्चरति ॥ प्रजापंतिश्चरतिगर्ब्भेंऽअन्तरजांयमानोवहुधाविजा
यते ॥ तस्ययोनिम्परिंपश्यन्तिधीरास्त्तास्मिंन्हतस्त्थुर्ब्भुवं
नानिविश्वां ॥१९॥ योदेवेब्भ्यं ॥ योदेवेब्भ्यंऽआतपंतियो
देवानांम्पुरोहिंतः ॥ पूर्वोंयोदेवेब्भ्योंजातोनमोरुचायब्राह्मंये
॥ २० ॥ रुचम्ब्राह्ममम् ॥ रुचम्ब्राह्मञ्जनयंन्तोदेवाऽअग्ग्रेत
दंब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यंदेवाऽअंसन्वशें ॥ २१ ॥

श्रीश्चं॥ श्रीश्चंतेलक्ष्मीश्चपत्न्यांवहोरात्रेपार्श्वेनक्षत्राणिरूप
मश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाणसर्वंलोकम्मंऽ
इषाण ॥ २२ ॥ [६-२]॥ इतिश्रीवाजसनेयसंहितायामे-
कत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनु-
वाकसूत्रम्॥ तदेव सप्त, वेनस्तन्नव, द्वौ षोडश [अ. ३२ मं.
१६ अनु. २]॥ हरिःॐ॥ तदेव ॥ तदेवाग्निस्तदादित्यस्त
द्वायुस्तदुचन्द्रमाः ॥ तदेवशुक्रन्तद्ब्रह्मताऽआपःसप्रजा

पतिं ॥१॥ सर्व्वेनिमेषाः ॥ सर्व्वेनिमेषाजज्ञिरेविद्युतःपुरुषा
दधि ॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्येपरिजग्रभत् ॥ २ ॥ नतस्य ।
प्रतिमाऽअस्तियस्यनाममहद्यशः ॥ हिरण्यगर्भऽइत्येष
मामाहिंसीदित्येषायस्मान्नजातऽइत्येषः ॥ ३ ॥ एषोह ।
देवःप्रदिशोनुसर्व्वाःपूर्व्वोहजातःसऽउगर्भेऽअन्तः ॥ सऽएव
जातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखः ॥४॥

१ हिरण्यगर्भऽसं॰ चत्वारि॰ ४ अ. २५ मंत्र १०।११।१२।१३। ॥ १ मामाहिंसीत्. १ अ. १२ मं. १०२ ॥ १ यस्मान्न. १ १ इंद्रश्च. १ अ. ८ मं. ३६ मं. ३७ ॥ इति प्रतीकानि ॥

यस्म्माज्जातम् ॥ यस्म्माज्जातन्नपुराकिञ्चनैवयऽआंबभूवभुवं
॥९६॥ नानिविश्श्वां ॥ प्रजापंतिंव्प्रजयांसᳬरराणस्त्रीणिज्ज्योतींᳬ ॥ ३२ ॥
षिसचतेसषोडशी ॥ ५ ॥ येनद्यौः ॥ येनद्यौरुग्ग्रापृथिवी
चेदृढायेनस्वःस्तभितँव्येननाकः ॥ योऽअन्तरिक्क्षेरजंसो
विमानंकस्म्मैदेवायंहविषांविधेम ॥ ६ ॥ यङ्क्रन्दंसी ॥
यङ्क्रन्दंसीऽअवंसातस्त्तभानेऽअभ्यैक्क्षेंताम्मनंसारेजंमाने ॥ ॥ ९६ ।
यत्राधिसूरऽउदितोविभातिकस्म्मैदेवायंहविषांविधेम ॥

आपोहयद्बृहतीर्यश्चिदापः ॥ ७॥ [७-१] वेनस्तत् ॥ वेन

स्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकनीडम्॥ तस्मिन्

निदꣳसञ्चविचैतिसर्वꣳसऽओतःप्रोतश्चविभूःप्रजासु ॥ ८॥

प्रतत् ॥ प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्वोधामविभृतङ्गुहासत् ॥

त्रीणिपदानिनिहितागुहास्ययस्तानिवेदसपितुःपितासत् ॥९॥

सनः ॥ सनोबन्धुर्जनितासविधाताधामानिवेदभुवनानि

१ आपोंद्र. १ यश्चित्. १ अ. २८ मं. २५ मं. २६ इति प्रतीके ॥

॥९७॥ विश्वा॑ ॥ यत्र॑दे॒वाऽअ॒मृत॑मानशा॒नास्तृ॒तीये॒धाम॑न्न॒ध्यैर॑यन्त

॥ १० ॥ परी॒त्त्य॑भू॒तानि॑ । परी॒त्त्य॑लो॒का॒न्परी॒त्त्य॒सर्वाः॒प्प्र॒दि

शो॒दिश॑श्च ॥ उ॒प॒स्था॒य॑प्प्र॒थ॒म॒जामृ॒तस्या॒त्म॒नात्म॑ान॒म

भिसंवि॑वेश ॥ ११ ॥ परि॒द्यावा॑पृथि॒वी । स॒द्यऽइ॒त्त्वाप॒रि॑लो

का॒न्परि॑दिश॒ः॒परि॒स्वः॑ ॥ ऋ॒तस्य॒तन्तुं॒वित॑तंवि॒चृत्त्य॒तद॑प॒श्य

त्तद॑भव॒त्तदा॑सीत् ॥ १२ ॥ सद॑स॒स्प्पति॑म् ॥ सद॑स॒स्प्पति ॥ ९७ ॥

मद्भु॑तम्प्रि॒यमिन्द्र॑स्य॒काम्म्य॑म् ॥ स॒निम्मे॒धाम॑यासिष॒ᳫ्स्वाहा॑

॥ १३ ॥ यांम्मेधाम् ॥ यांम्मेधान्देवगणाः पितरंश्चोपासंते ॥
तयामामद्यमेधयाग्नेमेधाविनंकुरुस्वाहा ॥ १४ ॥ मेधाम्मे ॥
मेधाम्मेव्वरुणोददातुमेधामग्निः प्प्रजापतिः ॥ मेधामिन्द्रश्च
व्वायुश्चमेधान्धातादंदातुमेस्वाहा ॥ १५ ॥ इदम्मे ॥ इदम्मे
ब्रह्मचक्क्षत्रञ्चोभेश्रियमश्नुताम् ॥ मयिदेवादधतुश्रियमुत्त
मान्तस्यैतेस्वाहा ॥ १६ ॥ [९-२] ॥ इतिश्रीवाजसनेय-
संहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥ श्रीवेदपुरुषाय नमः ॥

सं. ५६

अनुवाकसूत्रम्॥ अस्याजरासः सप्तदश, पश्चित् द्वादश, विभ्रा
ट् चतुर्दश, प्रवावृजऽएकादश, प्रवायुं पञ्चदश, प्रवीरया पञ्च
दश,ऽआनस्त्रयोदश, सप्त सप्तनवतिः [ अ. ३३ मं. ९७
अनु. ७ ]॥ हरिः ॐ॥ अस्याजरासः ॥ अस्याजरासोदमाम्
रित्राऽअर्चद्धूमासोऽअग्नयः पावकाः ॥ श्वितीचयः श्वात्रा
सोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ १ ॥ हरयोधूमके ॥ ९८ ॥

१ वनसदः इति पदम् । अत्र "वनसदोऽवेरो रेफेण" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेन सदशब्दे परे वनशब्दो रेफेण व्यवधीयते ।

तव३ ॥ हरेयोधुमकैतवोव्वातंजूताऽउपद्यवि ॥ यतंन्तेवृथग

ग्नयः ॥ २॥ यजानं३ ॥ यंजानोमित्रावरुणायजादेवाँ२॥ऽ

ऋतम्बृहत् ॥ अग्नेयक्षिस्वन्दमम् ॥ ३ ॥ सुक्स्वाहि। देव

हूतंमाँ२॥ऽअश्वाँ२॥ऽअग्नेरथीरिव॥ निहोतापूर्व्यःसदं३ ॥४॥

द्वेविरूपे । चरतःस्वर्थेऽअन्यान्याव्वत्समुपंधापयेते ॥

हरिरन्यस्याम्भवतिस्वधावाञ्छुक्रोऽअन्यस्यान्ददृशेसुवर्चाः३

१ यजानो । अत्र यजशब्दस्य ह्रस्वाकारस्य नः इति नकारे परे "धारयाव स्वेजाव" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारः । २ स्वधावाञ्छुकः । अत्र "शकारे च" ( शु. य. प्रा. ४ अ. १६ सू. ) इत्यनेन शकारे परे तवर्गश्चवर्गं प्राप्नोति । अतः शुकस्य शकारे परे स्वधावान् इत्यस्य नकारस्य ञकारः । ततः "परश्चाद्यस्पर्शपरश्छम्" ( शु. य. प्रा. ४ अ. १७ सू. ) इत्यनेन शकारस्य छकारे कृते "स्वधावाञ्छुक" इति ।

॥ ५ ॥ शतम् ॥ १७०० ॥ अयमिह । प्प्रथमोधायिधातृ
भिर्होतायजिष्ठोऽअद्ध्वरेष्ष्वीड्यः ॥ यमप्नवानोभृगवोविरुरु
चुर्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥ ६ ॥ त्रीणिशता । त्रीसहस्रा
ण्यग्निन्त्रिꣳशच्चदेवानवचासपर्य्यन् ॥ औक्षन्घृतैरस्तृणन्ब
र्हिरस्म्माऽआदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवः ॥
मूर्द्धानन्दिवोऽअरतिम्पृथिव्याव्वैश्वानरमृतऽआजातमग्निम् ॥ ॥ ११ ॥
कविꣳसम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥

अग्निर्वृत्राणि । जङ्घनद्द्रविणस्युर्विपन्यया ॥ समिद्धꣳशु
क्रऽआहुतꣳ ॥९॥ विश्वेभिꣳसोम्म्यम् ॥ विश्वेभिꣳसोम्म्यम्म
द्ध्वग्नऽइन्द्रेणवायुना ॥ पिबामित्रस्यधामभिꣳ ॥१०॥ आयत् ॥
आयदिषेनृपातिन्तेजऽआनट्शुचिरेतोनिषिक्तन्द्यौरभीके ॥
अग्निश्शर्द्धमनवद्यँय्युवानꣳस्वाद्ध्यञ्जनयत्सूदयँच्च ॥११॥
अग्नेशर्द्ध । महतेसौभगायतवद्युम्म्नान्युत्तमानिसन्तु ॥

१ पिबामित्रस्य । अत्र "द्व्युतरिषिधिभ्रिभवतपिबेतस्पमतिष्ठरक्षा मकारे" (शु. य. प्रा. ३ अ. ११७ क.) इत्यनेन मकारे बस्य दीर्घं पिबामित्रस्य ।

सञ्ज्ञास्प्पत्त्यꣳसुयमुमाकृणुष्ष्वशत्रूयतामुभितिष्ठामहाᳫंसि
॥१००॥ ॥ १२ ॥ त्त्वाᳫंहि । मुन्द्रतंममर्क्कशोकैर्व्ववृमहेमहिंनꣳश्रो ॥ ३३ ॥
ष्ष्यंग्ने ॥ इन्द्रन्नत्त्वाशवसादेवतांव्वायुम्पृणन्तिराधसान्नृतंमाꣳ
॥ १३ ॥ त्वेऽअंग्ने । स्वाहुतप्प्रियासंःसन्तुसूरयंः ॥ युन्ता
रोयेमुघवांनोजनांनामूर्व्वान्दयंन्तुगोनांम् ॥ १४ ॥ श्रुधिश्श्रु
त्त्कर्ण्ण ॥ श्रुधिश्श्रुंत्त्कर्ण्णव्वह्निभिर्द्देवैरंग्नेसयावंभिꣳ ॥ आसीं ॥ १०० ॥
दन्तुबर्हिषिंमित्रोऽअंर्य्यमाप्प्रांतर्य्यावाणोऽअद्ध्वरम् ॥ १५ ॥

व्विश्श्वेषामदितिः ॥ व्विश्श्वेषामदितिर्य्यज्ञियानांव्विश्श्वेषामति

थिर्म्मानुषाणाम् ॥ अग्ग्निर्द्देवानामवऽआवृणानःसुमृडीको

भवतुजातवेदाः ॥ १६ ॥ महोऽअग्ग्नेः । समिधानस्यश

र्म्मण्ण्यनागामित्त्रेव्वरुणेस्वस्त्तये ॥ श्रेष्ठेस्यामसवितुःसवीम

नितद्देवानामवोऽअद्द्याव्वृणीमहे ॥ १७ ॥ [ १७-१ ] आप

श्चित् ॥ आपश्श्चित्त्पिप्प्युस्तर्य्योनगावोनक्क्षन्नृतञ्जरितारस्त्तऽ

---

१ अद्या वृणीमहे। अत्र "अद्य तं हकारवकारभवतवृणीमहे देवेषु" (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन अद्य इत्यस्य वृणीमहे परे दीर्घ अद्यावृणीमहे अद्य शब्दस्य दकारस्य स्वरात्सं० इत्यनेन द्वित्वम्।

इन्द्र ॥ याहिवायुर्नुनियुतोंनोऽअच्छात्त्वँ हिधीभिर्दयसेवि
वाजान् ॥ १८ ॥ गावऽउप ॥ गावऽउपावतावुतम्मुहीयुज्ञ
स्यरुप्सुदा ॥ उभाकर्णाहिरण्ण्ययां ॥ १९ ॥ यदुद्य । सूरऽ
उदितेनांगामित्रोऽअर्य्युमा ॥ सुवातिंसविताभगः ॥ २० ॥
आसुतेसिञ्चतुश्रियुद्दरोदस्योरभिश्रियम् ॥ रसादधीतवृष
भम् ॥ तंम्प्रत्क्कथायंवेनः ॥ २१ ॥ आतिष्ठन्तुम्पारि ॥ आति ॥१०१॥

१ तम्प्रत्क्कथा. १ अ. ७ मं. १२ ॥ १ अयंवेनः. १ अ. ७ मं. १६ ॥ इति प्रतीके ॥

ष्ठन्तम्परिविश्वेऽअभूषच्छ्रियोव्वसानश्चरतिस्वरोचिः ॥ मुहत्त
द्वृष्णोऽअसुरस्यनामाव्विश्वरूपोऽअमृतानितस्थौ ॥ २२ ॥
प्रवः ॥ प्रवोमहेमन्दमानायान्धसोर्च्चा[1]व्विश्वा[2]नरायव्विश्वा[3]भुवे ॥
इन्द्रस्ययस्यसुमखᳪसहोमहिश्श्रवोनृम्णञ्चरोदसीसपर्य्यतः
॥ २३ ॥ बृहन्नित् ॥ बृहन्निदिध्मऽएषाम्भूरिशस्त्तम्पृथुः
स्वरुः ॥ येषामिन्द्रोयुवासखा ॥ २४ ॥ इन्द्रेहि ॥ इन्द्रेहि

१ अर्वांविश्वानराय । अत्र "अध्वरश्मिमतिसुमति०" (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन विश्वानराय इत्यस्य वकारे परे अर्वशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । २ विश्वानराय । अत्र "नरहामित्रेषु च" (शु. य. प्रा. ३ अ. १०३ सू.) इत्यनेन नरशब्दे परे विश्वशब्दाकारस्य दीर्घाकारो विधीयते । ३ विश्वाभुवे । अत्र "विश्व सहशुवसुनषसुपु" । (शु. य. प्रा. ३ अ. १०२ सू.) इत्यनेन भुवे परे विश्वशब्दाकारस्य दीर्घाकारः ।

मत्त्स्यन्धंसोव्विश्श्वौभिःंसोमपर्व्वभिः ॥ मुहाँ२॥ऽअभिष्टिरोज
॥१०२॥ सा ॥ २५ ॥ इन्द्रोव्वृत्रम् ॥ इन्द्रोव्वृत्रमंवृणोच्छर्द्धनीतिःंप्प्र ॥ ३३ ॥
मायिनाममिनाद्वर्प्पणीतिःं ॥ अहृन्व्यꣳसमुशधग्ग्वनेष्ष्वा
विर्द्धेनाऽअकृणोद्राम्म्याणाम् ॥ २६ ॥ कुतस्त्त्वम् ॥ कुतस्त्त्व
मिन्द्रमाहिनःंसन्नेकोयासिसत्त्पतेकिन्तंऽइत्था ॥ सम्पृच्छसे ॥१०२॥
समराणःशुभानैर्व्वोचेस्त्तन्नोहरिवोयत्तेऽअस्म्मे ॥ मुहाँ२॥ऽइ

१ मुहाँ२॥ऽइन्द्रोय. १ अ. ७ मं. ४० ॥ १ कुदाचुन. अ. ८ मं. २ ॥ १ कुदाचुनप्र. अ. ८ मं. ३ ॥ इति प्रतीकानि ॥

न्द्रोयऽओजंसाकुदाचुनस्तुरीरंसिकुदाचुनप्प्रयुंच्छसि ॥२७॥
आतत् ॥ आतत्तंऽइन्द्रायनं॑ःपनन्ताभियऽऊर्वंङ्गोमंन्तुन्ति
तृत्त्सान् ॥ सकृत्त्सुँ॑ग्येपुंरुपुत्राम्मही॑ᳫंसहस्त्रंधाराम्बृहतीन्दुं
दुक्षन् ॥२८॥ इमान्तैं ॥ इमान्तोंधियम्प्रभंरेमहोमहीमस्य
स्तोत्रेधिषणायत्तंऽआनजे ॥ तमुंत्सवेचंप्प्रसवेचंसासहिमि
न्द्रंन्देवासःशवंसामदुन्ननु॑ ॥२९॥ [ १२-२ ] त्रिकं्राङ्हत् ॥

१ "दुदुक्षन्" । अत्र दुधुक्षन् इति पदम् । "दुधुक्षन्धो दकारम्" (शु. य. प्रा. ३ अ. ५५ सू.) इत्यनेन दुधुक्षन् शब्दघटितस्य धकारस्य दकारः ।

व्विभ्राड्बृहत्त्पिबतुसोम्म्यम्म्मद्ध्वायुर्द्दधद्यज्ज्ञपंतावविंहुतम् ॥
व्वातंजूतोयोऽअंभिरक्क्षंतित्त्मनांप्प्रजाःपुंपोषपुरुधाव्विराज
ति ॥३०॥ उदुत्त्यम् ॥ उदुत्त्यञ्ज्जातवेदसन्देवंव्वहन्तिकेतवं÷ ॥
दृशेव्विश्श्वांयसूर्य्यम् ॥ ३१ ॥ येनांपावक ॥ येनांपावकचक्क्ष
साभुरण्यन्तञ्जनाँ२॥ऽअनुं ॥ त्वंव्वरुणपश्श्यंसि ॥३२॥ दैव्व्यां
वद्ध्वर्य्यू ॥ दैव्व्यांवद्ध्वर्य्यूऽआगंतꣳरथेनसूर्य्यंत्त्वचा ॥ मद्ध्वां
यज्ज्ञꣳसमंञ्जाथे ॥ तम्प्रत्त्कथायंव्वेनाश्श्चित्रन्देवानांम् ॥ ३३ ॥

१ तंप्रत्नथा. १ अ. ७ मं. १२ ॥ १ अयंवेनश्चो० १ अ. ७ मं. १६ ॥ १ चित्रंदेवानाम्. १ अ. १३ मं. ४६ ॥ इति प्रतीकानि ॥

आनं÷ ॥ आनऽइडाभिर्व्विदथेसुशस्ति विश्श्वानरः सविता देवऽ
एतु ॥ अपियथायुवानोमत्सथानो विश्श्वञ्जगदभिपित्वेमनी
षा ॥ ३४ ॥ यदद्य । कच्चवृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्व
न्तदिन्द्रतेवशे ॥ ३५ ॥ तरणिर्व्विश्श्वदर्शतः ॥ तरणिर्व्विश्श्वदर्श
तोज्ज्योतिष्कृदसिसूर्य्य ॥ विश्श्वमाभासिरोचनम् ॥ ३६ ॥ तत्सू
र्य्यस्य । देवत्त्वन्तन्महित्त्वम्मद्ध्याकर्त्तोर्व्विततःसञ्जभार ॥

१ मत्सथ नः इति पदम् । अत्र मत्सथ इत्यस्य थकारस्य ह्रस्वाकारस्य नः इति नकारे परे "धारयाम०" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घाकारे मत्सथानः ।

सं. ५७

यदेदयुक्क्तहरितः सधस्त्थादाद्द्रात्त्रीव्वासंस्त्तनुतेसिमस्म्मै
॥१०४॥ ॥ ३७॥ तन्मित्त्रस्य ॥ तन्मित्रस्यव्वरुणस्याभिचक्क्षेसूर्य्यौरू ॥ २२ ॥
पङ्कृणुतेद्योरुपस्त्थे ॥ अनन्तमन्न्यद्द्रुशदस्यपाजः कृष्णमन्न्य
द्धरितः सम्भरन्ति ॥ ३८ ॥ बण्णमहान्[1] ॥ बण्णमहाँ २॥ऽअसि
सूर्य्यबडादित्त्यमहाँ २॥ऽअसि ॥ महस्त्तेसतोमहिमापनस्य
तेद्धादेवमहाँ २॥ऽअसि ॥ ३९ ॥ बट्सूर्य्य ॥ बट्सूर्य्यश्श्रवसा ॥ १०४ ॥

१ अत्र बण्महान् । "पञ्चमे पञ्चमम्" (शु. य. प्रा. ४ अ. १२१ सू.) इत्यनेन पञ्चमे स्पर्शे परे अपञ्चमः स्पर्शः पञ्चमो भवति । इति टस्य णकारे द्वित्वे च रूपम् ।

महाँ२॥ऽअंसिसत्रादेवमहाँ२॥ऽअंसि ॥ मह्नादेवानामसुर्य्यः
पुरोहितोविभुज्योतिरदाभ्यम् ॥४०॥ श्रायन्तऽइवसूर्य्यम् ॥
श्रायन्तऽइवसूर्य्यंविश्वेदिन्द्रस्यभक्षत ॥ वसूनिजातेजनमा
नऽओजसाप्रतिभागन्नदीधिम ॥४१॥ अद्यादेवाः ॥ अद्यादे
वाऽउदितासूर्य्यस्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रो
वरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥४२॥

१ अद्यदेवाः । अत्र "अद्य तं हकारचकारभवत वृणीमहे देवेषु" (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन देवाः इति परे दीर्घे अद्यादेवाः । २ पिपृत निरवद्यात् इति पदम् । अत्र तकाराकारस्य निषंदितवकारे परे "धारयामः०" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घे पिपृतानिरवद्यात् ।

आकृष्णेनं ॥ आकृष्णेनरजंसाव्वर्त्तमानोनिवेशयन्नमृतम्म
र्त्यैञ्च ॥ हिरण्ययेनसवितारथेनादेवोयांतिभुवंनानिपश्श्यं
न ॥ ४३ ॥ [ १४-३ ] प्रेवांवृजे[1] सुप्प्रयाबर्हिरेषामावि
श्प्पतीवबीरिटऽइयाते ॥ व्विशामक्क्तोरुषसंः पूर्व्वहूंतौव्वायुः
पूषास्वस्त्तयेंनियुत्त्वांन् ॥ ४४ ॥ इन्द्रवायूबृहस्प्पतिंम ॥
इन्द्रवायूबृहस्प्पतिंम्मित्त्राग्ग्निम्पूषणम्भगंम् ॥ आदित्त्या ॥ १०५ ॥

१ प्रवबृजे इति पदम् । अत्र "वव्रृधवृजोः" ( शु. य. प्रा. ३ अ. ११४ सू. ) इत्यनेन वृजे परे वेत्यस्य ह्रस्वाकारस्य दीर्घाकारे प्रवावृजे ।

न्मारुतङ्गणम् ॥ ४५ ॥ व्वरुणँप्प्राविता । भुंवन्मित्त्रोव्वि
श्वाभिरूतिभिंः ॥ करंताव्रँसुराधंसँ ॥ ४६ ॥ अधि
नँ ॥ अधिनऽइन्द्रैषांव्विष्णणोंसजात्त्यांनाम् ॥ [1]ईतामरुतोऽ
अश्विना ॥ [2]तम्प्रत्क्कथायंव्वेनोयेदेवासऽआनऽइडाभिर्व्विश्वेभिँ
सोम्म्यम्मद्धोमासश्चर्षणीधृतँ ॥४७॥ अग्नऽइन्द्र ॥ अग्नऽ
इन्द्रव्वरुणमित्रदेवाँशर्द्धँप्प्रयन्तमारुतोतव्विष्णणो ॥ उभा

१ इतमरुतः । अत्र "शृणुतत्विविभ्रजिभवतपिबेतस्मतिष्ठरक्षा मकारे" (शु. य. प्रा. अ. ३ सू. ११७) इत्यनेन मकारे परे दीर्घे ईतामरुतः ।
२ तंप्रत्नथ्था. अ. ७ मं. १२ ॥ १ अयंव्वेनः अ. ७ मं. १६ ॥ १ येदेवासः. अ. ७ मं. १९ ॥ १ आनऽइडाभिः. अ. ३३ मं. ३४ ॥ १ विश्वेभिँ
सोम्म्यम्. अ. ३३ मं. १० ॥ १ ओमासश्चर्षणीधृतः. अ. ७ मं. ३३ ॥ इति प्रतीकानि ॥

शु. य. संहि.

॥१०६॥ नासंत्त्यारुद्रोऽअंधग्ग्नाःपूषाभगꣳसरंस्वतीजुषन्त ॥ ४८ ॥ उ. वि.

इन्द्राग्ग्नीमित्रावरुंणा ॥ इन्द्राग्ग्नीमित्रावरुणादितिꣳस्वः अ.

पृथिवीन्द्याम्मरुतꣳपर्व्वताँ२॥ऽअपः ॥ हुवेव्विष्णुम्पूषणम्ब्रह्म ॥ ३३ ॥

णस्पतिम्भगन्नुशꣳसꣳसवितारंमूतये ॥४९॥ अस्म्मेरुद्राः ॥

अस्म्मेरुद्रामेहनापर्व्वतासोव्वृत्रहत्त्येभरंहूतौसजोषाꣳ ॥ यꣳ

शꣳसंतेस्त्तुवतेधायिपज्ज्रऽइन्द्रंज्ज्येष्ठाऽअस्म्माँ२॥ऽअंवन्तुदे ॥ १०६ ।

वाः ॥५०॥ अर्व्वाञ्चोऽअद्य ॥ अर्व्वाञ्चोऽअद्याभंवतायजत्राऽ

---

१ अद्य भवत । अत्र "अद्य तं इकारयकारभवतवृणीमहे देवेषु" ( शु. य. प्रा. अ. ३ सू. ११५ ) इत्यनेन भवतपरे दीर्घे अद्याभव इति ।

आवोहार्द्दिभयमानोव्ययेयम् ॥ त्राद्ध्वन्नोदेवानिजुरोवृकस्य
त्राद्ध्वङ्कर्त्तादवपदोयजत्राः ॥ ५१ ॥ विश्वेऽअद्य । मरुतोवि
श्वऽऊतीविश्वेभवन्त्वग्नयःसमिद्धाः ॥ विश्वेनोदेवाऽअवसा
गमन्तुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥ ५२ ॥ विश्वेदेवाः ।
शृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजि
ह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयद्ध्वम् ॥ ५३ ॥

२ उपद्यविष्ठ । "षवेश्च" (शु. य. प्रा. अ. ३ सू. ५९) इत्यनेन षविशब्दात्परस्य स्थवर्दितसकारस्य षत्वे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. अ. ४ सू. १०२) इत्यनेन ठकारस्य द्वित्वम् ।

७६१

 

देवेभ्यो॒हि । प्र॒थ॒मँय्य॒ज्ञियेभ्यो॒मृत॒त्त्वꣳसु॒व॒सि॒भा॒ग॒मु॒त्त
॥१०७॥ म॒म् ॥ आदि॒द्दा॒मा॒नꣳस॒वि॒त॒र्व्यूर्ण॒षे॒नू॒ची॒ना॒जी॒वि॒ता॒मा॒नु॒षे 
भ्यꣳ ॥ ५४ ॥ [ ११-४ ] प्रवा॒युम् ॥ प्रवा॒युम॒च्छा॒बृ॒ह॒ती ॥ ३३ ।
मं॒नी॒षा॒बृ॒हद्र॑यिं॒वि॒श्ववा॑रꣳ॒र॒थ॒प्रा॒म् ॥ द्यु॒तद्या॑मा॒नि॒यु॒तꣳप॒त्त्यं
मा॒नꣳक॒वि॒श्क॒वि॒मि॒य॒क्ष॒सि॒प्र॒य॒ज्यो ॥५५॥ इन्द्र॑वा॒यू॒ऽइ॒मे ।
सु॒ता॒ऽउप॒प्र॒यो॒भि॒रा॒ग॒तम् ॥ इन्द॑वो॒वा॒मु॒श॒न्ति॒हि ॥ ५६ ॥ ॥ १०७
मि॒त्रꣳहु॒वे । पू॒तद॑क्षं॒व॒रु॑ण॒ञ्च॒रि॒शा॒द॑सम् ॥ धि॒यं॒घृ॒ता॒ची॒ꣳसा

धन्ता ॥५७॥ दस्राँयुवाकवः । सुतानासत्त्याव्वृक्तवर्हिषः ॥
आयांतᳬरुद्रवर्त्तनी ॥ तम्प्रत्क्कथायंव्वेनः ॥५८॥ व्विदद्यदीं ॥
व्विदद्यदींसरमारुग्णमद्रेर्म्महिपाथःपूर्व्यᳬसद्ध्र्यक्कः ॥
अग्ग्रंन्नयत्त्सुपद्यक्क्षंराणामच्छारवम्प्रथमाजानतीगात् ॥५९॥
नहिस्प्पशंम् ॥ नहिस्प्पशमविदन्नन्न्यमस्म्माद्वैश्वानरात्त्पुरऽ
एतारमग्ग्नेः ॥ एमैनमवृधन्नमृताऽअमर्त्त्यंव्वैश्वानरङ्क्षैत्त्रंजि

१ तंप्रत्क्कथा. अ. ७ मं. १२ ॥ १ अयंव्वेनः. अ. ७ मं. १६ ॥ इति प्रतीके ॥

 त्त्यायदेवाः ॥ ६० ॥ उग्राविघनिना ॥ उग्राविघनिनामृधऽ 

॥१०८॥ इन्द्राग्नीहवामहे ॥ तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मै । ॥ ३३ ।
गायतानरःपवमानायेन्दवे ॥ अभिदेवाँ२॥ऽइयक्षते ॥ ६२ ॥
येत्त्वा ॥ हिहत्त्यैमघवन्नवर्द्धन्त्येशाम्बरेहरिवोयेगविष्ठौ ॥ येत्त्वा
नूनमनुमदन्तिविप्प्राःपिबेन्द्रसोमःसगणोमरुद्भिः ॥ ६३ ॥
जनिष्ठाऽउग्ग्रः । सहसेतुराय [illegible] मन्द्रऽओजिष्ठोबहुलाभि ॥ १०८ ॥

१ गायत नरः इति पदम् । तकारोत्तरवर्तिनो ह्रस्वाकारस्य नकारे परे "धारयाम॰" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घे गायतानरः इति ।

मानं ॥ अवर्द्धन्निन्द्रम्मरुतश्चिदत्रमाता यद्वीरन्दधनद्धनिष्ठा ॥ ६४ ॥ आतु ॥ आतून इन्द्र वृत्रहन्नस्माकमर्द्धमागहि ॥ महान्महीभिरूतिभिः ॥ ६५ ॥ त्वमिन्द्र ॥ त्वमिन्द्रप्प्र तूर्त्तिष्वभि विश्वा असि स्पृधः ॥ अशस्तिहा जनिता विश्व तूरसि त्वन्तूर्य्य तरुष्यतः ॥ ६६ ॥ अनुते ॥ अनुते शुष्मन्तुरयन्तमीयतुः क्षोणी शिशुन्न मातरा ॥ विश्वास्ते स्पृधः श्न

1 आतु न इन्द्रः इति पदम्। तुकारोत्तरवर्तिनो ह्रस्वोकारस्य "धारय'म" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन नकारे परे दीर्घे आतून इन्द्र इति ।

थयन्तमन्यवेवृत्रँय्यदिन्द्रतूर्वसि ॥ ६७॥ यज्ञोदेवानाम् ॥
यज्ञोदेवानाम्प्रत्त्यैतिसुम्नमादित्त्यासोभवतामृडयन्तः ॥
आवोर्वाचीसुमतिर्वृवृत्त्यादᳬहोश्चिद्याव्वेरिवोवित्तरासत्॥६८॥
अदब्धेभिᳬसवितᳬ । पायुभिष्ट्वᳬशिवेभिरद्यपरिपाहिनोग
यम् ॥ हिरण्ण्यजिह्वᳬसुवितायनव्यसेरक्षामाकिन्नोऽअघशᳬ
सऽईशत ॥ ६९ ॥ [ १५-५ ] प्रवीरया । शुचयोदद्रिरेवाम

१ पायुभिः त्वम् । इति पदम् । अत्र "भातृभिरर्चिर्भिः पायुभिर्वरूत्रीः" (शु. य. प्रा. ३ अ. ७९ सू.) इत्यनेन एकाक्षरे पदे परे पायुभिः इत्यस्य विसर्गस्य षत्वे "षात्तथौ मूर्धन्यम्" (शु. य. प्रा. ३ अ. ८० सू.) तस्य टकारे "ऊष्मान्तस्थान्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू.) इति टस्य द्वित्वम् ।

द्रथ्युंभिर्म्मधुंमन्तꣳसुतासंः ॥ व्वहंव्वायोनियुतोंयाह्यच्छापि
बांसुतस्यान्धंसोमदांय ॥ ७० ॥ गावऽउपं ॥ गावऽउपांवता
वतम्महीयुज्ञस्यंरप्सुदां ॥ उभाकर्णौहिरण्ययां ॥ ७१ ॥
काव्ययोराजानेषु ॥ काव्ययोराजानेषुक्रत्वादक्षंस्यदुरोणे ॥
रिशादंसासधस्त्थऽआ ॥ ७२ ॥ दैव्यांवद्ध्वर्यू ॥ दैव्यांवद्ध्व
र्यूऽआगंतꣳरथैनसूर्य्यत्त्वचा ॥ मद्ध्वांयुज्ञꣳसमंञ्ञाथे ॥ तं

सं. ५८ १ तंप्रत्क्रथा. १ अ. ७ मं. १२ ॥ अयंवेनः. १ अ. ७ मं. १६ ॥ इति प्रतीके ॥

म्प्रत्कथायंव्वेनः ॥ ७३ ॥ तिरश्चीनोव्विततꣳ ॥ तिरश्चीनो व. वि.
व्विततोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् ॥ रेतो अ.
धाऽआसन्महिमानंऽआसन्त्स्वधाऽअवस्तात्प्रयंतिꣳपरस्ता ॥ २२ ॥
त् ॥ ७४ ॥ आरोदंसी ॥ आरोदंसीऽअपृणदास्वर्म्महज्जा
तँय्यदेनमपसोऽअधारयन् ॥ सोऽअध्वरायपरिणीयतेकविर
त्योनवाजसातयेचनोहितः ॥ ७५ ॥ उक्त्थेभिर्व्वृत्रहन्तमा ॥ ॥ ११० ॥
उक्त्थेभिर्व्वृत्रहन्तमायामन्दानाचिदागिरा ॥ आङ्गूषैराविवा

सतः ॥ ७६ ॥ उप॑नः । सु॒नवो॒गिरः॑शृ॒ण्वन्त्व॒मृत॑स्य॒ये ॥
सु॒मृ॒डी॒काभ॑वन्तु॒नः ॥ ७७ ॥ ब्रह्मा॑णि॒मे॒ । म॒तय॒ःशᳫसु॒ता
सु॒ःशु॒ष्म॑ऽइयर्त्ति॒प्रभृ॑तोमे॒ऽअद्रिः॑ ॥ आ॒शा॑सते॒प्रति॑हर्य्य
न्त्यु॒क्थेमाहरी॑वहत॒स्त्तानो॒ऽअच्छ॑ ॥ ७८ ॥ अनु॑त्त॒मा॒ते॑ ।
म॒घव॒न्नकि॒र्नुन॒त्त्वावा॑ँ२॥ऽअस्त्ति॒दे॒वता॒विदा॑नः ॥ नजाय॑मा
नो॒नश॑ते॒नजा॒तो॒यानि॒करि॒ष्याकृ॑णु॒हि॒प्प्र॑वृद्ध ॥७९॥ तदि॑त् ॥
तदि॒दा॒सभु॑वनेषु॒ज्ज्येष्ठ॒ँय्य॒तो॑ज॒ज्ञऽउ॒ग्रस्त्वे॒षनृ॑म्णः॥ सद्यो

७६९ ४९

शु. य. संहि. जञ्ज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः ॥८०॥ इमाऽ उ. वि. अ.

उत्त्वा । पुरूवसोगिरोवर्द्धन्तुयाममं ॥ पावकवर्ण्णाःशुचयो

॥१११॥ विपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥ यस्यायम् ॥ यस्यायंवि ॥ ३३ ॥

श्वऽआर्य्योदासःशेवधिपाऽअरिः ॥ तिरश्चिदर्य्येरुशमेपवी

रवितुभ्येत्सोऽअज्यतेरयिः ॥८२॥ अयꣳसहस्रम् ॥ अयꣳ

सहस्रमृषिभिःसहस्कृतःसमुद्रऽइवपप्प्रथे ॥ सत्त्यःसोऽअस्य

महिमागृणेशवोयज्ञेषुविप्प्रराज्ये ॥ ८३ ॥ अदब्धेभिःसवि ॥ १११ ॥

१ पुरूवसः । अत्र "अधरश्मिमनसुमति" ( शु. य. प्रा. ३ अ. ९८ सू. ) इत्यनेन वसः इत्यस्य वकारे परे पुरुशब्दस्य ह्रस्वोकारस्य दीर्घोकारः ।

तः । पायुभिष्ट्वᳬशिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्यजि
ह्वःसुवितायनव्यंसेरक्षामाकिर्नोऽअघशᳬसऽईशत ॥ ८४ ॥
[ १५-६ ] आनः ॥ आनोयज्ञन्दिविस्पृशंवायोयाहिसुम
न्मभिः ॥ अन्तःपवित्रऽउपरिश्रीणानोयᳬशुक्रोऽअयामि
ते ॥ ८५ ॥ इन्द्रवायूसुसन्दृशा । सुहवेहहवामहे ॥ यथानः
सर्वऽइज्जनोनमीवःसङ्गमेसुमनाऽअसत् ॥ ८६ ॥ ऋधगित्था ।
समर्त्यःशशमेदेवतातये ॥ योनूनम्मित्रावरुणावभिष्टयऽ

शु. य. संहि. ॥११२॥ आचक्क्रेहृव्व्यदातये ॥ ८७॥ आयांतम् ॥ आयांतमुपंभूषत उ. वि. अ.
म्मद्ध्वः पिबतमाश्विना ॥ दुग्ग्धम्पयोवृषणाजेन्न्यावसूमानोम ॥ ३३ ॥
र्द्धिष्टमागंतम् ॥८८॥ प्रैतु ॥ प्रैतुब्रह्मणस्प्पतिःप्प्रदेव्व्येतुसून्
ता ॥ अच्छांव्वीरन्नर्य्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥८९॥
चन्द्रमाऽअप्प्सु ॥ चन्द्रमाऽअप्प्स्वन्तरासुपर्ण्णोधावतेदिवि ॥
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहहरिरेतिकनिक्क्रदत् ॥९०॥ देव ॥ ११२ ।
न्देवंव्वः ॥ देवन्देवंव्वोवसेदेवन्देवमभिष्टये ॥ देवन्देवꣳहुवेम

वाजंसातयेगृणन्तोंदेव्याधिया ॥ ९१ ॥ दिविपृष्टः ॥ दिवि
पृष्ठोऽअंरोचताग्निर्वैश्वानरोबृहन् ॥ क्ष्मयांवृधानऽओजंसा
चनोंहितोज्योतिंषाबाधतेतमः ॥ ९२ ॥ इन्द्राग्नीऽअपा
त् ॥ इन्द्राग्नीऽअपादियम्पूर्व्वागात्पद्वतींभ्यः ॥ हित्वीशि
रोंजिह्वयावावंदुच्चरंत्त्रिंᳬशत्पदान्यंक्कमीत् ॥ ९३ ॥ देवासो
हि[1] । ष्म्मामनंवेसमंन्यवोविश्वेसाकᳬसरांतयः ॥ तेनोंऽ

१ हिष्ममनवे इति पदम् । अत्र "ऋणुतत्विविभ्रजिभवतपिवेतस्मतिष्ठरक्षा मकारे" ( शु. य. प्रा ३ अ. ११७ सू. ) इत्यनेन मकारे स्म इत्यस्याकारस्य दीर्घाकारे विधीयमाने हिष्मामनवे । अत्र मस्य द्वित्वं "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ( शु. य. प्रा. ३ अ. १०२ सू. ) इत्यनेन ज्ञेयम् ।

॥११३॥ अद्यतेऽअपरन्तुचेतुनोभवन्तुवरिवोविदः ॥ ९४ ॥ अपाध

मत् ॥ अपाधमदभिशस्तीरशस्तिहाथेन्द्रोद्युम्न्याभवत् ॥ ॥ ३३ ॥

देवास्तऽइन्द्रसख्यायंयेमिरेबृहद्भानोमरुद्गण ॥ ९५ ॥

प्रवः ॥ प्रवऽइन्द्रायबृहतेमरुतोब्रह्मार्चत ॥ वृत्रꣳहनतिवृत्र

हाशतक्रतुर्वज्रेणशतपर्वणा ॥ ९६ ॥ अस्येत् ॥ अस्येदि

न्द्रोवावृधेवृष्ण्यꣳशवोमदेसुतस्यविष्णवि ॥ अयातमस्यम ॥ ११३ ॥

१ अयात तस्य इति पदम् । "अय मं हकारात्वकारभवतवृणीमहे देवेषु" (शु. य. प्रा. ३ अ. ११५ सू.) इत्यनेन ह्रस्वतकारे परे अयाकारस्य दीर्घ अयातमस्य इति ।

हिमानंस्मायवोनुष्टुंवन्तिपूर्व्वथां ॥ इमाऽउंत्त्वायस्यायमयङ्ग्
सहस्त्रंमूर्द्धऽऊपुणं॑ ॥ ९७ ॥ [१३-८] इतिश्रीवाजसनेय-
संहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ यज्जाग्रतो दश, पञ्चनद्यो दश, सोमोधेनु
न्दश, ऽआकृष्णेन दश, पूषन्तव दश, नतदष्टौ, षडष्टपञ्चा-

१ अनुष्टुवन्ति । अत्र "अनोः स्तुवन्त्याम्" (शु. य. प्रा. ३ अ. ७२ सू.) इत्यनेन अनोरुपसर्गात्परस्य स्तुवन्तिपदे परे नद्धटितसकारस्य षकारः । तत्र "ऊष्मान्तस्थाभ्यश्च स्पर्शाः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन हकारस्य द्वित्वम् । २ इमाऽउत्त्वा. अ. ३३ मं. ८१ ॥ ३ यस्यायम्. मं. ८२ ॥ ३ अयङ्सहस्रम्. मं. ८३ ॥ ३ ऊर्द्ध्वऽऊषु णः अ. ११ मं. ४२ ॥ इति प्रतीकानि ॥

शत् [अ. ३४ मं. ५८ अनु. ६] ॥ हरिःॐ ॥ यज्जाग्ग्रं
तं ॥ यज्जाग्ग्रंतोदूरमुदैतिदैवन्तदुंसुप्तस्यतथैवैति ॥ दुरङ्गम
ञ्ज्योतिंषाञ्ज्योतिरेकन्तन्मेमनंःशिवसंङ्कल्पमस्तु ॥ १ ॥
येनकर्म्माणि ॥ येनकर्म्माण्ण्यपसोमनीषिणोयज्ञेकृण्ण्वन्ति
विदथेषुधीरांः ॥ यदंपूर्वंय्यक्षमन्तःप्रजानान्तन्मेमनंः
शिवसंङ्कल्पमस्तु ॥ २ ॥ यत्प्रज्ञानंम् ॥ यत्प्रज्ञानंमुत
चेतोधृतिंश्चयज्ज्योतिरन्तरमृतंम्प्रजासुं ॥ यस्म्मान्नऽऋतेकि

ञ्चनकर्म्मक्क्रियतेतन्मेमनः शिवसङ्कल्प्पमस्तु ॥ ३ ॥ येने
दम् ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥
येनयज्ञस्त्तायतेसप्तहोतातन्मेमनः शिवसङ्कल्प्पमस्तु ॥ ४ ॥
यस्मिन्नृचः ॥ यस्मिन्नृचः सामयजूंषियस्मिन्प्रति
ष्ठितारथनाभाविवाराः ॥ यस्मिंश्चित्तꣳ सर्व्वमोतम्प्रजाना
न्तन्मेमनः शिवसङ्कल्प्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव ॥
सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्व्वाजिनऽइव ॥

शु. य. संहि. हृत्प्रतिष्ठुंयदजिरञ्जविष्ठुन्तन्मेमनः शिवसङ्कल्पमस्तु ॥६॥ उ. वि.
पितुन्नु । स्तोषम्महोधम्र्माणन्तविषीम् ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ ७ ॥ अन्वित् ॥ अन्विदनुमते
त्वम्मन्यासैशन्नश्कृधि ॥ क्रत्वेदक्षायनोहिनुप्रणऽआयूᳬषितारिषः ॥ ८ ॥ शतम् ॥ १८०० ॥ अनुनः ॥ अनु
नोद्यानुमतिर्य्यज्ञन्देवेषुमन्यताम् ॥ अग्निश्चहव्यवाहनोभवंतन्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथुष्टुके ॥ सिनीवालिपृथु
॥११५॥ अ. ॥ २४ ॥ ॥ ११५ ॥

ष्टुकेयादेवानामासिस्वसा ॥ जुषस्वंहुव्यमाहुंतम्प्रजान्देविदि
दिड्ढिनः ॥ १० ॥ [१-१] पञ्चंनद्यः ॥ पञ्चंनद्यःसरंस्वती
मपियन्तिसस्त्रोतसः ॥ सरंस्वतीतुपंञ्चधासोदेशेभंवत्सरित्
॥ ११ ॥ त्वमंग्ने । प्प्रथमोऽअङ्गिराऽऋषिर्देवोदेवानांमभवः
शिवःसखां ॥ तवंव्रतेकवयोंविद्मनापसोजांयन्तमरुतोभ्राऽ
जंदृष्टयः ॥ १२ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेतवंदेवपायुभिर्म्म
घोनोंरक्षतन्वश्चवन्द्य ॥ त्राताकस्यतनंयेगवांमस्यानिंमेषह

सं. ५९ ७७९

रक्षमाणस्त्तवंव्व्रते ॥ १३ ॥ उत्तानायामवं । भराचिकित्त्वा
॥११६॥ सद्यःप्प्रवीताव्वृषणञ्जजान ॥ अरुषस्त्तूपोरुशंदस्यपाजऽइडां ॥ २४ ॥
यास्प्पुत्रोव्वयुनेंजनिष्ट ॥ १४ ॥ इडायास्त्त्वा । पदेव्वयन्ना
भांपृथिव्व्याऽअधिं ॥ जातवेदोनिधीमह्यग्नेहव्व्यायव्वोढवे
॥ १५ ॥ प्रमंन्महे । शवसानायंशूषमाङ्गूषाङ्गिर्व्वणसेऽअङ्गिर
स्वत् ॥ सुवृक्तिभिस्त्तुवतऽऋग्ग्मियायार्च्चामार्क्कन्नरेव्विश्रुंता ॥ ११६ ॥
य ॥ १६ ॥ प्रवं ॥ प्रवोमहेमहिनमोभरद्ध्वमाङ्गूष्यꣳशव

सानायसाम ॥ येनानःपूर्वेपितरःपदज्ञाऽअर्चन्तोऽअङ्गिर

सोगाऽअविन्दन् ॥ १७ ॥ इच्छन्तित्त्वा । सोम्म्यासःसखायः

सुन्वन्तिसोमन्दधतिप्रयांᳬसि ॥ तितिक्क्षन्तेऽअभिशस्त्ति

ञ्जनानामिन्द्रत्त्वदाकश्चनहिप्प्रकेतः ॥ १८ ॥ नते । दूरेपर

माचिद्रजाᳬस्यातुप्प्रयाहिहरिवोहरिब्भ्याम् ॥ स्थिरायवृ

ष्णेसवनाकृतेमायुक्क्ताग्ग्रावाणःसमिधानेऽअग्ग्नौ ॥ १९ ॥

---

१ येन नः इति पदम् । अत्र येनेत्यस्य नकाराकारस्य नः पदे परे "धारयामयोजावसचस्नुदमोवुजयतोस्वरक्षयजयच्छमस्सथपिपृतगायतातुयेन नकारे" ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारे जाते येनानः इति पदम् ।

७८१

अषांढँय्युत्त्सु । पृत॑नासुपप्प्रि॑ठंस्व॒र्षाम॒प्प्सांवृ॒जनं॑स्यगो॒पाम् ॥
भ॒रेषु॒जाठंसु॑क्षि॒तिᳬं सु॒श्श्रव॑सञ्ज॒यन्त॒न्त्वामनु॑मदेमसोम ।२०।
[ १०-२ ] सोमो॒धेनुम् ॥ सोमो॒धे॒नुᳬं सोमो॒ऽअर्व्वन्तमा॒शुᳬं
सोमो॑व्वी॒रङ्क॑र्म्म॒ण्ण्य॒न्ददाति ॥ सा॒दु॒न्य॑व्वि॒दु॒त्थ्य॑ᳬं स॒भेयम्पि॒तृ
श्श्रव॑णँय्यो॒दर्दांशदस्म्मै ॥ २१ ॥ त्वमि॒मा॒ः ॥ त्वमि॒माऽ
ओष॑धीᳬंसोम॒व्विश्श्वा॒स्त्त्वम॒पोऽअंजनय॒स्त्त्वङ्गाः ॥ त्वमा॒तंत



१ स्वःसाम् इति पदम् । अत्र "स्वर्भूः साठंसहयोः (शु. य. प्रा. ३ अ. ४१ सू.) इत्यनेन यथासंख्यं स्वस्य विसर्जनीयस्य साम् पदे परे रेफत्वं सकारस्य च मूर्धन्यपरत्वञ्च जातम् ।

न्थोर्वृन्तरिक्षुन्त्वुयोतिषाविर्तमोर्वृवर्त्थ ॥२२॥ देवेनंन॑ ॥
देवेनंनोमनंसादेवसोमरायोभाग॑ᳪंसहसावन्नभियुध्य ॥ मात्त्वा
तंनदीशिंषेव्वीर्य्यस्योभयेभ्युः॑प्प्रचिकित्त्सागविष्टौ ॥ २३ ॥
अष्टौवि ॥ अष्टौव्व्यंकव्व्यत्त्ककुभं॑ःप्पृथिव्व्यास्त्रीधन्वयोजंनास
प्तसिन्धून् । हिरण्ण्याक्षःसंविंतादेवऽआगाद्दधुद्रत्त्नांदाशु
षेव्वार्य्याणि ॥ २४ ॥ हिरंण्णयपाणि॑ःसविता । विचर्षणिरुभे
द्यावांपृथिवीऽअन्तरीयते ॥ अपामींवाम्बाधंतेव्वेतिसूर्य्यमभि

कृष्णेनरजंसाद्यामृंणोति ॥ २५ ॥ हिरंण्यहस्तोऽअसुरः ।
सुनीथःसुमृडीकःस्ववांयात्त्वर्वाङ् ॥ अपसेधंत्रक्षसोयातु
धानानस्थाद्देवःप्रंतिदोषङ्गृणानः ॥२६॥ येते ॥ येतेपन्थाः
सवितःपूर्व्यासोऽरेणवःसुकृंताऽअन्तरिंक्षे ॥ तेभिर्नोऽअद्यप
थिभिंःसुगेभीरक्षांचनोऽअधिंचब्रूहिदेव ॥२७॥ उभापिंबत
म् ॥ उभापिंबतमश्विनोभानःशर्म्मयच्छतम् ॥ अविद्रिया
भिरूतिभिंः ॥ २८ ॥ अप्नस्वतीमश्विना ॥ अप्नस्वतीम

श्विनाव्वाचंमस्म्मेकृतन्नोदस्राव्वृषणामनीषाम् ॥ अद्यूत्त्येवंसे
निह्वयेवांवृधेचंनोभवतंव्वाजंसातौ ॥ २९ ॥ द्युभिरक्तुभिः ॥
द्युभिरक्तुभिःपरिपातमस्म्मानरिष्टेभिरश्विनासौभंगेभिः ॥
तन्नोमित्रोव्वरुणोमामहन्तामदितिःसिन्धुः पृथिवीऽउतद्यौः
॥ ३० ॥ [ १०-३ ] आकृष्णेनं ॥ आकृष्णेनरजंसाव्वर्त्तं
मानोनिवेशयंन्नमृतम्मर्त्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादे
वोयांतिभुवंनानिपश्श्यंन् ॥ ३१ ॥ आरांत्रि ॥ आरांत्रिपा

७८५

श्विनाव्वाचंमस्म्मेकृतन्नोंदस्राव्वृषणामनीषाम् ॥ अद्युत्त्येवंसे
निह्वंयेवांव्वृधेचंनोभवतंव्वाजंसातौ ॥ २९ ॥ द्युभिंरक्क्तुभिं÷ ॥
द्युभिंरक्क्तुभिंᳪपरिंपातमस्म्मानरिंष्ट्टेभिरश्विनासौभंगेभिंᳪ ॥
तन्नोंमित्त्रोव्वरुंणोमामहन्तामदिंतिंᳪसिन्धुं÷पृथिवीऽउतद्यौः
॥ ३० ॥ [ १०-३ ] आकृष्णेनं ॥ आकृष्णेनरजंसाव्वर्त्तं
मानोनिवेशयंन्नमृतम्मर्त्त्यंञ्च ॥ हिरण्ययेंनसवितारथेनादे
वोयांतिभुवंनानिपश्श्यंन् ॥ ३१ ॥ आरांत्रि ॥ आरांत्रिपा

त्थिवꣳरजः पितुरप्प्रायिधामभिः ॥ दिवस्सदाᳬसिबृहतीवि
तिष्ठसऽआत्त्वेषंवर्त्ततेतमः ॥ ३२ ॥ उषस्तत् ॥ उषस्तच्चि
त्रमाभरास्मभ्यंवाजिनीवति ॥ येनतोकञ्चतनयञ्चधामहे
॥ ३३ ॥ प्रातरग्निम् ॥ प्रातरग्निम्प्रातरिन्द्रꣳहवामहेप्प्रात
र्म्मित्रावरुणाप्प्रातरश्विना ॥ प्रातर्भगम्पूषणम्ब्रह्मणस्प्पतिं
म्प्रातस्सोममुतरुद्रꣳहुवेम ॥ ३४ ॥ प्रातर्जितम्भगम् ॥ प्रात
र्जितम्भगमुग्ग्रꣳहुवेमवयम्पुत्रमदितेर्य्योविधर्त्ता ॥ आद्ध्रश्चि

द्द्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्त्याह ॥ ३५॥
भगप्प्रणेतः ॥ भगप्प्रणेतुर्भगसत्त्यराधोभगेमान्धियमुद
वादर्दन्नः ॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्नृवन्तः
स्याम ॥ ३६ ॥ उतेदानीम् ॥ उतेदानीम्भगवन्तःस्यामोत
प्प्रपित्त्वऽउतमध्येऽअह्नाम् ॥ उतोदितामघवन्त्सूर्यस्यवय
न्देवानांसुमतौस्याम ॥ ३७ ॥ भगऽएव । भगवाँ२॥ऽअ

१ प्रनो जनयगोभिः। अत्र समानपदत्वाभावेन "ऋवरेभ्यो०" इत्यनेन णत्वाप्राप्तौ "नियणाय०" इत्यनेनासमानपदेऽपि विधीयमानस्य णत्वस्य प्रनः इत्यस्य आयुषिपर एव विधानात्र 'जनयगोभिः पदे' परे णत्वम्।

शु. य. संहि.

॥१२०॥

स्तुदेवास्तेनंव्वयम्भगंवन्तꣳस्याम ॥ तन्त्वांभगसर्व्वऽइज्जोहँ उ. वि. अ.

वीतिसनोंभगपुरऽएताभंवेह ॥ ३८ ॥ समंध्वरायं ॥ समं ॥ ३४ ॥

ध्वरायोषसोंनमन्तदधिक्क्रावेंवशुचंयेपदायं ॥ अर्व्वाचीनंव्वसु

विदम्भगंन्नोरथंमिवाश्वांव्वाजिनऽआवंहन्तु ॥ ३९ ॥ अश्वाव

तीर्ग्गोंमंतीꣳ ॥ अश्वांवतीर्ग्गोमंतीर्न्नऽउषासोंव्वीरवंतीꣳसदंमु

च्छन्तुभद्राः ॥ घृतन्दुहानाव्विश्वतꣳप्रपीतायूयंपातस्वस्ति ॥१२०।

१ नऽउषासः । अत्र नकारात्परस्य उष इत्यस्य षाकारस्य "उपमहोभिर्नैकेमीकारे" (शु. य. प्रा. ३ अ. ११९ सू.) इत्यनेन दीर्घाकारः ।

भिद्रꣳसदानꣳ ॥ ४० ॥ [ १०-४ ] पूषन्तव[1] । व्रतेव्वयन्नरिष्ष्ये

मकदाचन ॥ स्तोतारस्तऽइहस्म्मसि ॥ ४१ ॥ पथस्प्पथꣳ

परिपतिम् ॥ पथस्प्पथꣳपरिपतिंव्वचस्याकामेनकृतोऽअभ्या

नडर्क्कम् ॥ सनोरासच्छुरुधश्चन्द्राग्ग्राधियन्धियꣳसीषधाति

प्रपूषा ॥ ४२ ॥ त्रीणिपदा[2]विचक्क्रमेव्विष्णुग्गोपाऽअदाभ्यꣳ ॥

अतोधर्म्माणिधारयन् ॥ ४३ ॥ तद्विप्प्रासꣳ ॥ तद्विप्प्रासो

---

१ पूषन्तव । अत्र "ऋवरेभ्यः" इत्यनेन समानपदे विधीयमानं णत्वं "प्रकृत्या पदान्तीयः" ( शु. य. प्रा. ३ अ. ९० सू. ) इत्यनेन निषिध्यते ।

२ "त्रीणि पदा" अत्र पदानिवदितस्य निकारस्य "निशब्दो बहुलम्" ( शु. य. प्रा. ३ अ. १८ सू. ) इत्यनेन लोपे "त्रीणि पदा" इति पदम् ।

शु. य. संहि. ॥१२१॥ विपन्यवौजागृवाꣳसःसमिन्धते ॥ विष्णोर्य्यत्त्परमम्पदम् उ. वे. अ. ॥ ३४ ॥
॥ ४४ ॥ घृतवतीभुवनानाम् ॥ घृतवतीभुवनानामभिश्रि
योर्वीपृत्थ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणा
विष्कम्भितेऽअजरेभूरिरेतसा ॥ ४५ ॥ येनः ÷ । सपत्नाऽअ
पतेभवन्त्विन्द्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राऽ
आदित्याऽउपरिस्पृशम्मोग्रञ्चेत्तारमधिराजमक्रन् ॥ ४६ ॥ ॥१२१॥
आनासत्त्या । त्रिभिरेकादशैरिहदेवेभिर्य्यातम्मधुपेयमश्वि

ना ॥ प्रायुस्त्तारिष्टुन्नीरपांᳯसिमृक्षत॑ सेधंतन्द्वेषोभवंत॒
सचाभुवा ॥ ४७ ॥ एषवं÷ ॥ एषवुस्तोमोमरुतऽइयङ्गी
र्म्मान्दार्य्यस्यंमान्यस्यंकारोः ॥ एषायांसीष्टतन्वेवयांविद्या
मेषंवृजनंजीरदांनुम् ॥ ४८ ॥ सहस्तोमाᳶसहछन्दसᳶ ॥
सहस्तोमाᳶसहछन्दसऽआवृतं÷सहप्प्रमाऽऋषयंᳶसप्तदै
व्याᳶ ॥ पूर्वैषाम्पन्थांमनुदृश्यधीराऽअन्वालेभिरेरत्थ्योन
सं. ६० रश्मीन् ॥ ४९ ॥ आयुष्यंवर्च्चस्यम् ॥ आयुष्यंवर्च्चस्यᳶराय

स्पोषमौद्भिदम् ॥ इदᳬं हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम्
॥५०॥ [१०-५] नतत् ॥ न तद्रक्षाᳬंसि न पिशाचास्तरन्ति दे
वानामोजः प्रथमजᳬं ह्येतत् ॥ यो बिभर्ति दाक्षायणᳬं हिर
ण्यᳬं स देवेषु कृणुते दीर्घमायुᳬं स मनुष्येषु कृणुते दीर्घमायुः
॥५१॥ यदाबध्नन् ॥ यदाबध्नन्दाक्षायणा हिरण्यᳬं शता
नीकाय सुमनस्यमानाः ॥ तन्मऽआबध्नामि शतशारदायायु ॥ १२२ ।
ष्माञ्जरदष्टिर्यथासम् ॥५२॥ उतनः ॥ उत नोऽहिर्बुध्न्यः

शृणोत्त्वुजऽएकंपात्त्पृथिवीसंमुद्रः ॥ विश्वेदेवाऽऋंतावृधोहु
वानास्त्तुतामन्त्राद्ंकविशस्त्ताऽअंवन्तु ॥५३॥ इमागिरं ॥ इ
मागिरंऽआदित्त्येभ्योघृतस्न्नूद्ंसनाद्राजंभ्योजुह्वाजुहोमि ॥
शृणोतुमित्रोऽअंर्य्युमाभगोनस्त्तुविजातोव्वरुणोदक्क्षोऽअ६ं
शं ॥५४॥ सप्तऽऋषंयद्ं ॥ सप्तऽऋषंयद्ंप्पतिंहिताद्ंशरीरे
सप्तरंक्षन्तिसदुमप्पंमादम् ॥ सप्तापद्ंस्वपंतोलोकमीयुस्त्त
त्रंजागृतोऽअस्वंप्नजौसत्रसदौचदेवौ ॥ ५५ ॥ उत्तिष्ठ ।

७९३

ब्रह्मणस्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतंःसुदानवऽ
इन्द्रंप्राशूर्भवा[2]सचा ॥५६॥ प्रनूनम् ॥ प्रनूनम्ब्रह्मणस्पतिर्म्मं
त्त्रंवदत्त्युक्थ्यम् ॥ यस्मिन्निन्द्रोवरुणोमित्रोऽअर्य्यमादे
वाऽओकांᳬसिचक्क्रिरे ॥५७॥ ब्रह्मणस्पते ॥ ब्रह्मणस्पतेत्त्व
मस्ययन्तासुक्तस्यंबोधितनंयञ्चजिन्व ॥ विश्वन्तद्भद्रंय्यदवं

॥ १२२ ॥

१ ब्रह्मणस्पते । अत्र विसर्जनीयस्य "प्रकृत्या कस्योः पफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इत्यनेन प्रकृतिभावे प्राप्तेऽपि "पतिताल्व्यस्वरोदये" (शु. य. प्रा. ३ अ. ३५ सू.) इत्यनेन पतिशब्दे परे सकारो विधीयते । तत "ऊष्मान्तस्थाभ्यश्च स्पर्शाः" (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् । २ भव सचा इति पदम् । वकाराकारस्य सचा परे "सचावसूच्यवाजस्पायुषु च" (शु. य. प्रा. ३ अ. ११० सू.) इत्यनेन एतेषु परेषु भवेत्येतत्पदं दीर्घं भवति । अतो दीर्घाकारे भवासचा इति पदम् ।

न्तिदेवाबृहद्वदेमविदथेसुवीराꣳ ॥ यऽइमाविश्वाविश्वकर्म्मा
योनः पिताऽन्नपतेन्नस्यनोदेहि ॥ ५८ ॥ [८-६] ॥ इति श्री-
वाजसनेयसंहितायां चतुस्त्रिंशोऽध्यायः ॥३४॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ अपेतो दश, पाघन्द्वादश, द्वौ द्वाविꣳ
शतिः [अ. ३५ मं. २२ अनु. २] ॥ हरिः ॐ ॥ अपेतश्श ॥ अपेतो
यन्तुपणयोसुम्न्नादेवपीयवः ॥ अस्यलोकश्सुतावतꣳ ॥ द्युभि
रहोभिरक्तुभिर्व्यक्तँयमोददात्त्ववसानमस्मै ॥ १ ॥ सवि

१ यऽइमाविश्वा. अ. १७ मं. १७ ॥ १ विश्वकर्म्माविमना. अ. १७ मं. २६ ॥ १ योनः पिता. अ. १७ मं. २७ ॥ १ अन्नपतेऽन्नस्य. अ. ११ मं. ८३ ॥ इति प्रतीकानि ॥

शु. य. संहि. ताते ॥ सविताते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ॥ तस्म्मै उ. वि. अ.
युज्यन्तामुस्रियाः ॥ २ ॥ वायुः पुनातु । सविता पुनात्त्व ॥ ३५ ॥
॥१२४॥ ग्नेर्भ्राजसा सूर्य्यस्य वर्च्चसा ॥ विमुच्यन्तामुस्रियाः ॥ ३ ॥
अश्वत्थे वः ॥ अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥ ४ ॥ सविताते ॥
सविताते शरीराणि मातुरुपस्थऽआवपतु ॥ तस्म्मै पृथिवि श ॥ १२४ ।
म्भव ॥ ५ ॥ प्रजापतौ त्वा । देवतायामुपोदके लोके निद

धाम्म्यसौ ॥ अपंनुःशोशुंचदुघम् ॥ ६ ॥ परंम्मृत्त्यो ॥
परंम्मृत्त्योऽअनुपरेहिपन्थाँम्यस्त्तेऽअन्यऽइतंरोदेवयानांत् ॥
चक्क्षुष्म्मतेशृण्णवुतेतेब्रवीमिमानंःप्प्रजाꣳरीरिषोमोतव्वीरान्
॥ ७ ॥ शंव्वातंः ॥ शंव्वातुःशꣳहितेघृणिःशन्तेभवन्त्त्विष्ट्टं
काः ॥ शन्तेभवन्त्वग्ग्नयुःपात्थिवासोमात्त्वाभिशूंशुचन्
॥ ८ ॥ कल्प्पंन्तान्ते ॥ कल्प्पंन्तान्तेदिशुस्त्तुब्भ्युमापंःशि
वतंमास्त्तुब्भ्यंम्भवन्तुसिन्धंवः ॥ अन्तारिक्क्षꣳशिवन्तुब्भ्यु

शु. य. संहि. ॥१२५॥

ङ्कल्पंन्तान्तेदिशꣳसर्वा॑ः ॥९॥ अश्मंन्वतीरीयतेसꣳरंभध्वमु स. वि. अ.
त्तिष्ठतप्प्रतंरतासखायः॥ अत्रां[1]जहीमोऽशिवायेऽअसंञ्छिवान्व ॥ ३५ ॥
यमुत्तंरेमाभिवाजांन् ॥ १० ॥ [१०-४] अपाघम् ॥ अपाघमप
किल्बिषमपंकृत्यामपोरपः ॥ अपांमार्गत्वमस्स्मदपंदुः[2]ष्व
प्प्न्यꣳसुव ॥११॥ सुमित्रियानः ॥ सुमित्रियानऽआपऽओषं
धयःसन्तुदुर्म्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चंवयन्द्वि ॥ १२५ ॥

१ अत्राजहीमः। अत्र जहीमः इति पदे परे अत्रशब्दस्य ह्रस्वाकारस्य "पूष्णो जहीमसोऽत्र" (शु. य. प्रा. ३ अ. १२१ सू.) इत्यनेन दीर्घो भवति।
२ दुःष्वप्न्यꣳ सुव। अत्र "भाविभ्यः सः षं समानपदे" (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन विसर्जनीयस्य व्यवधानात्तस्याप्राप्तौ "दुःष्वप्न्यम्" (शु. य. प्रा. ३ अ. ७३ सू.) इत्यनेन दोःपरात्स्वप्नघटितस्य षत्वं निपात्यते।

ष्मसः ॥१२॥ अनड्वाहंमन्वारंभामहे ॥ अनड्वाहंमन्वारंभाम
हेसौरंभेयꣳस्वस्तये ॥ सनऽइन्द्रंऽइवदेवेभ्योवह्निः सन्तारं
णोभव ॥ १३ ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यं
न्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम् ॥ १४ ॥
इमञ्जीवेभ्यः । परिधिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ॥
शतञ्जीवन्तुशरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेन ॥ १५ ॥

१ अनस् वाहम् इति पदम्। अत्र "अनसो वाही सकारो डकारम्" (शु. य. प्रा. ३ अ. ४५ सू.) अत्र अनड्शब्दस्य सकारस्य वाही परे डकारो विधीयते तेन अनड्वाहम्।

अग्नुऽआयूᳬंषि । पवसुऽआसुवोर्ज्जुमिषंञ्चनः ॥ आरेबाध
स्वदुच्छुनाम् ॥ १६ ॥ आयुष्मानग्ने । हुविषांवृधानोघृत
प्प्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्व्यम्पितेवपुत्र
मभिरक्षतादिमान्त्स्वाहा ॥ १७॥ परीमे । गामनेषतपर्य्य
ग्निमहृषत ॥ देवेष्ष्वक्क्रतश्श्रवः कऽइमाँ२॥ऽआदधर्षति
॥ १८ ॥ क्व्यादमग्निम् ॥ क्व्यादमग्निम्प्रहिणोमिदूरंय्यं
मराज्ज्यङ्गच्छतुरिप्प्रवाहः[१] ॥ इहैवायमितरोजातवेदादेवेब्भ्यो



१ प्रहिणोमि ॥ अत्र समानपदत्वाभावेन ''ऋषरेभ्यः'' इत्यनेन णत्वाप्राप्तौ ''प्र नेतिनुदातिहिनोमीनाम्'' (शु. य. प्रा. ३ अ. ८९ सू.) इत्यनेन णत्वम् ।

हुव्यंवँहतुप्प्रजानन् ॥ १९ ॥ वुहँवुपाम् ॥ वुहँवुपाज्ञांतवेदः
पितृब्भ्योयत्रैनान्वेत्थुनिहिंतान्पराके ॥ मेर्दसःकुल्ल्याऽउप
तान्त्स्रंवन्तुसत्त्याऽएंषामाशिषःसन्नंमन्ताॐस्वाहा ॥ २० ॥
स्योनापृथिवि । नोभवान्नृक्षरानिवेशंनी ॥ यच्छांनःशर्म्म
सप्प्रथाः ॥ अपंनःशोशुंचदुघम् ॥ २१ ॥ अस्म्मात्त्वम् ॥
अस्म्मात्त्वमधिंजातोसित्त्वदुयज्ञांयताम्पुनः ॥ असौस्वुर्ग्गां
यंलोकायस्वाहा ॥ २२ ॥ [१२-२] इति श्रीवाजसनेयसंहि-

तायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ श्रीवेदपुरुषाय नमः ॥
अनुवाकसूत्रम् ॥ ऋचंवाचꣳषोडश, द्यौःशान्तिरष्टौ, द्वौ
चतुर्व्विꣳशतिः [अ. ३६ मं. २४ अनु. २] ॥ हरिः ॐ ॥
ऋचंवाचम् ॥ ऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामंप्राण
म्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये ॥ वागोजःसहौजोमयिप्राणापा
नौ ॥ १ ॥ यन्मे । छिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृ ॥१२७॥
हस्पतिर्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥ २ ॥

भूर्भुवः ॥ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीम
हि ॥ धियो यो नः प्रचोदयात् ॥ ३ ॥ कयानः ॥ कया नश्चित्र
आभुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥ ४ ॥ क
स्त्वा । सत्यो मदानाम्मंहिष्ठो मत्सदन्धसः ॥ दृढा चिदारु
जे वसु ॥५॥ अभीषुणः ॥ अभीषुणः सखीनामविता जरितॄणा
म् ॥ शतम्भवास्यूतिभिः ॥६॥ कयात्त्वम् ॥ कया त्वन्नऽऊत्या

सं. ६१ १ अभीषुणः । अत्र अभिसुनः इति पदम् । अत्र "अभेश्च" (शु. य. प्रा. ३ अ. ६३ सू.) इत्यनेन अभेरुपसर्गात्परस्य सुशब्दस्य षत्वे रूपम् ।

भिप्प्रमन्दसेव्वृषन् ॥ कयास्त्तोतृब्भ्यऽआभर ॥ ७ ॥ इन्द्रो
व्विश्वस्य राजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्प्पदे ॥ ८ ॥
शन्नः ॥ शन्नोमित्रःशंव्वरुणःशन्नोभवत्त्वर्य्यमा ॥ शन्नऽइ
न्द्रोबृहस्प्पतिःशन्नोव्विष्ण्णुरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातः ।
पवता ँ शन्नस्त्तपतुसूर्य्यः ॥ शन्नःकनिक्क्रदद्देवःपर्ज्जन्न्योऽ
अभिवर्षतु ॥ १० ॥ अहानिशम् ॥ अहानिशम्भवन्तुनःश
ँ रात्रीःप्प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवतामवोभिःश

न्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणाव्वाजसातौशमि
न्द्रासोमासुवितायशँय्योः ॥ ११ ॥ शन्नः ॥ शन्नोदेवीरभि
ष्टयऽआपोभवन्तुपीतये ॥ शँय्योरभिस्रवन्तुनः ॥ १२ ॥
स्योनापृथिवि । नोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मस
प्प्रथाः ॥ १३ ॥ आपोहि । ष्ठामयोभुवस्तानऽऊर्ज्जेदधात
न ॥ महेरणायचक्क्षसे ॥ १४ ॥ योवः । शिवतमोरसस्तस्य

१ अत्र यच्छ नः इति पदम् । यच्छ इत्यस्य ह्रस्वाकारस्य नः इत्यस्य नकारे परे "धारयामयोजावसचस्वनुदमोयुजयतोरुष्यरक्षयजयच्छसास्तथपिपृतगायतातुयेन नकारे ( शु. य. प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारे कृते यच्छानः ।

भाजयतेहनं÷ ॥ उशतीरिंवमातरं÷ ॥ १५ ॥ तस्म्माऽअरंम् ॥
तस्म्माऽअरंङ्गमामवोयस्यक्क्षयांयजिन्न्वंथ ॥ आपोंजनयं
थाचनं ॥ १६ ॥ [१६-१] द्यौश्शान्तिं÷ ॥ द्यौश्शान्तिरन्त
रिंक्क्षह्वशान्तिं÷पृथिवीशान्तिरापंश्शान्तिरोषंधयंश्शान्तिं÷ ॥
व्वनस्प्पतंयश्शान्तिर्व्विश्श्वेदेवाश्शान्तिर्ब्रह्मशान्तिंस्सर्व्वह्वशा
न्तिंश्शान्तिरेवशान्तिंस्सामाशान्तिंरेधि ॥ १७ ॥ दृतेदृंह
मा । मित्रस्यमाचक्क्षुंषासर्व्वाणिभूतानिसमीक्क्षन्ताम् ॥ मित्र

स्याहञ्चक्षुषासर्व्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुषासमी
क्षामहे ॥ १८ ॥ दृतेदृꣳहं मा ॥ ज्योक्तेसन्दृशिजीव्यास
ञ्ज्योक्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमस्ते ॥ नमस्तेहर
सेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु
हेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ २० ॥ नमस्ते ।
ऽअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥ नमस्तेभगवन्नस्तुयतः
स्वःसमीहसे ॥ २१ ॥ यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥

 

शन्नं÷कुरुप्प्रजाब्भ्योभंयन्नꣳपशुब्भ्यं÷ ॥२२॥ सुमित्रियानं÷॥
॥१३०॥ सुमित्रियानऽआपऽओषधयꣳसन्तुदुर्म्मित्रियास्त्तस्म्मैसन्तु ॥ ३६ ॥
योस्म्मान्द्द्वेष्टियञ्चवयन्द्विष्म्मः ॥२३॥ तच्चक्क्षुं÷ ॥ तच्चक्क्षु
र्द्देवहितम्पुरस्त्ताच्छुक्क्रमुच्चरत् ॥ पश्श्येमशरदं÷शतञ्जीवे
मशरदं÷शतꣳशृणुयामशरदं÷शतम्प्रब्रवामशरदं÷शतमदी
नाःस्यामशरदं÷शतम्भूयश्चशरदं÷शतात् ॥ २४ ॥ [८-२] ॥ १३० ।

इति श्रीवाजसनेयसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥

श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ देवस्यत्त्वा दश, यमाय
त्त्वैकादश, द्वा,वेकवि॑ꣳशतिः [अ. ३७म. २१ अनु. २] ॥
हरिः ॐ॥ दे॒वस्य॑त्त्वा । स॒वि॒तुः प्प्र॑स॒वेऽश्वि॑नोर्बा॒हुभ्या॑म्पू॒ष्णो
हस्त्ता॑भ्याम् ॥ आद॑दे॒ना॒रि॑रसि ॥ १ ॥ यु॒ञ्जते॒मन॑ ॥ यु॒ञ्ज
ते॒मन॑ऽउ॒तयु॑ञ्जते॒धियो॒विप्प्रा॒विप्प्र॑स्यबृ॒ह॒तोवि॑पश्चि॒तः ॥ विहो
त्रा॑दधेवयुना॒विदेक॒ऽइन्म॒ही॒दे॒वस्य॑सवि॒तुःपरि॑ष्टुतिः ॥ २ ॥
देवी॑द्यावापृथिवी । म॒खस्य॑वाम॒द्याशिरो॑रा॒द्ध्यासन्दे॒व॒यज॑नेपृथि

व्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ३ ॥ देव्योंव्व
म्भ्रयं ॥ देव्योंव्वम्भ्रयोभूतस्यंप्प्रथमजामुखस्यंवोद्यशिरोराद्धा
सन्देवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥४॥
शतम् ॥ १९०० ॥ इयत्त्यग्ग्रे ॥ इयत्त्यग्ग्रेऽआसीन्मुखस्यं
तेद्यशिरोराद्धासन्देवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यं
त्त्वाशीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजं ॥ इन्द्रस्यौजंस्त्थमुखस्यंवो
द्यशिरोराद्धासन्देवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वा

शीर्ष्णे ॥ मुखायँत्त्वामुखस्यँत्त्वाशीर्ष्णे ॥ मुखायँत्त्वामुखस्यँ
त्त्वाशीर्ष्णे ॥ ६ ॥ प्रैतु ॥ प्रैतुब्ब्रह्मणस्प्पतिः प्प्रदेव्व्येतुसूनृता ॥
अच्छाँव्वीरन्नर्य्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ मुखायँ
त्त्वामुखस्यँत्त्वाशीर्ष्णे॥ मुखायँत्त्वामुखस्यँत्त्वाशीर्ष्णे॥ मुखा
यँत्त्वामुखस्यँत्त्वाशीर्ष्णे ॥७॥ मखस्यशिरः ॥ मुखस्यशिरो
सि ॥ मुखायँत्त्वामुखस्यँत्त्वाशीर्ष्णे ॥ मुखस्यशिरोसि ॥ मुखा
यँत्त्वामुखस्यँत्त्वाशीर्ष्णे ॥ मुखस्यशिरोसि ॥ मुखायँत्त्वा

मखस्यत्त्वाशीर्ष्णे ॥ मखायंत्त्वामखस्यत्त्वाशीर्ष्णे ॥ मखा
यंत्त्वामखस्यत्त्वाशीर्ष्णे ॥ मखायंत्त्वामखस्यत्त्वाशीर्ष्णे
॥ ८ ॥ अश्वंस्यत्त्वा ॥ अश्वंस्यत्त्वावृष्ण्णं÷शक्नाधूपयामि
देवयजंनेपृथिव्याः ॥ मखायंत्त्वामखस्यत्त्वाशीर्ष्णे ॥ अश्वं
स्यत्त्वावृष्ण्णं÷शक्नाधूपयामिदेवयजंनेपृथिव्याः ॥ मखायं
त्त्वामखस्यत्त्वाशीर्ष्णे॥ अश्वंस्यत्त्वावृष्ण्णं÷शक्नाधूपयामि ॥१२२॥
देवयजंनेपृथिव्याः॥ मखायंत्त्वामखस्यत्त्वाशीर्ष्णे॥ मखायं

त्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥
मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ९ ॥ ऋजवेंत्त्वा । साधवें
त्त्वासुक्षित्यैत्त्वा ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ मुखायं
त्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे
॥ १० ॥ [ १०-१ ] यमायंत्त्वा । मुखायंत्त्वासूर्य्यस्यत्त्वा
तपंसे ॥ देवस्त्त्वांसविताम्ध्वांनक्त्तुपृथिव्याःसँस्पृशस्प्पा

१ सँस्पृशस्पाहि । अत्र ''अध्वनो रजसो रिपःस्पृशस्पातौ'' (शु. य. प्रा. ३ अ. २८ सू.) इत्यस्मिन् पातावितिधातुग्रहणात् पाहि इति पाधातोर्लोटि मध्यमपुरुषस्यैकवचनस्य रूपे परे स्पृशः विसर्गस्य सः ।

हि ॥ अर्चिरसिशोचिरसितपोसि ॥ ११ ॥ अनाधृष्टापुरस्त्तां
त् ॥ अनाधृष्टापुरस्त्तादुग्नेराधिपत्त्यऽआयुर्म्मेदाःपुत्रवतीद
क्षिणतऽइन्द्रस्याधिपत्त्येप्रजाम्मेदाः ॥ सुषदापश्चाद्देवस्य
सवितुराधिपत्त्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्त्ये
रायस्प्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्प्पतेराधिपत्त्यऽओ
जोमेदाविश्वाभ्योमानाष्ट्राभ्यस्प्पाहिमनोरश्वासि ॥ १२ ॥ ॥१२२॥
स्वाहामरुद्भिः ॥ स्वाहामरुद्भिःपरिश्रीयस्वदिवःसंस्पृश

स्प्पाहि ॥ मधुमधुमधुं ॥ १३ ॥ गर्ब्भोदेवानाम् ॥ गर्ब्भो
देवानाम्पितामतीनाम्पतिः प्प्रजानाम् ॥ सन्देवोदेवेनसवि
त्रागतसꣳसूर्य्येणरोचते ॥ १४ ॥ समग्निः ॥ समग्निरग्नि
नागतसन्दैवेनसवित्रासꣳसूर्य्येणारोचिष्ट ॥ स्वाहासमग्नि
स्तपसागतसन्दैव्येनसवित्रासꣳसूर्य्येणारूरुचत ॥ १५ ॥
धर्त्तादिवः ॥ धर्त्तादिवोविभातितपसस्पृथिव्यान्धर्त्तादेवो



---

१ तपसः पृथिव्याम् इति पदम्। तपसः इत्यस्य विसर्गस्य "तपसस्पृथिव्याम्" (शु. य. प्रा. ३ अ. २७ सू.) इत्यनेन सत्वे सिद्ध्यति।

देवानाममर्त्त्यस्तपोजाः ॥ वाचमस्म्मेनियच्छदेवायुवम्
॥ १६ ॥ अपश्यङ्गोपाम् ॥ अपश्यङ्गोपामनिपद्यमानमा
चपराचपथिभिश्चरन्तम् ॥ ससध्रीचीःसविषूचीर्वसानऽआव
रीवर्त्तिभुवनेष्वन्तः ॥ १७ ॥ विश्वासाम्भुवाम् ॥ विश्वा
साम्भुवाम्पतेविश्वस्यमनसस्प्पतेविश्वस्यवचसस्प्पतेसर्व्वस्यव
चसस्प्पते ॥ देवश्रुत्त्वन्देवघर्म्मदेवोदेवान्पाह्यत्रप्रावीरनुवा
न्देववीतये ॥ मधुमाध्वीभ्याम्मधुमाधूचीभ्याम् ॥ १८ ॥

॥ १२४ ॥

हृदेत्वां ॥ हृदेत्वामनंसेत्वादिवेत्वासूर्य्यायत्वा ॥ ऊर्द्धोऽ
अंद्ध्वरन्दिवि‌देवेषुधेहि ॥ १९ ॥ पितानः ॥ पितानोऽसिपि
तानोबोधिनमस्तेऽअस्तुमामाहिंᳪसीः ॥ त्वष्टृमन्तस्त्वा
सपेमपुत्रान्पशून्मयिधेहिप्रजामस्मासुधेह्यरिष्टाहᳪसहप
त्याभूयासम् ॥ २० ॥ अहः केतुना । जुषताᳪसुज्योति
र्ज्योतिषास्वाहा ॥ रात्रिः केतुनाजुषताᳪसुज्योतिर्ज्योतिषा
स्वाहा ॥ २१ ॥ [ ११-२ ] इति श्रीवाजसनेयसंहितायां

८१७

शु. य. संहि. सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवा- उ. वि. अ.
॥१३५॥ कसूत्रम् ॥ देवस्यत्त्वाष्टौ, यमायत्त्वा क्षत्रस्यत्त्वा दशकौ, ॥ ३८ ॥
त्रयोऽष्टाविꣳशतिः [ अ. ३८ मं. २८ अनु. ३ ] ॥ हरिःॐ ॥
देवस्यंत्त्वा ॥ देवस्यंत्त्वासवितुःप्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्यांम्पूष्णणो
हस्त्ताब्भ्याम् ॥ आददेदित्त्यैरास्न्नासि ॥ १ ॥ इडऽ
एहि ॥ इडऽएह्यदितऽएहिसरंस्वत्त्येहि ॥ असावेह्यसावेह्य ॥ १३५ ॥
सावेहि ॥ २ ॥ अदित्त्यैरास्न्ना । सीन्द्राण्ण्याऽउष्ण्णीषंः ॥

पूषासिघर्म्मायंदीष्व ॥ ३ ॥ अश्विभ्यांम्पिन्वस्व ॥ अश्वि
भ्यांम्पिन्वस्वसरंस्वत्यैपिन्वस्वेन्द्रांयपिन्वस्व ॥ स्वाहेन्द्रंव
त्स्वाहेन्द्रंवत्स्वाहेन्द्रंवत् ॥ ४ ॥ यस्त्ते ॥ यस्त्तेस्त्तनं÷शश
योयोमंयोभूर्य्योरत्क्नधावंसुविद्वश्सुदत्रं÷ ॥ येनविश्वापुष्य्यं
सिवार्य्याणिसरंस्वतितमिहधातंवेकः ॥ उर्वुन्तरिंक्क्षमन्वेमि
॥ ५ ॥ गायत्रञ्छन्दं÷ ॥ गायत्रञ्छन्दोसित्रैष्टुभञ्छन्दोसि
द्यावांपृथिवीभ्यांन्त्वापरिंगृह्णाम्म्यन्तरिंक्क्षेणोपंयच्छामि ॥

इन्द्राश्विनामधुनꣳसारघस्यंघर्म्मम्पातवसवोयजंतवाट् ॥ स्वा उ. वि.
हासूर्य्यस्यरश्मयेवृष्टिवनेये ॥ ६ ॥ समुद्रायत्त्वा ॥ समु अ.
द्रायत्त्वावातायस्वाहासरिरायत्त्वावातायस्वाहा ॥ अनाधृ ॥ ३८ ॥
ष्यायत्त्वावातायस्वाहाप्प्रतिधृष्यायत्त्वावातायस्वाहा ॥ अ
वस्यवेत्त्वावातायस्वाहाशिमिदायत्त्वावातायस्वाहा ॥ ७ ॥
इन्द्रायत्त्वा ॥ इन्द्रायत्त्वावसुमतेरुद्रवतेस्वाहेन्द्रायत्त्वादि ॥ १३६ ॥
त्यवतेस्वाहेन्द्रायत्त्वाभिमातिघ्नेस्वाहा ॥ सवित्रेत्त्वऽऋभुम

तेंव्विभुमतेव्वाजंवतेस्वाहाव्वृहस्पतंयेत्त्वाव्विश्वदेंव्यावतेस्वाहा
॥ ८ ॥ [ ८-१ ] युमायंत्त्वा ॥ युमायुत्त्वाङ्गिंरस्वतेपितृम
तेस्वाहा ॥ स्वाहांघर्म्मायस्वाहाघर्म्मःशपित्रे ॥ ९ ॥ व्विश्वाऽ
आशांः ॥ व्विश्वाऽआशादक्षिणसद्विश्वांन्देवानयाडिह ॥
स्वाहांकृतस्यघर्म्मस्यमधोंःपिबतमश्विना ॥ १० ॥ दिविधांः ॥
दिविधांऽइमँय्यज्ञमिमँय्युज्ञन्दिविधांः ॥ स्वाहाग्नयेंयु
ज्ञियांयुशँय्यजुंर्भ्यंः ॥ ११ ॥ अश्विनाघर्म्मम् ॥ अश्विनाघ

र्म्मम्पातंदुहाद्ध्रींनमहर्द्दिवाभिरूतिभिः ॥ तन्त्रायिणेनमोद्या
वांपृथिवीभ्याम् ॥ १२ ॥ अपातामश्विना । घर्म्ममनुद्या
वांपृथिवीऽअमंसाताम् ॥ इहैवरातयः सन्तु ॥ १३ ॥ इषे
पिन्वस्व ॥ इषेपिन्वस्वोर्जेपिन्वस्वब्रह्मणेपिन्वस्वक्षत्रायपिन्व
स्वद्यावापृथिवीभ्याम्पिन्वस्व ॥ धर्म्मासिसुधर्म्मामेन्यस्मेनृ
म्णानिधारयब्रह्मधारयक्षत्रन्धारयविशंधारय ॥ १४ ॥ ॥ १३७ ॥
स्वाहापूष्णे । शरसेस्वाहाग्रावभ्यःस्वाहाप्रतिरवेभ्यः ॥

स्वाहा पितृभ्यऽऊर्ध्वबर्हिभ्यो घर्म्मपावभ्यः स्वाहा द्यावापृथि
वीभ्याᳬ स्वाहा विश्वेभ्यो देवेभ्यः ॥ १५ ॥ स्वाहा रुद्राय।
रुद्रहूतये स्वाहा सञ्ज्योतिषा ज्योतिः ॥ अहः केतुना जुषता
ᳬ सुज्योतिर्ज्योतिषा स्वाहा ॥ रात्रिः केतुना जुषताᳬ सुज्यो
तिर्ज्योतिषा स्वाहा ॥ मधु हुतमिन्द्रतमेऽअग्नावश्याम ते देव
घर्म्म नमस्तेऽअस्तु मा मा हिᳬसीः ॥ १६ ॥ अभीमम् ॥
अभीमम्महिमा दिवं विप्रो बभूव सप्रथाः ॥ उत श्रवसा पृथि

शु. य. वीꣳसꣳसीदस्वमहाँ२॥ऽअसिरोचस्वदेववीतमः ॥ विधूम उ. वि.
संहि. मंग्नेऽअरुषम्मियेद्धयसृजम्प्रशस्त्तदर्शतम् ॥ १७ ॥ यातै । अ.
।१३८।। घर्म्मदिव्याशुग्ग्यागायत्र्याꣳहविर्द्धानै ॥ सातऽआप्प्यायता ॥ २८ ॥
न्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातैघर्म्मान्तरिक्क्षेशुग्ग्यात्रिष्टु
ब्भ्याग्नीध्रे ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥
यातैघर्म्मपृथिव्याꣳशुग्ग्याजगत्त्याꣳसदस्या ॥ सातऽआ ॥१३८॥
प्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ १८ ॥ [ १०-२ ]

क्षत्रस्यंत्त्वा। पुरस्प्पांयुब्ब्रह्मणस्त्तुब्भ्यम्पाहि॥ व्विशंस्त्त्वाधर्म्मं
णाव्वयमनुंक्क्रामामसुवितायुनव्यंसे॥१९॥ चतुं÷स्त्रक्तिकुर्ना
भिं÷॥ चतुं÷स्त्रक्तिकुर्नाभिंर्क्रुतस्यंसप्प्रथाुंःसनोंव्विश्वायुं÷सप्प्र
थाुंःसनं÷सर्व्वायुं÷सप्प्रथांः॥ अपद्द्वेषोऽअपह्वरोऽन्यव्व्रंतस्यस
श्चिम॥२०॥ घर्म्मैतत्॥ घर्म्मैतत्त्तेपुरीषन्तेनव्वर्द्धस्वचाच
प्प्यायस्व॥ व्वर्द्धिषीमहिंचव्वयमाचंप्प्यासिषीमहि॥२१॥
अचिक्कदुद्दृषा॥ अचिक्कदुद्दृषाहरिंर्म्महान्मित्रोनदर्शतः॥

सꣳसूर्य्यैणदिद्युतदुदधिर्न्निधिः ॥ २२ ॥ सुमित्त्रियानः ॥ 
सुमित्त्रियानऽआपऽओषधयःसन्तुदुर्म्मित्त्रियास्त्तस्म्मैसन्तु
योस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥ २३ ॥ उद्वयम् ॥ उद्वयन्त
मंसस्प्परिस्वःपश्श्यन्तऽउत्तरम् ॥ देवन्देवत्त्रासूर्य्यमगन्म्म
ज्ज्योतिरुत्तमम् ॥ २४ ॥ एधोसि ॥ एधोस्स्येधिषीमहिसमि
दसितेजोसितेजोमयिधेहि ॥ २५ ॥ यावतीद्यावापृथिवी । 
यावच्चसप्तसिन्धवोवितस्त्थिरे ॥ तावन्तमिन्द्रतेग्ग्रहमूर्ज्जाग्गृ

ह्णाम्म्यक्क्षितम्मयिगृह्णाम्म्यक्क्षितम् ॥ २६ ॥ मयित्त्यत् ॥
मयित्त्यदिन्न्द्रियम्बृहन्मयिदक्क्षोमयिक्क्रतुः ॥ घर्म्मस्त्रिशु
ग्ग्विराजतिविराजाज्ज्योतिषासहब्ब्रह्मणातेजसासह॥२७॥ पयं
सोरेतः ॥ पयंसोरेतऽआभृतन्तस्यदोहमशीमह्युत्तरामुत्तराꣳ
समाम् ॥ त्त्विषः संवृक्क्त्क्रत्वेदक्क्षस्यतेसुषुम्म्णस्यतेसुषुम्म्णा
ग्ग्निहुतः ॥ इन्द्रपीतस्यप्प्रजापतिभक्क्षितस्यमधुमतऽउपहूतऽ
उपहूतस्यभक्क्षयामि ॥ २८ ॥ [१०-३] ॥ इतिश्रीवाजसनेय-

सं. ६३

संहितायामष्टत्रिंशोऽध्यायः ॥ ३८॥ श्रीवेदपुरुषाय नमः ॥
अनुवाकसूत्रम् ॥ स्वाहाप्राणेभ्यःषड्, ग्रश्च सप्त, द्वौ त्रयो-
दश ॥ [अ. ३९ मं. १३ अनु. २] हरिःॐ ॥ स्वाहाप्प्राणे
भ्य्यः ॥ स्वाहाप्प्राणेभ्यःसाधिपतिकेभ्यः ॥ पृथिव्यैस्वाहा
ग्नयेस्वाहान्तरिक्क्षायस्वाहाव्वायवेस्वाहा ॥ दिवेस्वाहासूर्य्याय
स्वाहा ॥१॥ दिग्भ्यःस्वाहा। चन्द्रायस्वाहानक्क्षत्रेभ्यःस्वाहा
द्भ्यःस्वाहाव्वरुणायस्वाहा ॥ नाभ्यैस्वाहापूतायस्वाहा ॥२॥

वाचेस्वाहा। प्प्राणायस्वाहाप्प्राणायस्वाहा ॥ चक्क्षुषेस्वाहाच
क्क्षुषेस्वाहाश्श्रोत्रायस्वाहाश्श्रोत्रायस्वाहा ॥ ३ ॥ मनसुःका
मम् ॥ मनसुःकामुमाकूतिंव्वाचःसुत्त्यमशीय ॥ पशूनाᳯरूप
मन्नस्यरसोयशुःश्रीःश्श्रयताम्मयिस्वाहा ॥४॥ प्रजापतिःसम्भ्रि
यमाणः । सुम्म्राट्ट्सम्भृतोव्वैश्श्वदेवःसंᳬसुन्नोघुर्म्मःप्प्रवृक्क्तस्त्ते
जऽउद्यतऽआश्श्विनःपयस्यानीयमानेपौष्ष्णोव्विष्प्यन्दमाने
मारुतःक्क्लथन् ॥ मैत्रःशरसिसन्ताय्यमानेव्वायव्योहियमा

ब्भ्यामीशानम्मन्युनामहादेवमन्तःपर्शव्व्येनोग्ग्रन्देवंव्वनिष्ठु
नांव्वसिष्ठहनुःशिङ्गीनिकोश्याब्भ्याम् ॥ ८ ॥ उग्ग्रँल्लोहितेन ।
मित्रꣳसौव्व्रत्त्येनरुद्द्रन्दौर्व्व्रत्त्येनेन्द्रम्प्रक्क्रीडेनमरुतोबलेनसा
द्ध्यान्प्रमुदा ॥ भवस्यकण्ठ्यꣳरुद्द्रस्यान्तःपार्श्व्यम्महादेवस्यय
कृच्छर्व्वस्यव्वनिष्ठुःपशुपतेःपुरीतत् ॥ ९ ॥ लोमब्भ्यःस्वाहा ॥
लोमब्भ्यःस्वाहालोमब्भ्यःस्वाहात्त्वचेस्वाहात्त्वचेस्वाहालोहि

---

१ अन्तः पर्शव्येन । अत्र "समानपदे च" (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन सकारे प्राप्ते "वाजपतिर्वांसऽपृदिधिपुरन्तः पर्शव्येनान्तः पार्श्व्यमिति च" (शु.य.प्रा.३ अ.३८ सू.) इत्यनेन निषिध्यते । अन्तः पार्श्व्यम् इत्यत्र "परं तु रेफहकाराभ्यां" (शु.य.प्रा.४अ.१०१सू.) इत्यनेन शकारस्य द्वित्वम् ।

तायस्वाहालोहिंतायस्वाहामेदोभ्यःस्वाहामेदोभ्यःस्वाहा ॥ 

माᳫँसेभ्यःस्वाहामाᳫँसेभ्यःस्वाहास्नावभ्यःस्वाहास्नाव 

भ्यःस्वाहास्त्थभ्यःस्वाहास्त्थभ्यःस्वाहामज्जभ्यःस्वाहा

मज्जभ्यःस्वाहा ॥ रेतसेस्वाहापायवेस्वाहा ॥ १० ॥ आया

सायस्वाहा । प्प्रायासायस्वाहासंय्यासायस्वाहाव्वियासायस्वा

हाँद्यासायस्वाहा ॥ शुचेस्वाहाशोचतेस्वाहाशोचमानायस्वा 

हाशोकायस्वाहा ॥ ११ ॥ तपसेस्वाहा ॥ तपसेस्वाहातप्प्यं

१ प्रायासाय । प्र यास इति पदम् । अत्र प्रवणद्धृयासेषु ( शु. य. प्रा. ३ अ. १०५ सू. ) इत्यनेन प्रशब्दात्यासशब्दे परे प्रशब्दाकारस्य दीर्घः ।

तेस्वाहातप्प्यमानायस्वाहातप्प्तायस्वाहाघर्म्मायस्वाहा ॥
निष्कृत्त्यैस्वाहाप्प्रायश्चित्त्यैस्वाहाभेषजायस्वाहा ॥ १२ ॥
यमायस्वाहा ॥ यमायस्वाहान्तकायस्वाहामृत्त्यवेस्वाहा ॥
ब्रह्मणेस्वाहाब्रह्महत्त्यायैस्वाहाविश्वेब्भ्योदेवेब्भ्यःस्वाहाद्यावा
पृथिवीब्भ्याᳩस्वाहा ॥ १३ ॥ [ ७-२ ] इतिश्रीवाजसनेय-
संहितायामेकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ श्रीवेद-
पुरुषाय नमः॥ अनुवाकसूत्रम् ॥ ईशावास्यमष्टा, वन्धन्तमो

नव, द्वौ सप्तदश ॥ [अ. ४० मं. १७ अनु. २] हरिःॐ ॥

ईशाव्वास्यम् ॥ ईशाव्वास्यमिदᳬसर्व्वँय्यत्किञ्चजगत्त्याञ्जगत् ॥

तेनत्त्यक्क्तेनभुञ्जीथामागृधᳬकस्यस्विद्धनम् ॥ १ ॥ कुर्व्वन्नेव ॥

कुर्व्वन्नेवेहकर्म्माणिजिजीविषेच्छतᳬसमाः ॥ एवन्त्वयिना

न्न्यथेतोस्त्तिनकर्म्मलिप्प्यतेनरे ॥२॥ असुर्य्यानाम ॥ असुर्य्या

नामतेलोकाऽअन्धेनतमसावृताः ॥ ताँस्त्तेप्प्रेत्त्यापिगच्छन्न्ति

येकेचात्त्महनोजनाः ॥३॥ अनेजदेकम् ॥ अनेजदेकम्मनसो

जवीयोनैनद्देवाऽआप्नुवन्पूर्व्वमर्षत् ॥ तद्धावतोन्यानत्त्येतिति
ष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥ तदेजति ॥ तदेजतित
न्नैजतितद्दूरेतद्वन्तिके ॥ तदन्तरस्यसर्व्वस्यतदुसर्व्वस्यास्यबा
ह्यतः ॥ ५ ॥ यस्तु ॥ यस्तुसर्व्वाणिभूतान्यात्मन्नेवानुप
श्यति ॥ सर्व्वभूतेषुचात्मानन्ततोनविचिकित्सति ॥ ६ ॥
यस्मिन्त्सर्व्वाणि । भूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमो
हःकःशोकऽएकत्त्वमनुपश्यतः ॥ ७ ॥ सपर्य ॥ सपर्य्यं

शु. य. संहि. गाच्छुक्रमंकायमंव्रणमंस्नाविरꣳशुद्धमपांपविद्धम् ॥ कवि उ. वि.

॥१४४॥ र्म्मनीषीपंरिभूःस्वंयुम्भूर्य्यांथातत्थ्यतोर्त्थान्व्यदधाच्छाश्वती अ.

भ्यःसमाभ्यः ॥ ८ ॥ [ ८-१ ] अन्धन्तमः ॥ अन्धन्त ॥ ४० ॥

मःप्रविशन्तियेसंम्भूतिमुपासते ॥ ततोभूयइवतेतमोय

उसम्भूत्त्याꣳरताः ॥ ९ ॥ अन्यदेव ॥ अन्यदेवाहुःसंम्भ

वादन्यदाहुरसंम्भवात् ॥ इतिशुश्रुमधीराणाँय्येनस्तद्विचच ॥१४४॥

क्षिरे ॥ १० ॥ सम्भूतिञ्च । विनाशञ्चयस्तद्वेदोभयꣳसह ॥

विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्नुते ॥ ११ ॥ अन्धन्तमः ॥ अन्धन्तमःप्रविशन्तियेविद्यामुपासते ॥ ततोभूयऽइवतेतमोयऽउविद्यायाᳬरताः ॥ १२ ॥ अन्यदेव ॥ अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः ॥ इतिशुश्रुमधीराणांय्येनस्तद्विचचक्षिरे ॥ १३ ॥ विद्याञ्च ॥ विद्याञ्चाविद्याञ्चयस्तद्वेदोभयᳬसह ॥ अविद्ययामृत्युन्तीर्त्वाविद्ययामृतमश्नुते ॥ १४ ॥ वायुरनिलम् ॥ वायुरनिलममृ

८३७

तमथेदम्भस्स्मान्तꣳशरीरम् ॥ ॐ ३ ॥ क्रतोस्स्मर ॥ क्लिबे
स्स्मर ॥ कृतꣳस्स्मर ॥ १५ ॥ अग्ग्नेनय ॥ सुपथारायेऽअस्स्मा
न्विश्श्वानिदेववयुनानिविद्द्वान् ॥ युयोद्ध्यस्स्मज्जुहुराणमेनो
भूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १६ ॥ हिरण्मयेनपात्रेण ।
सत्यस्यापिहितम्मुखम् ॥ योसावादित्येपुरुषꣳसोसावहम् ॥
ॐ ३॥ खम्ब्रह्म॥१७॥ [९-२] [आदितो मन्त्रसंख्या १९७५] ॥ १४५ ।

इतिश्रीवाजसनेयसंहितायां चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

14-6-2002 समाप्त

श्रीवेदपुरुषार्पणमस्तु ॥ दशाध्याये समाख्याता अनुवाकास्तु संख्यया ॥ शतं दशानुवाकाश्च नवान्ये च मनीषिभिः ॥ १ ॥ सप्तषष्टिश्चितौ ज्ञेया सौत्रे द्वाविंशतिस्तथा ॥ अश्वे एकोनपञ्चाशत्पञ्चत्रिंशत्खिले स्मृताः ॥२॥ शुक्रियेषु तु विज्ञेया एकादश मनीषिभिः ॥ एकीकृत्य समाख्यातं त्रिशतं त्र्यधिकं मतम् ॥३॥

इति श्रीवाजसनेयसंहितायामनुवाकसूत्राध्यायः समाप्तः ॥

इयं श्रीशुक्लयजुर्वेदसंहिता जामनगरनिवासिनाऽऽचार्योपटङ्केन त्रिकमजीतनुजनुषाऽमृतलालशास्त्रिणा या० शिक्षा० का० प्रणीतयजुःप्रातिशाख्यानुसारेण च शके १८७२ चैत्रमासे शुक्लपक्षे प्रतिपदि रविवासरे वत्सरारम्भे संशोधिता "अमृतवर्षिण्या टिप्पण्या" च समलङ्कृता समाप्ता ॥

मं. ६४



14-1-2002-समाप्त

इति श्रीवाजसनेयसंहितोत्तरविंशतिः समाप्ता ।

